# मालविकाग्निमित्रम्

महाकवि-कालिदास-प्रणीतम्

( विजयाख्यया टीकाया वङ्गभाषानुवादान्वय-समालोचना-
प्रभृतिभिश्च समलङ्कृतम् )

श्रीमद् गुरुनाथविद्यानिधि-भट्टाचार्य्येण

काश्यपपदलाञ्छन—

श्रीयुक्त कालीपद काव्यव्याकरणतीर्थेन च

सम्पादितम्।

१३२७ वङ्गाब्द नूतनसंस्करणम्।

३० संख्यक-गोपीमोहनदत्त-वर्त्म स्थित-संस्कृतविद्यालयात्—
श्रीजानकीनाथ काव्यतीर्थेन प्रकाशितम्।

मूल्यम् १॥) सार्द्धरूप्यकम्।

# समालोचना ।

इदं हि नाम कविगुरोः कालिदासस्य लेखनीप्रसूतं नाटक-रत्नम् । अस्ति च यद्यपि कालिदासस्य कृतिरभिज्ञानशकुन्तलं युगान्तरोपस्थापकं नाट्यजगतां, तथापि "मालविकाग्निमित्र" नाम कवीनामपरेषां नाटकेभ्यो नापकृष्टमिति काव्यरसिकाः । तथाचात्र नाटके अङ्काः पञ्च, शृङ्गाररसोऽङ्गी, विदिशापुरनाथ-स्त्वग्निमित्रो नाम राजा नायकः, मालवनाथस्य च माधवसेनस्य भगिनी मालविका नायिका, धारिणी नाम राजमहिषी, इरावती चान्यतरा प्रतिनायिका, विदूषकाद्याश्च शृङ्गारे सहायाः, अन्ये च रसा अङ्गानि । इदञ्च नाटकं वृत्तान्तमिममेव समादाय लिखितं कविना । तथाहि—मालवेश्वरो माधवसेनो नाम राजानमग्नि-मित्रं भगिन्या वरं संकल्प्य तत्परिणयनिष्पादनकामः समा-गच्छन् तत्पितृव्यपुत्रेण यज्ञसेनेनान्तरा प्रतिबध्य निगृह्य च कारागारे रुद्धः । अथ तथा विपत्पातसम्भ्रान्तेन तस्यामात्येन सुमतिना रहसि तद्भगिनीं मालविकामपवाह्य स्वभगिन्या कौशिक्या साकं विदिशाप्रस्थितं सार्थवाहसार्थमवलम्ब्य अग्नि-मित्राय राज्ञे तां प्रतिपादयितुकामः प्रस्थितवान् । अथ काननपथमारुह्य निशीथे तैः साकं प्रसुप्तो दस्युभिराक्रम्य सार्थ-वाहसैन्यानि विजित्य मालविकां रक्षितुकामो युध्यमानः सुमतिर्व्यापादितः । तन्मरणे च संग्राममोहात् कौशिकीं मृतां निश्चित्य मालविकामर्थसमूहांश्च दस्यवः समपहृत्य तत्-श्यालकाय अग्निमित्रदुर्गपालाय वीरसेनाय तां प्रदत्त-वन्तः समुपहारम् । वीरसेनोऽपि तां बालिकां शिल्पादिकर्म-

चतुरामवेत्य स्वभगिन्यै धारिण्यै अग्निमित्रमहिष्यै उपहारं प्रेषयत्। धारिणी च तां शिल्पादिकलाकुशलां गणदासस्य नाट्याचार्य्यस्य सविधे छलिकनामनाटकाभिनयशिक्षायै न्ययोजयत्। अत्रान्तरे कौशिकी दस्यूनामपगमात् परं विगत मोहा प्राप्तचेतना विपन्नेन भ्रात्रा अपहृतया च मालविकया परिहीना किंकर्त्तव्यविमूढ़ा जाता। तथाभूतमुपप्लवमनुभूय संसारात् परं वैराग्यमासाद्य क्रमेण दैवयोगात् विदिशानगरीं प्राप्य प्रव्रज्यां जग्राह, गृहीतप्रव्रज्या च सा भवितव्यतानियोगात् धारिणीमैत्रं प्राप्य तस्याः पीठमर्द्दितामुपलेभे। तत्र च चिर-परिचितामपि मालविकां तथाभूतां वीक्ष्य अभिज्ञायापि कारणान्तरवशात् राज्ञीसमीपे माधवसेनस्वसेयमिति न प्रका-शयामास। एकदा च चित्रपटे राज्ञीपरिचारिकामध्ये लिखित प्रतिमूर्त्तिं मालविकां विलोक्य नरपतिः तत्सौन्दर्य्यदर्शनेन अतीवचमत्कारितामापद्य च कस्या इयं प्रतिमूर्त्तिरिति धारिणीं पप्रच्छ। धारिण्या च दृष्ट्या तां निगूहितुकामया कथान्तरप्रसङ्गिराहृता। अतिसौन्दर्य्यवतीयं कदाचित् राज्ञा दृश्येत, तदा अनुरक्तीरतास्यामिति आशङ्क्य राज्ञ्या निगूह्य-मानां तां राजा सनिर्बन्धं पुनःपुनर्देवीं पप्रच्छ—"केयं केय"मिति। बालस्वभावा च तत्कुमारी वसुलक्ष्मीः महिष्या निगूह्यमानामपि मालविकां—"मालविके"त्यभिदधे। इति-क्रमेण नाटकीयवृत्तस्य प्रक्रमः।

इदं च नाटकं रत्नावल्यां वर्णितं सागरिकया सह वत्स-राजसमागमवृत्तमनुकरोति, तस्य नाटकस्य धनप्रत्याशया

कविना श्रीहर्षकृततया प्रख्यातत्वेऽपि धावककृतत्वं, धावकस्य च एतस्मात् कवेः पूर्वकालीनत्वं सुव्यक्तमस्यैव कवेरस्मादेव नाटकात् प्रारम्भे, अतस्तदनुकार एवात्र सुव्यक्तः। तथाच पारिपार्श्विकः—"मा तावत् प्रथितयशसां धावकसौमिल्लक-कविरत्नादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ किं कृतो बहुमानः?" एतेन धावककवेरवसाने एव कालिदासस्य जगति प्रतिष्ठा समभ्युपगम्यते, वर्त्तमानकवे-रित्यत्र वर्त्तमानपदेन च धावकस्य तत्कालात् पूर्व्ववर्त्तित्वं प्रतीयते, तेनैव नव्यकवेरतीतप्रधानकवीनां प्रबन्धं संस्मृत्य निजकाव्यस्यापकर्षाशङ्का। कालिदासो हि महाकविप्रवरः बहूनि काव्यानि विनिर्म्ममे; तथाच—रघुवंशकुमारसम्भवं मेघदूतञ्चेति श्रव्यकाव्यानि स्मृतिचन्द्रिकाभिध उत्कलदेश-प्रचलितो वेदोक्तकर्म्मप्रतिपादकग्रन्थः ज्योतिर्विदाभरण-नामकं कालज्ञानशास्त्रम्, ततो मालविकाग्निमित्रविक्रमो-र्वशीयाभिज्ञानशकुन्तलानि दृश्यकाव्यानि त्रीणि, एतच्च तत्-कृतज्योतिर्व्विदाभरणग्रन्थे कथञ्चित् समुट्टङ्कितमस्ति। यथा—"मत्तोऽधुना कृतिरियं सति मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे समासीत्।" "धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघट-ख[र्]परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥" "यद्राजधान्युज्जयिनी महा-पुरी सदा महाकालमहेशयोगिनी। शङ्क्वादिपण्डितवराः कवयस्त्वनेके ज्योतिर्व्विदः समभवंश्च वराहपूर्वाः॥" "श्रीविक्रमस्य बुधसंसदि भूरिवुद्धैस्तैरप्यहं नयसखः किल कालिदासः।

काव्यत्रयं समतिक्कद्रघुवंशपूर्व्वं जातं यतो ननु कियच्छ्रुति-कर्म्मवादः ॥" "ज्योतिर्व्विदाभरणकालविधानशास्त्रं श्रीकालिदास-कवितो हि ततो बभूव ।" "वर्षे वै वसुषट्कशून्यगुणकैर्याते कलौ संमिते मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः ॥" एतेन ज्योतिर्विदाभरणकालात् (३०६८ कलेरब्दगणनात्) पूर्वं रघुवंशादिकानि कतिचित् पुस्तकानि कालिदासः प्रणि-नायेति धारणा। मालविकाग्निमित्रादीनि च दृश्यकाव्यानि ततःपरं कालिदासेन रचितानीति न तत्र तेषां निर्द्देशः। तत्तत्तत्वञ्च तत्तद्ग्रन्थेषु सुव्यक्तं प्रायः सौसादृश्येन च रचना-वलीनां न जायते केषाञ्चिदत्र सन्देहः। केचित्तु एवमपि जल्पन्ति यत्—य एव कालिदासः कर्त्ता महाकाव्यखण्डकाव्यानां स एव न नाटकानां, किन्तु एकः कालिदासो नाटकनिर्म्माता अपरश्च कालिदासः खण्डकाव्यमहाकाव्यप्रभृतीनाम्, तन्नास्मभ्यं रोचते। वयन्त्वेवं विद्मः—यदेक एव कालिदासः श्रव्याणि दृश्यानि च निर्म्मितवान् इति तत्र प्रमाणमेकं दृश्यश्रव्येषु कवित्वस्य परं सौसादृश्यम्, परञ्च विक्रमादित्यसभाया-मवस्थितिश्चेति साधारणेन प्रतिपाद्यं गूढ़ं विशेषेण समालोच्यं समालोचनाबद्धहृदयैः सहृदयैः। प्राचीनैतिह्यसमालम्बनेन अपि तथा एव वयं प्रतिपादयितुमग्रेसरा भवामः।

कविगुरोः कालिदासस्य रचनावली प्रतिपदमेव प्रायः प्रसादगुणपरिष्वङ्गेण माधुर्य्यमयतामवलम्बते, अपिच साभि-प्रायमेव काव्यं प्रकृष्टतां दधातीति वादिनामपि वर्त्तते तत्र तत्र समासन्निहितुः, तथाच प्रथमत एव प्रविश्य सूत्रधारः—

"एकैश्वर्य्ये स्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्तादयतीनाम् । अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्विभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥" अत्र नाटकप्रतिपाद्यं विषयं प्रारम्भ एव कविश्छलेन कथञ्चित् प्रतिपादयितुकामस्तथाभूतं नमस्कारसूक्तं प्रणिनाय, तथाच सतीष्वपि राजान्तःपुरकुलकामिनीषु बहुगुणासु नृपतेरग्निमित्रस्य अज्ञातकुलशीलायां मालविकायां समासक्तिः, अपि च मालविकायां नितान्तमनुरक्तस्यापि अन्तःपुरमहिषीषु परं दाक्षिण्यमिदं साधारणेष्वसम्भवम् । तथाहि अणुपरिमाणमस्माकं मनः तद्यद्येकत्र समासक्तं स्यात् तदा कथमन्यत्र वर्त्ततां स्नेहः, स्नेहश्च चित्तवृत्तिरुत्कृष्टतमेति मन एव तत्र प्रधानतमं कारणं, तच्च संसक्तमन्यत्र, तच्च असम्भवमपि अग्निमित्रे सम्भवीति "कान्तासंमिश्रदेह" इत्यादिना वर्ण्यते । "अष्टाभिर्यस्य" इत्यादिना च राजराजेश्वरस्यापि अग्निमित्रस्य नितान्तनिरहङ्कारता सूचिता इति । तथाच मालविकायां तस्य नितान्तविनयप्रदर्शनमेव तत्फलम्, अन्यथा बलेनापि शक्यते ग्रहीतुं मालविका, या हीनातिहीनेव निजाधीनतायां वर्त्तमाना देव्याः परिग्रह इति विख्यायते, अपिच अन्तःपुरमहिषीषु तस्य परं भीतियुक्तभावः यत् "मा जानान्तु मां मालविकानुरक्तं महिष्य" इति एवम् । "सन्मार्गालोकनाय" इत्यादिना च भाविमालविकापरिचयेन विगतमोहत्वमेव सर्व्वेषां सूचयति, तथाच ईशः मालविकाया गुप्तावस्थामपवार्य्य

स्ववृत्तप्रकाशेन मालविकाया दुःखरूपां तामसीं वृत्तिमपनयतु, अग्निमित्रलाभेन च परितुष्यतु बाला, स च मालविकायां परं प्रकाशमधिगच्छत्विति। इत्येवमेव प्रायशो वृत्तजातं भाषाप्रकर्षञ्च सन्निवेश्य महाकविः कालिदासः सहृदयहृदयानि चमत्कारयति। कालिदासः कल्पनाप्रवीणो महाकवीनामूर्द्धतनं स्थानमधिचकारेति सर्व्वेषामेव यथार्थं सुविदितम्, अस्ति च "काव्यचिन्तायां"मेतद् विशेषेण समालोचितम्. अवगन्तव्यं सूक्ष्मधियापि सहृदयैः।

मालविकाग्निमित्रं नाम नाटकं मन्ये प्रथमतः कालिदासेन निरमायि नाटकानां, तथाहि अत्रैव प्रारम्भे पारि— "मा तावत् प्रथितयशसां धावकसौमिल्लकविरत्नादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ किं कृतो बहुमानः?" सूत्र—"अये विवेकविश्रान्तमभिहितं, पश्य—पुराणमित्येव न साधु सर्व्वं न चापि काव्यं नवमित्यवद्यम्। सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः" इति, तदानीं काव्यजगति आसीत् कविधावकादीनां विशेषेण प्रतिष्ठा, प्रतिष्ठितकवित्वप्रतिभानाञ्च धावकादीनां प्रबन्धेष्वेव तदानीमासीत् काव्यरसिकानां बहुमानः, तेनैव नव्यकाव्यकारस्य कालिदासस्य स्वगुणप्रख्यापनेन लोकानुग्रह स्वीकर्त्तमेष प्रक्रमः। यतस्तावदश्रुतकाव्यात्कर्षाः कथं नाम प्रसिद्धकवीनां नाटकानुरक्तिमतिक्रम्य नवीनकवेः काव्येषु परं रज्यन्तः परितृप्यन्तु। अतो यत् पुराणापेक्षया अस्त्यत्र तथा गुणलेशाधिक्यं यथा सन्तः परितृप्तिमागमिष्यन्ति पुराणमुपेक्ष्यापि

तदीयनाटकेष्वनुरक्तिं लप्स्यन्ते इत्येवं प्रतिपादनेन पारिषदानुन्मुखीकृत्य स्वकृतौ सविनयमहङ्कारमारोपितवान् कविः कालिदासः, एवञ्च रीतिर्ज्जगतां प्रायः प्रवर्त्तते यत्—पुराणं प्रकृष्टम् अप्रकृष्टं वा विशेषेण विवेकपरिहीना एव पुराणानुरक्तिम् प्रदर्शयन्ति, नव्येषु च सहसैव वीतस्पृहतामवलम्बन्ते। तथाचास्ति समाजेष्विदानीमपि प्रथा सामाजिकानां; पुराणरीतिरसती वा सती वा कथञ्चन परिहातुमशक्या शास्त्रविधिमपि अतिक्रम्य प्रवर्त्तते, तथैव लोकानां तदानीम् अपि पुराणवस्तुषु समधिकामनुरक्तिमवेक्ष्य भासादिकविस्तेषु विवेकसाहाय्येन गुणप्रकर्षपर्य्यालोचनेन वर्त्ततां सामाजिकानामनुरक्तिर्नाटकेष्विति प्रक्रमस्तथाभूतः कालिदासस्य, अपिच अप्रतिष्ठितैरेव प्रतिष्ठापकविषयाणां गुणवर्णनं स्वाभाविकं तत् स्वभावप्रणोदित एव कविः स्वकृतेरन्यकाव्यतः परं समुत्कर्षं छलेन पोषयति, अन्यथा प्रतिष्ठितानां कथमस्तु स्वकृतौ सगुणत्वव्यवस्थापनम्, अतएव क्रमेण प्रतिष्ठितस्य कालिदासस्य विक्रमोर्वशीये शाकुन्तले वा नास्ति तथाभूता व्यवस्था—यथा स्वकाव्यस्य अपरकविकृतिभ्यः काव्येभ्यः समुत्कर्षः प्रतिपद्यते, प्रतिपादितसमुत्कर्षास्च यथा काव्येषु नीयन्ते।

मालविकाग्निमित्रं नाम नाटकं विरचय्यैव कविः कालिदासः प्रख्यातनामा नाटकप्रणयनेषु यथा कालिदासमेव तदानीं जनाः प्रधानकविं संस्मरन्तिस्म, विस्मरन्तिस्म च भाससौमिल्लकविरत्नादीन् विशेषेणापि इति प्रतिष्ठितान्। मालविकाग्निमित्रनाटकप्रणयेनैव कालिदासः प्रथमतः



स्व

काव्यजगतो विपुलां नवीनतामुपपादयामास परमुच्छ्वासयामास च सहृदयानां हृदयं काव्यरसनिषेकेण। प्रतिपदं माधुर्य्यसम्वलिता सरलता, प्रतिपदञ्च भावमाधुर्य्यं, प्रतिपदञ्च घटनाया वैचित्र्यं, प्रेमरसनिषिक्तहृदययोर्मिथो नितान्तानुरागवतोः पात्रयोः सुसन्निवेशेन परं स्वच्छा प्रणयपदवी समुद्दीप्ता, यत्पथानुसरणेन समुपतिष्ठन्ते कुतश्चित् स्वर्गधामनि जीवाः। वृत्तवैचित्र्यसन्निवेशनेन च जायते सत्यतासम्भावना वृत्तेषु, एवञ्च दक्षिणनायकस्य दाक्षिण्यं, विदूषकादेः शृङ्गाररससहायता, अनुरक्तस्यापि नायकस्य कर्त्तव्यप्रसक्तिः इत्येतानि सुस्पष्टं प्रतिपादितानि। तथाच नायिकायां मालविकायां परामनुरक्तिमधिगम्य कुपिताया इरावत्याः प्रसादनाय तस्याश्चरणाराधनं विदूषकस्य च मालविकाप्रापणाय सर्पदंशच्छलाभिनयः इत्यादिकं सुव्यक्तमेव रचनायाम्।

रचनायां कालिदासः प्रतिपाद्यवस्तूनां सरलभावेन यथाप्रतिपादनमभिशक्नुते प्रायो न तथा शक्नुवन्त्येव अन्ये कवयितारः प्रधानतमाः, तथाच गणदासो यदा वकुलावलिकामुखेन राज्ञा जिज्ञासितः मालविकायाः शिक्षानैपुण्यं कथयति तदानीं "यद्यत् प्रयोगविषये भाविकमुपदिश्यते मया तस्यै। तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला" अनया कवितया यथा प्रतिपद्यते मालविकायाः शिक्षणीयविषयेषु चातुर्य्यं, न तथा मन्ये कविताशतकेनाप्यन्यस्य कवेः सम्भवम्। तथाचास्ति उत्तररामचरितेऽपि कुशलवयोः शिक्षानैपुण्यमभिलिप्तं, किन्तु तत्र कविनं तथा शशाक प्रतिपाद्यमभि-

प्रकाशयितुम्। तथाच "वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जड़े, न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा। भवति च तयोर्भूयान् भेदः फलं प्रति तद्यथा प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः" इत्यादि प्रबन्धक्रमेण यथा कुशलवयोः शिक्षा-नैपुण्यं प्रतिभासते, ततः शतगुणाधिका मधुरता वा प्रतिपाद्य-वस्तुनः समञ्जसता वा प्रतीयते कालिदासस्य कवितायामस्याम्। तथाच श्रूयते परिदृश्यते च—शिक्षकः बहुगुणानवलम्बते शिक्ष-णीयस्य ततः स्वल्पगुण इति, अन्यथा कथं शिक्षणीयः शिक्षकात्ते शिक्षां गृह्णातु, कथं वा अधिगतविषयस्य शिक्षा नाम, अतोऽत्र-गणदासस्य प्रतिपाद्यं यत् मत्तोऽप्यधिकतरं नैपुण्यमवलम्बते बाला, तेन च तस्याः समधिकः समुत्कर्षः सम्पद्यते। भावमिमं परिहाय यदि कविः सरलभावेन "मत्तोऽप्यधिकतरं सा नैपुण्य-मवलम्बते" इति प्रयोक्ष्यते, तदा न तथा प्रतिपाद्यवस्तुनः प्रतिपत्तिः सुगभीरा स्यात्, अतः छलेन प्रतिपादयन् कविः प्रतिपाद्यकाम्यवस्तूनि स्वाभाविकेऽपि विषये कथञ्चिदसाधा-रण्यमुपार्ज्जयन् स्मरणीयवचनो भवति इति कविप्रकर्षः श्रुति-मात्रेण च तत्तत् कवितानामसामान्यः समुद्भवति स्वर्गीयः प्रमोदः सहृदयहृदयेषु, अपि च तत्रैव "पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः, जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य" इदञ्च "पदं हि सर्वत्र गुणैर्निधीयते" इतिस्थलीयम्, 'वितरति गुरुः प्राज्ञे विद्या'मित्यादिश्लोकानुकारि च। अत्रापि माधुर्य्यसम्बलिता रचना इति नास्ति वचनावसरः। चत्रियो-चितगूढ़वीर्य्यप्रकाशस्य अग्निमित्रस्य वैदर्भसन्निधौ लिपि-

प्रेषणेन सुव्यक्तः। तथाच अमात्यः—इदमिदानीमनेन प्रतिलिखितं, "पूज्येनाहमादिष्टः पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसम्बन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीये नाम्नः:पालेनावस्कन्द्य गृहीतः, स त्वया मदपेक्षया सकलत्र-सोदर्य्यौ मोचयितव्य"इति, इत्यादिस्थलेषु गूढ़वीर्य्यप्रकाशः सुव्यक्तः। इदञ्च शृङ्गाररसमयमपि नीतिपर्य्यालोचनपराङ्मुखतां नालम्बते नाटकरत्न, स्थानेषु च नीतिपर्य्यालोचनया परमुत्कर्षं दधाति नाटकमिदं समाजोपदेशेषु, तथाच—"अचिराधिष्ठितराज्यं शत्रुप्रकृतिष्वरूढ़मूलत्वात्, न च संरोपणशिथिलस्तरुरिव सुकरः समुद्धर्त्तुम्" अनेन शत्रुपराजयकामुकाः शिष्टा भवन्ति यथा अकाले शत्रुमभियाय न विनाशं लभन्त, यतः शत्रुर्यदि प्रकृतिषु स्नेहबीजं सुव्यवस्थं स्थापयितुं शक्नोति, तच्च बीजं काले प्रकाण्डकाण्डादिसम्बलितं सत् संमर्द्दक्षमतामवलम्बते, तदा कथं तत्प्रतिकूलतामाचर्य्य पराजेतुं शक्यं स्यात्। चिराय राज्यमधिशयानस्य च राज्ञः सुव्यवस्थितनीतेः प्रजानुरागः सुप्रकट एव, तेन च पराजयोऽसम्भवीति सहजभावः। यमेव विषयं लोका बहुकालमुपस्तुवन्ति, यच्च बहुकालमात्मीयतया संमन्यन्ते तत्रैव जायते लोकानामनुरागातिरेकः तत् परिहातुं कदापि नेच्छन्ति, परं तत् परिरक्षार्थं स्वल्पं स्वार्थमपि परिवर्ज्जयितुं वाञ्छन्ति, अतएव प्रगाढ़रूढ़ानुरागाः प्रजा यदि राजपक्षमवलम्बमाना युध्यन्ते, कौशलेन वा स्वराज्यरक्षार्थं यतन्ते, तत् कथमिव राजा पराजेयः स्यात्, परं पराजयेऽपि प्रजाविद्रोहे महानिष्टं सम्भाव्येत, अतोऽकालाभि-

यानप्रतिनिवृत्तये राजप्रवरान् अमात्यप्रवरान् वा समुद्दिश्य अयमुपदेशः कालिदासस्य प्रक्रान्तप्रबन्धानभिक्रमेण काव्यमहत्त्वमुद्भासयति। तनुते च सार्थकमस्य महाजनवाक्यस्य "काव्येषु माघः कविकालिदास" इति समञ्जसता च स्फुटा तत्र तत्र। ततश्च कविः कुतश्चिदुपाध्यायमण्डलीमनुशासितुकामः स्वहृदयवाणीं प्रयुङ्क्ते—"शिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता। यस्योभयं साधु स शिक्षकाणां धुरिप्रतिष्ठापयितव्य एव" तथाच ये पण्डिताः केवलमात्मसंस्थां विद्यामुपलभन्ते, ये च नार्हन्ति शिष्ये संक्रमयितुं विद्याधारां, तेषामध्ययनं शिक्षा च नैरर्थक्यमुपालभते, ये च परं पण्डिताः शिष्यसंक्रामितविद्याप्रकर्षाश्च ते सुतरां मूर्त्तिमतीव सम्मुखमुपालभा वाग्देवता स्तूयते सर्व्वैःस्ते एव समाजेषु प्रसिध्यन्ति, ते चात्यर्थयशःपारङ्गमाः परलोके च परं प्रमोदमुत्कर्षञ्चानुभवन्तो विश्राम्यन्ति, तदनुभूयतां तादृशी भावपरम्परा यथा तथाविधभावविशुद्धानां निखिलाः सुखफलाः विकाशन्ते, अन्ये च तत् समानज्ञानराशिविशुद्धा जगति ख्यातिमुपार्ज्जयन्तः समाजोत्कर्षं साधयिष्यन्ति। अतः प्रकामं शिक्षा कर्त्तव्या, ततश्च यथा सा विद्या शिष्ये संक्रमिता स्यात् तथा यतितव्यमित्येवं सूक्ष्मसमाजशिक्षाविधिसमुद्देशो कविः प्रत्येकमेव विषयेषु भिन्नसम्प्रदायानां शिक्षासूत्रमुपकल्प्य शयनासनभोजनेषु सर्वत्रैव काञ्चिदमानुषिकतां प्रत्याययति, अभिष्टूयते च परमभीष्टदेवतेव साक्षात् काव्यरसिकैर्ये जीवने मरणे च काव्यकलां मुक्तिदात्रीं मन्यन्ते।

कालिदासः खलु स्वाधीनचेता विशेषेण समवर्त्तत, अस्ति तत्र प्रमाणं बहुलमैतिह्यं, तत्र लेखेनापि तथा वयं प्रतीमः। तथाच अस्यैव नाटकस्य प्रथमाङ्के "लब्धास्पदोऽस्मीति विवादभीरोस्तितिक्षमाणस्य परेण निन्दाम्। यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजो वदन्ति॥" अनेन प्रतीयते यत् कालिदासाय प्राधान्यमरोचत अन्येन तिरस्कारं विषमिव दूरे परिहर्त्तुमुत्सुकोभवति येन केनापि परेषां प्रभावं ह्रस्वीकर्त्तुं प्रयतते, अस्ति चात्र युक्तिवैचित्र्य ये यथा हृदयवृत्तिमवलम्बन्ते, ये च यत्श्रेणीयतामादधते, तेषां लिखितेषु तथैव प्रकाशन्ते भावमवश्यवर्णनीयविषयानुरोधेन स्वयमनालम्बितमपि भावं प्रकाशयन्ति कवयः, किन्तु प्रसङ्गतो यद्यप्रासङ्गिकस्य विषयस्यावतरः स्यात् स तु हृदयवृत्तिमेव कवेरपेक्षेत तेनैव समनुमातुं शक्या स्यात् कवीनां हृदयवृत्तिः। तथाविधामेव समुन्नतां तेजस्विनीञ्च हृदयवृत्तिं दधानो गणदासमुखेन कविः कालिदासः स्वाभिलषितं व्यञ्जयामास। तथाच केवलमात्मजीविकासमुपार्ज्जनाय शौवनीं वृत्तिमवलम्बनमापद्यमानमर्य्यादापरिच्युतस्य नितान्तमेव हीनं जीवनं जुगुप्सामयं संसारः प्रमोदानुभवपरिहीनञ्च हृदयं सुतरां गम्भीरान्धकारे स्थानं स्थापयते विलुप्यते च सम्मानरेखा, तमेवार्थमुद्दिश्य कविः सातिशयहीनचरित्राननुशास्ति— "मा तावदेकान्तं जीविकामेव परमपुरुषार्थमभिमन्य कुलं वा मानं वा मर्य्यादां वा परिहृत्य हीनतामवलम्बस्व" इति।

दृश्यकाव्यं हि सदुपदेशविपणिका यद्विषयकसदुपदेशः

सम्प्रार्थयते, स एव दृश्यकाव्ये प्रसङ्गक्रमेण निबध्यमानः सहृदयहृदयानि चमत्कारयति। तथाच सूत्रधारप्रयुक्तिं प्रथमाङ्के—"अये विवेकविश्रान्तमभिहितं—"पुराणमित्येव न साधु सर्व्वं न चापि काव्यं नवमित्यवद्यम्। सन्तः परीक्ष्यान्यतरद्भजन्ते मूढ़ः परप्रत्ययनेयबुद्धिः॥" अत्रैवमुपदेशः काव्यरसिकान् प्रबोधयति, तथाहि नूतनत्वपुराणत्वमात्रपर्य्यवेक्षणपरा भूत्वा मा तावदपकर्षम् उत्कर्षञ्च निर्द्धारयन्तु, वस्तुतो गुणवत्तां दोषवत्ताञ्च समादाय विवेच्यतामुत्कर्षं अपकर्षञ्च, ऐकाग्र्यमवलम्ब्य पक्षपातदोषदूषिता अपकृष्यन्ते न तान् सर्व्वे प्रशंसन्ते निरपेक्षाश्च शत्रुभिरपि न्यायपरायणतया स्तूयन्ते, समालम्बितनिरपेक्षभावाश्च परत्रापि गुणगरिम्णा प्रशस्यन्ते, एवमुपदेशविशुद्धान्तरात्मानो ये भवन्ति त एव प्रकृतमुत्कृष्टाः त एव सुतरां संसारे सार्थमयो साक्षाद्देवता इव समुत्कर्षभागिनो भवन्ति तांश्च परिपूजयन्ति साधारणा एव देवभावेन, संसारेऽपि समवस्थाय तपोवनविशुद्धवृत्तिभिः संस्तूयमानाः किमिति ते नार्च्चयमाना भवन्तु।

ततश्च द्वितीयाङ्के राजा—(जनान्तिकं) "वयस्य! नेपथ्यगृहगतायाश्चक्षुर्द्दर्शनसमुत्सुकं तस्याः संहर्त्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम्॥" अनेन राज्ञः सातिशयाग्रहवत्त्वं प्रतिपद्यते मालविकां प्रति, वस्तुतो यथा एव हृदयवृत्तिः सर्वजनीना तादृशे समये सञ्जायते तथैव निबद्धं व्यवहारपारङ्गमेन कविकुलविभाकरेण कालिदासेन नाप्ययं भावो दुर्ब्बोधतामाश्रयते यथा श्रुतिमात्रेण अर्थाधिगमाभावः

सम्पद्यते, किन्तु सहज एवायं भावः सन्निबध्यमानः सर्व्वेषा-मेव हृदयं तथाभावेन संसञ्जयति प्रेमाणञ्च राज्ञः माल-विकायामेकपद एव पारिषदान् विज्ञापयते तादृशे समये स्वाभाविकतामयमेव भावः समालम्बते। अतः स्वाभाविक-भावविवेककुशलः श्रीमान् विजयते काव्यकलासु कालिदासः इति किमस्तु विशेषेण विज्ञाप्यम्।

अभिलषितं हि किञ्चन वस्तु यवनिकादिभिरावृतं दृश्य-भावपरिच्युतं दर्शनलोभविपर्य्यासितं हृदयं यवनिको-न्मोचने हृदयं प्रवर्त्तयतीति परिदृष्टं बहुधा। तदेव कवि-रनुभवमात्राधीनो यथाकालं यथास्थानञ्च सन्नियोज्य व्यव-हारनिबन्धसौन्दर्य्यं विशेषेण परितनोति हृदयञ्च समाहरति स्वाभाविककाव्यानुरक्तानां जीवानां प्रकर्षञ्च समालम्बते पर्य्यालोचनविशेषगौरवेण काव्यसाम्राज्ये। अपिच द्वितीयाङ्के मालविका—(गायति)। "दुल्लहोपित्त तस्सिं भव हिअअ निरासम्" इत्यादिना छलेन मालविकामुखेन प्रेमविकाशम् अभिनिबध्य प्रणयस्य किञ्चिदुन्मेषमभिरचितवान्, तेन च चतुष्पादेन वैराग्यौत्सुक्यसङ्कल्पात्मसमर्पणरूपाश्चतस्रोऽवस्था दर्शिताः मालविकायाः। छलेन तथा प्रतिपाद्य मालविकायाः सलज्जभावं नियन्त्रितवान्, तेन तेन च मालविकायाः भाव-सौन्दर्य्यमभिव्यज्यते प्रणयस्य च गभीरता सातिशयमुट्टङ्किता भवति, छलेन प्रतिपाद्यमानो हि प्रणयमहिमा गाढमात्मनो-मधुरतामभिव्यञ्जयति सहृदयहृदयञ्च प्रकृष्टतया समु-ल्लासयति। तच्च तच्च स्फुटतरामेव समालम्बतेऽस्मिन्

नाटकविषये। अपिच अस्ति किञ्चिदसाधारण्यमत्र नायिकाप्रणयने, तथाहि प्रथमतो मालविका लावण्यवती त्रिलोकविजयसम्पादिका लावण्येन, तथाहि प्रमाणमस्यैव कवेर्निबन्धः "चित्रगतायमस्या"मित्यादि,"अहो सर्व्वास्ववस्थासु अनवद्यता रूपस्य,तथाहि—"दीर्घाक्षं शरदिन्दुकान्तिवदनं बाहू नतावंसयो"रित्यादि। अपिच सकलान्तःपुरललनाकुलनायकस्य अग्निमित्रस्य मालविकायामनुरागातिशय एव कथं साधारण्यमस्तु नृपतेरग्निमित्रस्य तथाभूतस्य तथा समासक्तिरिति, ततोऽपि तस्या मालविकाया लावण्यानुरूपिणी चरित्रपद्धतिः शिक्षा च कलाभिज्ञता च तस्या लावण्यं गुणशतकैः संवर्द्धयति समुज्वलयति च विशेषेण तत् तत् गीतकला वा नृत्यकला वा मानसमपहरत्येव रसिकानां तेनैव नैतदसम्भवं यदेकान्तमनुरक्तस्यापि अवरोधललनासु अग्निमित्रस्य हृदयं मालविका विशेषेण समधिचकारेति। प्रथमतो लावण्यमोहस्ततश्च गुणमोह इत्येवं प्रथा जगताम्,तथाच प्रथमतो न ज्ञातुमर्हन्ति केचिद् गुणगरिमाणं प्रथमतो दर्शनमात्रमेव सञ्जायते सुरूपस्य कुरूपस्य वा वस्तुनः तच्च यदि दर्शनमात्रेनैव जायते तत्र निःस्पृहता तत् कथमिव तस्य गुणजिज्ञासायामुन्मुखता स्यात्, मानसस्य गुणजिज्ञासाव्यतिरेकेण च अज्ञातगुणानां कथमिव तत्रानुरक्तिः सम्पद्येत ? किन्तु यत्र प्रथमत एव लावण्यमोहः तस्य गुणजिज्ञासया ज्ञातगुणगरिम्नां सुतरां तत्रानुरक्तिः सातिशया सम्भवितेति लावण्यमुग्धानां गुणमुग्धानाञ्च स्नेहः सुचिरं दृढ़तामेव समालम्बमानः इह वा परत्र वा काञ्चिदपूर्व्वता-

मुपादधातीति लावण्यमयीं मनोहरकलानिपुणाञ्च मालविकामपि मित्रसविधे कविरुपस्थापयामास। सफलञ्च जातं कवेरभिलषितं, लावण्येन गुणेन च मुह्यमानो राजा न जानाति मालविकाया अन्यां, सुधामयीं तामिव जीवनसमालम्बनं मन्यते तस्या अदर्शनञ्च महाप्रलयसम्पातं समुत्प्रेक्षते, सुखेषु वा दुःखेषु वा मालविकामेव सुखहेतुभूतां मन्यते, तस्याश्च मलिनमाननं चन्द्रस्य ग्रहोपरागमिव गणयति इत्येवं युज्यत एव तथाभूतां मालविकां प्रति राज्ञः।

अपिच अत्र विदूषकस्य यथा शृङ्गाररस-सहायता कविना निबद्धा, न तथा प्रायः परिदृश्यते सुश्लिष्टा, तथाच राज्ञः स्वयमुक्तिः—"अयमपरः कार्य्यान्तरसचिवोऽस्माकमुपस्थितः" इति, अपिच "साधु वयस्य! निपुणमुपक्रान्तमिदानीं दुरधिगमसिद्धावप्यास्मिन्नारम्भे वयं त्वाशंसामहे" इत्यादि, तथाच चतुरतया विदूषक एव चिन्तापरिष्कृतमानसः सम्यगुपायं निर्णीय मालविकया राजसमागमं साधयामास, तयोः परस्परसन्दर्शनेन जायते प्रणयातिरेकः, स च जीवनकालं स्थास्यतीति परतश्च इरावतीप्रतिरुद्धां मालविकां सर्पदंशमभिनीय परिमोचयामास कारागृहात् इत्येवं बहुस्थलेषु एव प्रेमसमागमसंसाधनकुशलतामालम्बमानो विदूषकः स्वकर्त्तव्यमत्युच्चं पालयामासेति कालिदासः परिदर्शयामास। अपिच धारिण्या इरावत्याश्च सपत्नीसमासमभीतायाः कुपितायाश्च सङ्कलनेन स्वाभाविकं संसारभावं विरचय्य कविः अभि-

प्रेतो व्यवहारपरिदर्शिनां, एवमेव सञ्जायते स्त्रीणां सपत्नीसमागममन्तरेण चित्तावस्था येन केनापि प्रतिनिवर्त्तयितुं चेष्टन्ते स्त्रीसमूहा: सपत्नीव्यवहारात् पतिं सपत्नीव्यवहारनिरते च पत्यौ कोपं परिदर्शयन्ति पतिसमीपस्थ परित्यक्तुमेव समीहन्ते। तं तं भावं परिकल्प्य कविकल्पनाकुशल: "कविकालिदास" इति प्रशस्तिवादेन अभिष्टूयते विलसति च तस्य कविताभाव: सहृदयहृदयेषु शयनासनभोजनावसरेषु। एवमेव नानास्थलेषु मालविकाग्निमित्रस्य नैपुण्यमत्यर्थमभिप्रदर्श्य काव्यरसिकास्तु स्वयमेव समर्था: नानास्थलानां नैपुण्यमुद्धर्त्तुमिति अतैवास्तां वाचां परिशेष:, इति शम्। २३२४ वङ्गाब्दीयोत्तरायणसंक्रान्ति:।

---

# नाट्योल्लिखित-पात्रगणाः ।

## ( पुरुषाः )

| | |
|---|---|
| सूत्रधारः | प्रस्तावसूचकः । |
| पारिपार्श्विकः | सूत्रधारसहयोगी नटविशेषः । |
| राजा | अग्निमित्राख्यो विदिशाधीशः । |
| वाहतकः | प्राचीनमन्त्री । |
| विदूषकः | शृङ्गाररससहायः । |
| कञ्चुकी | अन्तःपुराध्यक्षो वृद्धब्राह्मणः । |
| गणदासः, हरदत्तः | नाट्याचार्यौ । |
| सारसः | कुब्जः किङ्करविशेषः । |
| वैतालिकः | स्तुतिपाठकः । |

## ( स्त्रियः )

| | |
|---|---|
| मालविका | गालवाधीशमाधवसेनस्य भगिनी ; |
| धारिणी | अग्निमित्रस्य प्रधाना महिषी । |
| इरावती | ,, द्वितीया पत्नी । |
| परिव्राजिका | कौशिकीनाम्नी माधवसेनसचिवस्य सुमतेर्विधवा भगिनी । |
| बकुलावलिका | धारिण्याः परिचारिका मालविकायाः सखी |
| कौमुदिका | दासी । |
| समाहितिका | परिव्राजिकायाः परिचारिका । |
| मधुकरिका | उद्यानपालिका । |
| निपुणिका | इरावत्याः परिचारिका । |
| जयसेना | प्रतीहारी |
| चेटी | अपरा दासी । |
| मदनिका, ज्योत्स्निका | विदर्भदेशीयशिल्पिकन्याद्वयम् । |

# मङ्गलाचरणम् ।

शारदश्वेतपद्मानां सारैरिव विनिर्म्मिता ।
सर्वार्थदाननिरता श्रेयो देयात् सितप्रभा ॥ १
वाङ्मयाधिष्ठिता देवी वाङ्मयेनैव तुष्यतु ।
गङ्गा गाङ्गेन तोयेन पूजिता तुष्टिभागिनी ॥२
कालिदासः कविश्रेष्ठः कवित्वमिव मूर्त्तिमत् ।
असाधारणपाण्डित्यं काव्ये यस्य विकाशते ॥३

तत्काव्यलब्धमतिलोकरसं सुधीराः
पीत्वा सुधास्वपि न तृप्तिमहो व्रजन्ति ।
नानागुणोपरचितेषु सदर्थकेषु
काव्येषु कोऽपि महिमास्य कवेस्तकास्ति ॥४
तेष्वेककं मालविकाग्निमित्रं
सुनाटकं सङ्गतवस्तुबद्धम् ।
व्याख्यान्तु काञ्चिद्विजयाभिधाना-
ममुष्य कर्त्तुं बहुलः श्रमो नः ॥५
निरर्थको वा चरितार्थको वा
परिश्रमस्तत्र बुधाः प्रमाणम् ।
स्वर्णस्य दोषो ह्यथवा प्रकर्षः
परीक्ष्यते यन्निकषोपलेषु ॥६

अग्निमित्रो नायकोऽस्मिन् धीरोदात्तगुणान्वितः ।
दक्षिणो बहुदारेषु संक्रान्तहृदयक्रमः ॥७
कन्यारूपा मालविका नायिकास्मितयौवना ।
शृङ्गारोऽत्र रसः श्रेष्ठस्तदङ्गानीतरे रसाः ॥ ८
गुणो माधुर्य्यनामा च वैदर्भी रीतिरुत्तमा ।
प्रसादस्यापि सत्तास्मिन् भूयः समुपलभ्यते ॥ ९
व्याख्यायां गुणदोषाद्या यथास्थानमुदीरिताः ।
अलङ्कारादिकाश्चापि ज्ञातव्या विषयास्तथा ॥ १०
ज्ञातव्यो विषयः कोऽपि न तत्र परिशिष्यते ।
तस्मान्नाम्नापि विजया विजयैव भविष्यति ॥ ११
हे गुणग्राहिणो धीरा दोषांस्त्यक्त्वा गुणान्वये ।
सुदृष्टिं स्थापयित्वा वः कृतार्थीक्रियतामयम् ॥ १२

---

# मालविकाग्निमित्रम् ।

## प्रथमोऽङ्कः ।

एकैश्वर्य्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
  कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद् यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
  सन्मार्गालोकनाय व्यपनयतु स व-स्तामसीं वृत्तिमीशः ॥१ ॥

[ अन्वयः । यः प्रणतबहुफले एकैश्वर्य्ये स्थितोऽपि स्वयं कृत्तिवासाः, यः कान्तासम्मिश्रदेहोऽपि अविषयमनसां यतीनां परस्तात्, यस्य अष्टाभिः तनुभिः कृत्स्नं जगत् विभ्रतोऽपि न अभिमानः, सः ईशः सन्मार्गालोकनाय वः तामसीं वृत्तिं व्यपनयतु । १ ]

---

ओं नमो गणेशाय । अथ काव्यनिर्म्माणे लब्धप्रतिष्ठः कविवरेण्यः कालिदासः प्रारिप्सितग्रन्थनिर्व्विघ्नपरिसमाप्तिकामः, तत्र च ज्ञानस्य एव प्राधान्येन उपयोगितया "ज्ञानञ्च शङ्करादिच्छे"दिति प्राचीननियमानुरोधात् ज्ञानदायकं शङ्करमुद्दिश्य प्रसङ्गतः सभ्यानां शुभाशंसया मङ्गलश्लोकं निबध्नाति—एकैश्वर्य्यं इत्यादिना । प्रणतानां भक्तानां बहूनि फलानि यस्मात् तथाभूते भक्तजनानां असीमाभिलषितफलसाधनहेतुभूते, एकैश्वर्य्ये प्रधाने आधिपत्ये स्थितः अवस्थितः अपि, सर्व्वेषामधिनायकः सन्नपीत्यर्थः । यः स्वयं कृत्तिवासाः व्याघ्राजिनाच्छादितदेहः अकिञ्चन इति भावः, तथाहि यः इच्छामात्रेणैव इन्द्रादीनामपि इन्द्रत्वादिकं सम्पादयामास, स एव स्वयं भोगलेशादस्पृह इति

भोगादिविमुखता। तस्य ग्रन्थकृत: अभिलषितनिष्पादनशक्तिमत्तया च एतदाराधन-सन्तुष्टस्य निर्विघ्नाभिलाषसिद्धिर्व्यज्यते। अथवा प्रणतबहुफले भक्तजनानां सदभीष्ट-सम्पादके एकैश्वर्यं सर्वेषां पालनकर्त्तृत्वे स्थित: अपि, कृत्ति: कर्त्तनं संहारक्रिया इति यावत्, सा एव वास: तमोगुणस्वरूपतया आश्रय: यस्य तथाभूत:, तथाहि स एक एव जगत् पालयति संहरति च महाकालरूपेण। प्रणतबहुफल इत्यत्र व्यधिकरणबहुव्रीहि: सर्वत्र अप्रमाणतया प्रणतानि अनुगतानि बहूनि फलानि स्वर्गापवर्गादीनि यत्र तथाभूते, तात्पर्यन्तु पूर्ववत्। प्रणतबहुफल इति प्रथमान्तपाठोऽपि दृश्यते। तत्र य इत्यस्य विशेषणम्। केचित्तु सर्वाधिनायकस्य रुद्रस्य संहारकारित्वे एकैश्वर्य्यं न विरुद्धमिति अपिना उद्भावितस्य पूर्वकल्पोक्तविरोधस्य खण्डनं कुर्वन्ति।

य: कान्तया गौर्य्या तद्देहेन इत्यर्थ:। सम्मिश्र: अर्द्धाङ्गतया सम्मिलित: देह: अङ्गं यस्य तथाभूत: अर्द्धनारीश्वर इत्यर्थ:। एतेन प्रकृते: पुरुषस्य च भेदाभाव: प्रतिपादित:, तत्र प्रमाणं यथा—"यथा जलात्तरङ्गश्च कीला वायुनलादयथा। प्रकृति: पुरुषात्तद्वन्न भिन्ना क्वचिदप्यत॥" अविषयं विषयसञ्चाररहितं, मन: चित्तं येषां तथाभूतानाम्, विषयाश्च रूपादय: पञ्च, तद्यथा—"रूपं, शब्दो गन्धरसस्पर्शाश्च विषया अमी, गोचरा इन्द्रियार्थाश्च" इत्यमर:। अथवा विषया: स्रक्चन्दनवनितादय: भोग्यपदार्था:, तच्छून्यं तेषु असंक्रान्तं मन: येषां तेषां निवृत्तविषयभोगानां यतीनां ब्रह्मचारिणां जितेन्द्रियानामिति यावत्, परस्तात् ऊर्द्धं "ये निर्ज्जितेन्द्रियग्रामा यतयो यतिनश्च ते" इत्यमर:। शिवस्य अर्द्धनारीश्वरत्वमुक्तं तन्त्रसारे—"अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं, बालेन्दुबद्धमुकुटं प्रणमामि रूपम्" इति। अपि: विरोधे, भगवत्प्रभावो विरोधपरीहारबीजम्, परे तु—"कं सुखाम्बु शिर:सु च" इति अभिधानवचनात् कस्य सुखविशेषस्य अन्त: सीमा, यदुत्तरमुत्कृष्टं सुखं नास्ति तादृशं सुखमित्यर्थ:, यस्मिन् तथाभूत:, "तेषां प्रजापतेरानन्दा:, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इत्यादि श्रुतिभ्यो निरतिशयानन्दरूप:, असंमिश्र: नलिनदले सलिल-बिन्दुवत् निर्लेप: देह: स्वरूपं यस्य तथाभूत:, एतेन आत्मस्वरूपत्वमस्य व्यक्तम्; तेन विरोधपरिहारश्च 'दिक्शब्देभ्य: सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्ताति:" इति परशब्दात् दिग्वाचकात् प्रथमाया अस्ताति:। एतेन य: स्वयं विषयेष्वनासक्त: स

भोगसुखानि अन्येभ्यो निरपेक्षमेव दातुं पारयति, अतएव भोगनिःस्पृहो देवः शिवः ममाभीष्टपूरणं कृत्वा कीर्त्यादिकं भोक्तुमवसरं दास्यतीति भावो व्यज्यते ।

यस्य ईशस्य अष्टाभिः अष्टसंख्याभिः तनुभिः मूर्त्तिभिः क्षित्यादिभिः कृत्स्नं समस्तं आकीटब्रह्मपर्य्यन्तं जगत् संसारं बिभ्रतः धारयतोऽपि न अभिमानः न ऐश्वर्य्यप्रयुक्तः अहङ्कारः । शिवस्य अष्टमूर्त्तिकत्वश्रुतिर्यथा विष्णुपुराणे—"सूर्य्यो जलं महीवह्निर्व्वायुराकाशमेव च । दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः" इति । अन्यत्र—"क्षित्यप्तेजोमरुद्व्योम यजमानो रविः शशी । एता वै मूर्त्तयश्चाष्टौ शिवस्य विश्वरूपिणः । याभिर्विभर्त्ति भुवनं सर्वरूप इति स्मृत" इति । सर्वेषामेवामीषां पदार्थानां मुख्यतया परम्परया वा जगदुपकारकत्वमुन्नेयम् । एतेन भगवतस्तस्य सर्वमयत्वे नान्तःकरणतत्त्वसन्निकर्षसम्भवात् अन्तःकरणतत्त्ववेदित्वं, तेन च मदीयमन्तःकरणभावं विज्ञाय स नूनं अभिलषितानुरूपं करिष्यतीति व्यज्यते । निरहङ्कारत्वव्याख्यानञ्च भक्तं प्रति साभिनिवेशकरुणायुक्तदृष्टिव्याघातनिवारणार्थं, तेनापि प्रकृतनिष्पत्तिरनुकूलिता भवति । इन्द्रादयो हि खण्डशः जगत्प्रतिपालयति अयञ्च अखण्डमेव इति महैश्वर्य्योक्तिः । केचित्तु जगत् भुवनं विभ्रतः चिद्गुणरूपेण अनुप्रविश्य तदादि तदन्तक्रमतया धारयतः, तथाहि—"चिद्गुणधारयन् विश्वं तदादिस्तु तदन्तकः । अनुप्रविश्य स महान् राजते परमेश्वर" इति । पञ्चषाणामपि जनानामधीश्वरस्य ऐश्वर्य्यकृतो विकारो दृष्टः, किन्तु नास्य समग्रजगत्पालनकर्त्तृत्वेऽपीति विरोधः, स च भगवत्प्रभावादिवशात् परिहर्त्तव्यः । परे तु नाभिः श्रेष्ठः मानः सम्मानः यस्य तथाभूत इति विरोधं परिहरन्ति ।

सः ईशः महादेवः वो युष्माकं अभिनयदर्शकानां काव्यस्यास्य आलोचकानाञ्च सन्मार्गस्य मोक्षोपायभूतस्य वस्तुनः आलोकनाय अधिगमाय, मार्गो नाम "मार्गोऽपि देशी तद्भेदः कथितो नाट्यवेदिभिः । अत्र मार्गो भवेन्नाट्यं नाट्यवेदोक्तलक्षणम्" इत्युक्तलक्षणो नाट्यभेदः, तस्य आलोकनाय विज्ञानाय तद्गतनैपुण्यबोधाय इत्यर्थः । तामसीं तमोरूपां अज्ञानमयीञ्च वृत्तिं अवस्थां, क्लिष्टाक्लिष्टभेदेन द्विरूपां वा, तथाच पातञ्जले—"वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टा" इति । व्यपनयतु अपाकरोतु, यथा प्रदीपादिसमवधाने सति अन्धकारापगमे द्रष्टव्यार्थाः परं प्रकाश्यतां गच्छन्ति, तथैव ईशस्य करुणासमवधानेन अज्ञानापगमात् एतद्ग्रन्थप्रतिपाद्यार्थाः प्रकाशन्तामिति

भाव:। एतेन सभ्यानां तामस्या वृत्तेः शङ्करेणापनयनाभ्यर्थनप्रक्रमेण नान्दीप्रस्तावात् तेषामेतद्वस्तुनि उन्मुखता अनुकूलिता कविना ; व इति पदार्थेषु स्वस्यापि अन्तर्भावाभिप्रायात् प्रकृतस्य अज्ञानापनयनस्य एव प्रकृते ज्ञानसमवधाने उपयोगात् शङ्करसेवासाद्दैक्यमपि संसूचितम् ।

अत्र चतुर्थपादे ईशे प्रदीपादिकस्य तमोऽपहारकद्रव्यस्य व्यवहारप्रतीत्या समासोक्तिरिति केचित् ।

पूर्वपादद्वये च एकैश्वर्यत्वाकिञ्चनत्वयोः कान्तालिङ्गितकायत्वयतिप्रवरत्वयोः सर्व्वजगत्पालकत्वनिरभिमानत्वयोश्च मिथो विरुद्धयोः एकत्र ईशे समावेशात् सम्भावितस्य विरोधस्य भगवत्प्रभावेण खण्डनप्रतीत्या विरोधाभासोऽलङ्कारः ।

यः स्वयं इत्यादौ यच्छब्दं प्रथमान्तत्वेन उपक्रम्य तृतीये पादे यस्येति षष्ठ्यन्ततया निर्द्देशेन भग्नप्रक्रमता-दोषः, स च "अष्टाभिर्यश्च कृत्स्नं जगदपि तनुभिर्धारयन्नाभिमानी" इति दिशा परिहेयः। सत्स्वपि बहुषु यच्छब्देषु एकेनैव तच्छब्देनाकाङ्क्षापूरणमिति यत् तच्च सर्व्वैरेव यच्छब्दैरेकस्य ईश्वरस्वरूपस्य पदार्थस्य प्रत्ययात् । कथितपदता च भगवद्विषयरतिभावस्य अनपकर्षकतया नोदेति, भावादीनां काव्यभूतानां अपकर्षकस्यैव दोषत्वनियमात । बिभ्रत इत्यनन्तरं प्रयोक्तव्यस्य विरोधसूचकापिशब्दस्य अन्यत्र प्रयोगात् "त्वमस्य लोकस्य च नेत्रकौमुदी" इतिवत् अक्रमता-दोषमपि विभावितं "विभ्राणोऽप्यष्टभिर्यो जगदिदमखिलं मूर्त्तिभिर्नाभिमानी" इति दिशा समादधति केचित् । सतः निर्द्दोषस्य मार्गस्य आलोकनाय इत्यर्थप्रतीत्या, सभ्यानां निर्द्दोषवस्तुदर्शनशक्तिदानाभ्यर्थनया भगवतः समीपे, आत्मना कृते वस्तुनि यथा दोषांशपरिहारेण गुणांशमेव सभ्याः गृह्णन्ति तथा वासना व्यज्यते। तामसीमित्यनेन तमोगुणसम्बन्धिनीमित्यर्थप्रत्यायनात् तमोगुणजन्याया द्वेषादिवृत्तेः परिहारस्य सभ्यानां निकटे अभ्यर्थनं प्रतिपाद्यते, तेनायमर्थः, यथा—हे सभ्याः ! भवन्तः मत्कृते वस्तुनि असूयामकुर्वन्तः केवल गुणदर्शिना चक्षुषा समन्विता लेशेनापि सन्तं गुणमेव गृह्णन्तु, नतु प्राचुर्य्येण स्थितं दोषमपीति ग्रन्थकारस्य विनीताभ्यर्थना व्यज्यते। इममेव श्लोकं केचित् कृष्णादिभक्ताः कृष्णादिपक्षेऽपि सङ्गमयन्ति, तत्तदस्माभिरप्रकृततया ग्रन्थवृद्धिभिया च उपेक्षितम् । स्रग्धरावृत्तम्, तल्लक्षणं यथा—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्"।

(नान्द्यन्ते) सूत्रधारः । अलमतिविस्तरेण । ( नेपथ्याभिमुखमवलोक्य ) मारिष ! इतस्तावत् । (क)

---

अत्र एकैश्वर्य्ये इत्यादिप्रथमपादेन प्रस्तुतनाटकस्य कश्चिदलौकिको नायको भावीति विज्ञाप्यते, तथाहि स महाप्रताप: सुमहता ऐश्वर्य्येण जुष्टोऽपि आत्मनो भोगाय नाधिकं यतते, परं अनुरक्तानां जनानां भोगाय एव ऐश्वर्य्याणि विनियोजयति इति।

अपिच संसारविषयेषु सुतरामासक्तोऽपि स: परमे धर्मे निमग्नचित्त:, साम्राज्याधीश्वरोऽपि विभवादिकृतमभिमानं न वहति इति भाव:। परिव्राजिकाया: पण्डितकौशिक्या: मालविकायां आसक्तचित्ततया अपि परिव्राजिकापदे व्यवस्थितिरित्यपि द्वितीयपादेन व्यज्यते। तृतीयपादेन अभिमानहीनताप्रस्तावाच्च दास्यामपि मालविकायां रागविधौ अपराङ्मुखता विज्ञाप्यते।

चतुर्थपादेन च मालविकाया दास्यमपनीय महिषीपदे अग्निमित्रेण व्यवस्थापनं प्रत्याय्यते इति एवम् ॥

(क) नान्द्या: "देवद्विजनृपादीनामाशीर्वादपरायणा। नन्दन्ति देवता यस्मात् तस्मात् नान्दीति कीर्त्तिता ॥"

"नन्दन्ति काव्यानि कवीन्द्रवर्गा: कुशीलवा: पारिषदाश्च सन्त:। यस्मादलं सज्जनसिन्धुहंसी, तस्मादियं सा कथितेह नान्दी" त्याद्युक्तलक्षण-मङ्गलाचरणरूपाया: कृते: अन्ते अवसाने, सूत्रधारेण नान्दीश्लोकपाठानन्तरमित्यर्थ:। ननु "पदैर्युक्ता द्वादशभि-

---

যিনি ভক্তগণের অভীষ্ট বহু ফলপ্রদ জগতের একাধিপত্যে বর্ত্তমান থাকিয়াও স্বয়ং কোনও উৎকৃষ্ট দ্রব্য-ভোগে রত না হইয়া ব্যাঘ্রাম্বর পরিধান করিয়া থাকেন, যিনি কান্তা গৌরীর সহ অভিন্নদেহ হইয়াও জিতেন্দ্রিয় যতিগণের শ্রেষ্ঠ স্থান অধিকার করিয়া আছেন, যিনি ক্ষিতি প্রভৃতি অষ্ট মূর্ত্তিতে সমস্ত জগতের পালন কর্ত্তা হইয়াও গর্ব্ব বহন করেন না, সেই অজ্ঞাননাশক মহাদেব সৎপথদর্শনার্থ তোমাদের তমোময়ী বৃত্তি অপনয়ন করুন ॥ ১

रष्टाभिर्वा पदैरुत" इत्याद्यालङ्कारिकवचनप्रामाण्येन नान्दीश्लोकस्य द्वादशपदाष्टपदान्यतररूपत्वनियमश्रवणेन कथमत्र "एकैश्वर्य्य"इत्यादिष्वधिकपदस्थलेषु नान्दीलक्षणसङ्गतिः, तदभावे च कथं कविवचनस्य सामञ्जस्यम्, प्रथमत एवाप्रमाणवचनप्रस्तावे कवेर्वस्तुनि विराग एव साधारणानामुत्पद्येत इति चेत्? अत्र विश्वनाथपादाः उक्तश्लोकानां नान्दीरूपत्वं न स्वीकुर्वते, परन्तु तत्पूर्व्वं अपरस्याः कस्याश्चित् प्रकृतलक्षणलक्षितायाः द्वादशपदाष्टपदान्यतररूपायाः सूत्रधारेण पाठं कल्पयन्ति। तथाच— "यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते। रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्॥" इत्यनेन अस्य रङ्गद्वारत्वमुक्तं, तस्य च पूर्व्वरङ्गाङ्गताश्रवणं यथा—"पूर्व्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्",। तदयं कवेरभिप्रायः—नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्, इतःप्रभृति मया नाटकमुपादीयते" इति; तद्यथा कालिदासस्य विक्रमोर्व्वशीयमङ्गलाचरणं न नान्दीरूपं तथा इदमपि इति ज्ञेयम्। परे तु—"पदानि श्लोकावयवभूतानि, तिङन्तानि सुबन्तानि वा, श्लोकतुरीयांशपदानि वा अवान्तररूपाणि वा" इति नियमेन नान्दीलक्षणमव्याहतमेव समञ्जसं भवति। स्रग्धराच्छन्दसः प्रत्येकपादे त्रयो यतिसत्त्वात् त्र्यस्रतालानुगता नान्दी। यथा तथा वा अस्तु, मङ्गलाचरणरूपत्वमस्याः प्रयुक्तमुभयथापि सम्पद्यते।

सूत्रधार इति। सूत्रं नाटकीयं कथासुखं धारयति अवस्थापयति यः तथाभूतः, तल्लक्षणं यथा—"वर्णनीयतया सूत्रं प्रथमं येन सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥" अपिच "नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारः स उच्यते॥" इममेव केचित् स्थापकसंज्ञया आचक्षते, तथाच "प्रविश्य स्थापकस्तद्वत् सूत्रमास्थापयेत्ततः"। तदलमतिप्रसङ्गेन, प्रकृतमनुसरामः, अतिविस्तरेण नान्दीप्रस्तावादिषु विषयेषु बहुप्रसारेण अलं, तेन हि प्रकृतवृत्तदर्शनसमुत्कण्ठितानां विलम्बातिशयमसहमानानां सभ्यानां मानसिकविरागस्य सम्भावनादिति भावः। नेपथ्याभिमुखं वेशरचनास्थानं सज्जागृहमिति यावत्। अवलोक्य दृष्ट्वा "आकल्पवेशौ नेपथ्य"मित्यमरः। पटान्तरालदिशि दृष्टिं चालयित्वा इत्यर्थः।

मारिषेति। मा रिषति न नाशयति सभ्यानां शान्तिं यः तथाभूतः, परं सभ्यजनानां शान्तिजननः, निषेधार्थकमाशब्दोपपदात् रिषधातोः कप्रत्ययः, कोषस्तु—"आर्य्यस्तु

(প্রবিশ্য) পারিপার্শ্বিকঃ। ভাব! অয়মস্মি। (খ)

সূত্র। অভিহিতোঽস্মি পরিষদা—শ্রীকালিদাসগ্রথিতবস্তু 'মালবিকাগ্নিমিত্রং' নাম নাটকমস্মিন্ বসন্তোৎসবে প্রয়োক্তব্যমিতি। তদারভ্যতাং সঙ্গীতকম্। (গ)

---

মারিষ" ইত্যমরঃ। এতেন পারিপার্শ্বিকস্যাপি মাননীয়তা ব্যক্তা। সত্যপি তথা সম্বোধনপদান্তরে মারিষপদেনৈব সম্বোধনং "সূত্রধারং বদেদ্ভাব ইতি বৈ পারিপার্শ্বিকঃ। সূত্রধারো মারিষে"তি আলঙ্কারিকনিয়মমনুরুধ্য।

ইতঃ অত্র রঙ্গস্থানে তাবৎ প্রথমতঃ আগচ্ছ, কার্য্যান্তরমনপেক্ষমাণ এব অত্র আগমনং কুরু ইত্যর্থঃ। এতেন সূত্রধারস্য কর্ত্তব্যমনুস্মৃত্য উৎকণ্ঠা ব্যক্তা। সার্ব্ববিভক্তিকস্তসিল্ ইতি সর্বনাম্নঃ ইদম্-শব্দাৎ সপ্তম্যর্থে তসিল্ প্রত্যয়ঃ।

(খ) পরি সর্ব্বতঃ পার্শ্বং সূত্রধারস্য ইতি শেষঃ ভবতি যঃ সঃ পারিপার্শ্বিকঃ, সূত্রধারাপেক্ষয়া ঈষদূনগুণকো নটঃ, একান্ততয়া ঊনগুণস্য অন্ততঃ পার্শ্বে বর্ত্তনস্য অযোগ্যত্বাৎ, প্রায়েণ সূত্রধারতুল্য ইত্যর্থঃ। প্রবিশ্য রঙ্গস্থানমিতি শেষঃ। বক্ষ্যমাণমাহেত্যধ্যাহারেণ অন্বয়ঃ।

(গ) পরিষদা সভাসদ্ভিঃ সমস্তৈরেব, সাকল্যবোধনার্থমেব পরিষৎপদেন তদ্বিশিষ্টো লক্ষ্যতে; অন্যথা কতিপয়সভ্যাভিপ্রায়েণাপি বহুবচনস্য উপপত্তিঃ স্যাদিতি অত্র চ ব্যঞ্জনয়া সাফল্যং বোধ্যতে। অভিহিতঃ আদিষ্টঃ অস্মি, বক্ষ্যমাণং বস্তু ইতি শেষঃ। বচনার্থকস্য অভিদধাতের্দ্বিকর্ম্মকত্বাৎ কর্ম্মদ্বয়ী গৌণকর্ম্মণঃ অস্মদর্থস্য উক্তার্থতা চ।

---

( নান্দী পাঠ শেষ হইলে ) সূত্রধার। আর অধিক কথায় কাজ নাই। ( নেপথ্যের দিকে দৃষ্টিপাত করিয়া ) মারিষ, এই দিকে আইস। ( ক )

পারিপার্শ্বিক প্রবেশ করিয়া বলিলেন—আর্য্য, এই যে আমি আসিয়াছি। ( খ )

श्रीकालिदासेन सदाखेन कविना ग्रथितं निबद्धं वस्तु अभिनेयं वस्तुजातं यस्मिन् तथाभूतं कालिदासप्रणीतम् इत्यर्थः। मालविका प्रकृतनाटकस्य नायिका अग्निमित्रः अस्यैव नायकः तौ अधिकृत्य कृतं इत्यर्थे "अधिकृत्य कृते ग्रन्थे" इत्यण्प्रत्ययः। नाटकं "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितं" इत्यादिलक्षणलक्षितं, अस्मिन् प्रक्रान्ते वसन्तोत्सवे वसन्तकालोचितमहानन्दजनकव्यापारे प्रयोक्तव्यं अभिनेतव्यं इति अभिहितोऽस्मीति पूर्व्वेण वाक्यसमाप्तिः। अनेन सर्व्वेषां पारिषदानां कालिदासनिबद्ध-वस्तुप्रयोगादेशप्रत्ययात् कालिदासस्य कवित्वप्रतिपत्तिर्व्याज्यते। अन्यथा परिषद्गतानां सर्वेषां ऐकमत्येन तद्वस्तुप्रयोगे रत्यसम्भवात् परिषच्छब्दः शक्त्यैव विद्वत्समूहवाचीति परे, तथाच मनुः—"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः। त्रयश्चाश्रमिणः पूर्वं परिषत्स्याद्दशावराः"। यत्र तेषामधिष्ठानस्थानं परिषत्पदेन बोध्यते तत् निरूढ-लक्षणावलात्।

श्रीकालिदासेति—श्रीपूर्व्वकप्रयोगेण तदानीं कालिदासस्य जीवितत्वं केचित् अनुमिन्वन्ति; तदस्माकमतिमात्रां आस्थां नालम्बते, यतः तदानीं कालिदासस्य केश्चिदनुरक्तैरपि अभिनयस्य कर्त्तुं शक्यत्वात् गुरुनाम्नः पूर्वत इव तन्नाम्नः पूर्वतः श्रीशब्द-प्रयोगस्य सामञ्जस्यात् "देवं गुरुम्" इत्यादिनियमात्।

वसन्तोत्सवे इत्यनेन नाटकाभिनयस्य कालो निर्द्दिष्टः, तत् तस्मात् सङ्गीतकं "नृत्यं गीतं तथा वाद्यं त्रयं सङ्गीतमुच्यते" इत्युक्तलक्षणं पारिभाषिकं सङ्गीतं आरभ्यताम्। परिषदेत्यत्र विद्वत्परिषदेत्यपि केचित् पठन्ति, विद्वत्समूहेन समवेतेन इति तस्यार्थः। अस्य नाटकस्य मालविकया अग्निमित्रमेलनरूपप्रतिपाद्यवस्तुकत्वात् "नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशक"मिति नियमेन मालविकाग्निमित्रमिति गर्भितार्थप्रकाशकं नाम।

अस्य वृत्तस्य पुराणप्रसिद्धिविरहेऽपि इतिहासप्रसिद्धतया एव ख्यातवृत्तत्वं, सा च प्रसिद्धिः टीकासौ वहिरन्यत्र एव प्रतिपादयिष्यते।

---

সূত্রধার।—আজ আমার প্রতি সভার আদেশ হইয়াছে যে—এই বসন্তোৎসবে মহাকবি কালিদাসের রচিত 'মালবিকাগ্নিমিত্র' নামক নাটক অভিনয় করিতে হইবে; অতএব নৃত্যগীতাদি আরম্ভ কর। ( গ )

पारि। मा तावत् । प्रथितयशसां धावक[भास]सौमिल्लकवि-रत्नादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ किं कृतो बहुमानः ? (घ)

सूत्र। अये ! विवेकविश्रान्तमभिहितम्। पश्य—(ङ)

(घ) मा तावत् न खलु एवं कथ्यतां अन्याय्यमिवेदं प्रतिभातीति भावः। प्रथितानि दिक्षु प्रख्यातानि यशांसि कीर्त्तयः कवित्वप्रभवाः येषां तेषां कवित्वे प्रसिद्धानां, धावकः नागानन्दरत्नावलीप्रभृतीनां उत्कृष्टकाव्यानां प्रणेता, स हि आत्मना प्रणीतं काव्यं निजदौर्गत्यवशादर्थलाभकाम्यया श्रीहर्षभूपतिकृतित्वेन प्रख्यापयामासेति श्रूयते। सौमिल्लकविरत्नाख्यौ अपि कवी। धावक इत्यत्र भास इति केचित् पठन्ति। भासो हि चारुदत्तस्वप्नवासवदत्तादिरूपकप्रणेता सुप्राचीनः कविः। सौमिल्लकादिकवि-रत्नानामिति क्वचित् पाठः, तत्र कविरत्नानां कविश्रेष्ठानामित्यर्थः। आदिपदेन शूद्रकादीनां ग्रहणम्। प्रबन्धान् ग्रन्थान् अतिक्रम्य साम्प्रतं अभिनयविधौ अनादृत्य वर्त्तमानकवेः नव्यकाव्यकारस्य सर्व्वासु दिक्षु अप्रथितयशस इत्यर्थः। एतेन तत्काव्यस्य उत्कर्षविषये संशयातिशयो व्यज्यते। कृतौ निर्म्माणे तदीये काव्ये अस्मिन् मालविकाग्निमित्रे किं कथं बहुमानः आदरातिशयः वर्त्तते इति शेषः। तथाहि परीचित-गुणान् धावकादिकवीनां ग्रन्थान् अनादृत्य यत् अपरीचितगुणस्य नव्यकविग्रन्थस्यास्य सभासद्भिरादरः क्रियते, तदतिमात्रं विस्मयमेव उपजनयति इति भावः। प्राचीनस्य कस्यचित् कवेः रूपकम् एव अभिनयार्थमादीयताम, अन्यथा सभासदां तथा परि-तोषासम्भवादिति तात्पर्य्यम्।

(ङ) विवेकः विशिष्टा बुद्धिः विश्रान्तः विरतः तारतम्यज्ञानहीन इत्यर्थः, यत्र तद्यथा स्यात् तथा अविवेकमित्यर्थः। अभिहितं कथितं तवेदं वचनं न सम्यक् विवेकस्य फलमिति भावः। पश्य अवधारय वक्ष्यमाणं वस्तु इति शेषः। दृशिर्ज्ञानसामान्यवचनतया

পারি। না, তাহা নহে। প্রথিতকীর্ত্তি ধাবক-সৌমিল্ল-কবিরত্ন-প্রভৃতি শ্রেষ্ঠ কবিগণের গ্রন্থ ছাড়িয়া নূতন কবি কালিদাসের কাব্যে এত আদর কেন ? ( ঘ )

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः॥ २॥

[ अन्वयः। सर्वं पुराणम् इत्येव साधु न (भवति)। काव्यं नवम् इत्यपि न च अवद्यम् (भवति)। सन्तः परीक्ष्य अन्यतरत् भजन्ते, मूढः परप्रत्ययनेयबुद्धिः (भवति)। २। ]

---

तदर्थः। तथाहि वक्ष्यमाणवस्तुविवेचनं त्वं एव वक्तुं न पारयेः इति भावः। विवेकविश्रान्तमिति पाठे विवेकः श्रान्तः अत्यातिशयेनैव कार्य्याक्षमः यत्र। तात्पर्य्यन्तु एकमेव इति। सर्व्वत्रैव क्तान्तस्य आहिताग्न्यादिपाठात् परनिपातः। विवेकशून्यमिति पाठे विशेषेण अविविच्यैव अभिहितमित्यर्थः।

२। अथ कवीनां वस्तुषु पुराणत्वं नूतनत्वं वा नोत्कर्षापकर्षयोः प्रयोजकम् अपि तु तत्तद्व्यभिचारि एव, अतः किमिति सभ्याः नव्यस्य कालिदासस्य वस्तुनि न रमन्तामित्याह—पुराणमित्यादिना। सर्वं काव्यं प्रकरणवशात् पुराणमित्यर्थः। पुराणं प्राचीनकविकृतत्वेन प्राचीनं इति एव अनेनैव हेतुना न साधु न प्रकर्षभाक्, पुराणत्वमेव उत्कर्षं प्रति न कारणं, व्यभिचारस्य भूयोदर्शनात्; यत् यत् पुराणं तत्त-दुत्कृष्टं इति व्याप्तौ व्याघातात्। नापि च काव्यं कवेर्वस्तु "वाक्यं रसात्मकं काव्यम्" इत्युक्तलक्षणकं वाङ्मयं नवं नूतनकविकृतमिति हेतोः अवद्यम्, गर्हणीयम् नूतन-कवेरपि काव्यस्य सुतरामुत्कर्षदर्शनात् नूतनत्वस्य अपकर्षे हेतुताया असामञ्जस्यात्। तथाहि यत् यत् नवं तत्तत् अवद्यम् इत्यपि व्याप्तिर्न भूय एव तद्व्याप्तिभङ्गदर्शनात्। यदि पुराणमात्रमेव उत्कृष्टं, नूतनमात्रञ्च अपकृष्टं स्यात्, तदेव पुराणत्वं उत्कर्षं प्रति नूतनत्वञ्च अपकर्षं प्रति हेतुः स्यादिति। ननु तर्हि केन हेतुना काव्यस्य

---

সূত্র। ওহে, তুমি ইহা অবিবেচকের ন্যায় বলিয়াছ। দেখ,—(৬)

পুরাতন—এই বলিয়াই সমস্ত পুরাতন বস্তু সাধু হয় না এবং নূতন এই বলিয়াই সমস্ত নূতন কাব্য নিন্দনীয় নহে। সাধুগণ গুণ ও

उत्कर्षापकर्षौ निर्वाच्यौ इत्याह—सन्त इत्यादि। सन्तः पण्डिताः परीक्ष्य काव्यस्य गुणान् दोषांश्च सम्यक् विचार्य्य अन्यतरत् सगुणनिर्गुणयोः मध्ये एकतरं सगुणमित्यर्थः। अन्यतरत्वं हि "भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम्" इति न्याये। भजन्ते आश्रयन्ति सेव्यतया समधिगच्छन्ति इत्यर्थः। निर्गुणञ्च वस्तु परित्यजन्ति इति तात्पर्य्यगम्यम्। मूढ़ः अज्ञानयुक्तः विशेषविवेचनाशक्तिरहितो जन इत्यर्थः। परेषां स्वेतरजनानां प्रत्ययेन विश्वासेन तेषामुत्कर्षापकर्षनिश्चयेन इत्यर्थः। "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु"इत्यमरः। नेया परिचालनीया उत्कर्षापकर्षयोरन्यतरनिश्चयप्रवणा इत्यर्थः, बुद्धिः यस्य तथाभूतः भवतीति शेषः। तथाहि मूढ़ानां जनानां स्वतो नास्ति स्वतन्त्रा कापि निश्चयशक्तिः, ते हि—विज्ञा यथा यथा वस्तु प्रतियन्ति तथैव तद्वस्तु गृह्णन्तः परितुष्यन्ति इति भावः। तथाच काव्यस्य गुणवत्त्वमेव उत्कर्षाधायकं दोषवत्त्वञ्च परिहानप्रयोजकम्, अतो नवीनस्यापि कवेः कालिदासस्य नवमिदं वस्तु मालविकाग्निमित्रं नाम काव्यं गुणवत्तया उत्कर्षयुक्तं पण्डितबहुलायां संसदि अभिनययोग्यम्, न तु परिहानयोग्यमिति। यदपि गुणदोषविचारासहानां काव्यस्य नूतनत्वश्रुतिमात्रेण मूढ़ानां इतः विरागरहितत्वं, तदपि पण्डितैरस्य ग्रहणप्रत्ययेन सम्भविष्यति इति उत्तरार्द्धं सर्वथा सार्थकम्। अतएव त्वं विवेकनष्टत्वा एव पूर्वोक्तमभिहितवानसीति गद्यांशसमर्थनं युज्यते। पण्डितानामादरातिशयेन काव्येऽस्मिन् उत्कर्षस्य प्रत्यायनात् सूत्रधारमुखेन कविर्गोपित आत्मप्रशंसा प्रव्यक्ता, सा च सभ्यानां उन्मुखतासम्पादनायेति नातिमात्रो दोषः। अत्र पुराणमित्येव इत्येवशब्देन पुराणत्वस्य साधुताप्रयोजकताया उक्ताया निरासेन तात्पर्य्यतः सगुणत्वस्य साधुताप्रयोजकताप्रत्ययात् परिसंख्येत्यभिज्ञाता व्याचक्षते। एतत्सन्दर्भप्रतिपाद्येन अप्रस्तुतेन सामान्येन प्रस्तुतस्य विशेषस्य नवकविना कालिदासेन प्रणीतस्य अस्य काव्यस्य उत्कर्षस्य प्रत्ययात् अप्रस्तुतप्रशंसेति निपुणाः। उत्तरार्द्धेन मूढ़जनापेक्षया सताम् उत्कर्षस्य तात्पर्य्यगम्यत्वात् व्यतिरेको व्यङ्ग्यः। मूढ़ इत्यनन्तरम् अवश्यं दातव्यस्तुशब्दो द्योतको नोपात्त इति वाच्यानभिधानदोषः। न्यूनपदत्वे वाचकत्वाविवक्षायां न्यूनपदता।

---

দোষ বিচার করিয়াই নূতন পুরাতনের মধ্যে যে কোনও একটী সাদরে গ্রহণ করিয়া থাকেন। কিন্তু মূর্খ ব্যক্তি পরের বিশ্বাসমতে বিশ্বাস করিয়া

पारि । आर्य्यमिश्राः प्रमाणम् । (च)

सूत्र । तेन हि त्वरतां भवान् । (छ)

शिरसा प्रथमगृहीता,—माज्ञामिच्छामि परिषदः कर्त्तुम् ।
देव्या इव धारिण्याः, सेवादक्षः परिजनोऽयम् ॥ २ ॥

[ अन्वयः । देव्याः धारिण्याः अयं सेवादक्षः परिजन इव (अहम्) परिषदः आज्ञां शिरसा प्रथमगृहीतां कर्त्तुम् इच्छामि । २ । ]

इति निष्क्रान्तौ । (ज)

---

(च) आर्य्येषु माननीयेषु मिश्राः सदसद्विवेचकत्वेन श्रेष्ठाः प्रमाणं कर्त्तव्याकर्त्तव्य-निर्द्धारणे प्रभव इत्यर्थः । उद्देश्यविधेयभावस्थले भिन्नलिङ्गवचनता न दोषाय ।

(छ) तेन कालिदासकाव्यस्य नवस्यापि अभिनययोग्यत्वेन इत्यर्थः । त्वरतां सत्वरं कर्त्तव्यार्थेषु यतताम्, अभिनयस्य व्यवस्थायां लग्नो भव इत्यर्थः ।

२ । अथ पारिपार्श्विकवाक्यस्य उत्तरदानावसरे उपमाव्याजेन प्रकृतकाव्यार्थमुप-स्थापयितुं कविः सूत्रधारमुखेन प्रस्तौति—शिरसेत्यादि । देव्याः अग्निमित्रस्य महिष्याः धारिण्याः तदाख्यायाः सेवायां परिचर्य्यायां दक्षः कुशलः अयं एतदनन्तरमेव रङ्गभूमौ प्रवेशाय नेपथ्यमधिष्ठितः परिजनः परिचारिकाजन इव । अहमित्यध्याहार्य्यम् । परिषदः समस्तानां सभ्यानां, अत्रापि परिषच्छब्दार्थः पूर्ववत् विचार्य्यः । आज्ञां कालिदासस्य मालविकाग्निमित्रनाटकाभिनयार्थमादेशं, शिरसा प्रथमतः आदौ गृहीतां कर्त्तुं सर्वाग्रे तेषामादेशं पालयितुमित्यर्थः । इच्छामि अभिलषामि । तथाहि काल-

---

অন্তরের আদর করে। ( অতএব কালিদাসের কাব্য নূতন হইলেও সদ্গুণবশতঃ সভ্যগণের তাহার প্রতি সমাদর প্রদর্শন ন্যায্যই হইয়াছে) ॥ ২

পারি। মহাশয় যদি ভাল মনে করেন, তবে তাহাই ভাল। ( চ )

সূত্র। তবে সত্বর কার্য্যে ব্রতী হও। ( ছ )

এই যে মহিষী ধারিণীর পরিচর্য্যা-নিপুণ একটী পরিজন প্রবেশ

# प्रस्तावना। (ज)

विलम्बमकृत्वैव कर्त्तव्यं सभ्यानामादेशपालनमिति धारिणीपरिचारिकाया बकुलावलिकाया भूमिकामवलम्ब्य पात्रं प्रविशति इति सभ्येषु निवेदनम्। एतदेव सूत्रधारस्य नाटकीयसूत्रधारणम् इति। शिरसा आज्ञाया: प्रथमग्रहणप्रस्तावात् सभ्यानां महान् सम्मान: प्रतिपाद्यते। अत्र सूत्रधारे धारिणीपरिजनसाम्यस्य इव-शब्देन बोधनात् वाच्या उपमा। परिजन इत्यनन्तरं प्रयोक्तव्यस्य इव शब्दस्य अस्थाने निवेशात् "समय-एव करोति" इत्यादिवत् अक्रमतादोष:। उपमानोपमेययो: पुरुषभेदात् भग्नप्रक्रमतापि "लतेव राजते तन्वि" इत्यादिवत्।

अत्र धारिणीपरिजनेन आत्मन: सादृश्योद्भावनेन पात्रप्रवेशस्य प्रक्रमणात् अवलगिताख्या प्रस्तावना इति दर्पणसम्मति:, तथाच तल्लक्षणं यथा—"यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधै:॥" "समावेशात् सादृश्योद्भावनात् अन्यत् कार्य्यं पात्रप्रवेशरूप"मिति तर्कवागीश:। आर्य्यावृत्तम्, तल्लक्षणं यथा—"यस्या: पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये, चतुर्थके पञ्चदश सार्य्या॥" सेवादक्ष इति परिजनविशेषणेन यत् धारिण्या एव किमपि कार्य्यमुद्दिश्य प्रस्थिताया: बकुलावलिकाया: प्रवेश इति व्यज्यते तच्च अनुपदमेव व्यक्तं भविष्यति। देव्या इत्यादिना प्रविशत: पात्रस्य विशेषणं सभ्यमोहनिराकरणाय तदीयादेशस्य अवश्यं पालनीयताव्याख्यानाय च।

(ज) इति उक्तश्लोककथनानन्तरं, निष्क्रान्तौ रङ्गस्थानात् अपसृतौ सूत्रधार-पारिपार्श्विकौ इति शेष:। प्रस्तावनाया: स्थूललक्षणं दर्पणादौ अलङ्कारग्रन्थे अनुसन्धेयम्। व्युत्पत्तिस्तु प्रस्ताव्यते प्रस्तुतं विषयं अधिक्रियते अस्याम् इति प्रस्तावना।

---

করিতেছে। ইহার ন্যায় আমি সভার আদেশ প্রথমতঃ শিরোধার্য্য করিতে ইচ্ছা করি॥ ৩

দুইজনই নিষ্ক্রান্ত হইলেন। (জ)

প্রস্তাবনা সমাপ্ত।

ततः प्रविशति वकुलावलिका । (ञ)

वकुला । आणत्तह्मि देवीए धारिणीए अचिरोवणीदा छलिअणामणट्टअन्तरे उवदेसग्गहणे कीरिसी मालविए त्ति णट्टाआरिअं अज्जगणदासं पुच्छिदुं, ता जाव सङ्गीदसालं गच्छह्मि । (इति परिक्रामति)। [ आज्ञप्तास्मि देव्या धारिण्या अचिरोपनीता छलिकनामनाट्यान्तरे उपदेशग्रहणे कीदृशी मालविकेति नाट्याचार्य्यं गणदासं प्रष्टुम्, तद् यावत् सङ्गीतशालां गच्छामि ] (ञ)।

---

(ञ) ततः नटयोः निष्क्रमणानन्तरम्, वकुलावलिका सूत्रधारेण सूचितप्रवेशः धारिणीपरिजनः, प्रविशति रङ्गस्थानमिति शेषः ।

(ञ) छलिकमिति नाम संज्ञा यस्य तथाभूतं यत् नाट्यं अभिनेयं वस्तु रूपकमिति यावत्, तथाच नाट्यकाराः—'तदेव च्छलिकं नाम साचात् यदभिनीयते । व्यपदिश्य पुरावृत्तं स्वाभिप्रायप्रकाशकम् ॥' यद्वा शर्म्मिष्ठा-प्रणीतं छलिकं नाम नाटकम् । तदन्तरे तन्निवद्धेषु अभिनेयवस्तुषु अचिरोपनीता कतिपयदिनात् पूर्वं शिचा-ग्रहणाय स्थापिता नतु वहुकालमित्यर्थः । मालविका तदाख्या कुमारी कीदृशी कथम्भावा निपुणा अनिपुणा वा इत्यर्थः इति उक्तं वस्तु नाट्याचार्य्यं अभिनयकला-शिचकं गणदासं प्रष्टुम्, अत्र क्रियार्थक्रियोपपदे प्रच्छधातोस्तुमुन् मन्तव्यः । तत् तस्मात् देव्या धारिण्या आज्ञापनादित्यर्थः । सङ्गीतशालां रङ्गस्थानं आर्य्यगणदासस्य शिचाप्रदानस्थानमित्यर्थः । गच्छामि । मालविकायाः उपदेशग्रहणस्य द्रष्टव्यत्वात् आर्य्यगणदासस्य च तत्रैव लाभसम्भवेन प्रश्नयोग्यत्वात् इति उक्त्वा परिक्रामति पाद-चङ्क्रमणं करोति, अस्य कर्त्री वकुलेत्येकदेशेन उपचरितस्य वकुलावलिकेति नाम्नो वाच्या वकुलावलिका ।

---

( তদনন্তর বকুলাবলিকা প্রবেশ করিল )। ( ঝ )

বকুলা। দেবী ধারিণী আমাকে আদেশ করিয়াছেন যে—'অল্পকাল-মাত্র আমি মালবিকাকে নাট্যাচার্য্যের নিকট ছলিক নামক নাট্য শিক্ষা করিবার জন্য নিযুক্ত করিয়াছি, সে তাহাতে কিরূপ নিপুণা,—তাহা

ततः प्रविशत्याभरणहस्ता द्वितीया चेटी । (ट)

प्रथमा । (द्वितीयां दृष्ट्वा) । **हला कोमुदिए, कुदो दाणिं इअं दे धीरदा, जं समीए वि अदिक्कमन्ती इदो दिट्टिं ण देसि ।** [ हला कौमुदिके ! कुतस्ते इयं धीरता, यत् समीपेऽप्यतिक्रामन्ती इतो दृष्टिं न ददासि । ] (ठ)

---

(ट) ततः वकुलावलिकायाः परिक्रमणानन्तरम् । आभरणेन नागमुद्रासनाथेन अङ्गुलीयकरूपालङ्कारेण युक्तः हस्तः यस्याः सा इति मध्यपदलोपी समासः । द्वितीया वकुलावलिकामपेक्ष्य द्वित्वसंख्यापरिपूरिका, वकुलावलिकातः अपरा इत्यर्थः । चेटी दासी ।

(ठ) प्रथमा आदौ प्रविष्टा वकुलावलिका । द्वितीयां शेषप्रविष्टां कौमुदिकाम् । हला इति सम्बोधनपदम्, "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः । कौमुदिका इति द्वितीयायाः परिचारिकाया नाम ।

कुतः कस्मात् कारणात् । ते तव इयं दृश्यमाना धीरता धीरस्वभावता एकस्मिन्नेव विषये भूयान् अभिनिवेश इत्यर्थः । ननु कथमेवं ब्रवीषि इत्याह—यदित्यादि । यत् यस्मात् कारणात्, समीपे अतिसन्निधावपि स्थितां मामिति शेषः । अतिक्रामन्ती अतिक्रम्य गच्छन्ती इतः अस्यां दिशि अस्मिन् मत्स्वरूपे जने वा दृष्टिं न ददासि नेत्रपातं न करोषि इत्यर्थः । तथाहि एवं ते कर्त्तव्यनिष्ठता यत् एवं समीपस्थितामपि मां न पश्यसि इति सोल्लुण्ठनवाक्यमिदम् ।

"अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम्" इति नियमानुरोधात् अनयोः राजान्तःपुरचारिण्योः परिचारिकयोः मागधी भाषा ज्ञातव्या ।

---

জিজ্ঞাসা করিয়া আইস।' অতএব এখন আমি সঙ্গীতশালায় গমন করি। ( এই বলিয়া চলিতে লাগিল )। (ঞ)

( তদনন্তর আর একজন পরিচারিকা অলঙ্কার হস্তে প্রবেশ করিল )। ( ট )

সেই দ্বিতীয়া পরিচারিকাকে দেখিয়া বকুলাবলিকা বলিল—ওগো

द्वितीया। अह्मो वउलावलिआ!। सहि! देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाहं अङ्गुलीअअं सिणिद्धं णिभालअन्ती तुह उवालम्भे पड़िदह्मि। [ अहो वकुलावलिका!। सखि! देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निभालयन्ती तवोपालम्भे पतितास्मि ]। (ड)

प्रथमा। (विलोक्य)। ठाणे सज्जदि दे दिट्टी। इमिणा अङ्गुली-अएण उव्भिस्सकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो।

---

(ड) अहो इति। विस्मयस्य हर्षस्य च द्योतकमव्ययम्, वकुलावलिका अत्र वर्त्तते इति शेषः। एवं सन्निधिस्थिताया अपि अदर्शनेन विस्मयः। हर्षश्च उभयोस्तयोः प्रणयिन्योः सहसा परस्परसम्मिलनात्। देव्या धारिण्या, शिल्पिसकाशात् शिल्पिनः निकटात् आनीतं उपस्थापितं, नागमुद्रया सर्पविषवेगनिरासकारिणा मणिना युक्तया मुद्रया सनाथं युक्तं अङ्गुलीयकं, स्निग्धं अतिमात्रेण अभिनिवेशेन निभालयन्ती पश्यन्ती तव उपालम्भे तिरस्कारे पतितास्मि, तथाहि अस्य अङ्गुलीयकस्य साभिनिवेशदर्शनेनैव समीपस्थितामपि त्वामहं न दृष्टवती, मनसोऽणुत्वात् एकविषयसंक्रमे अपरविषयस्य कथमपि अधिगमासम्भवात्; अतो नार्हसि मां सविशेषमुपालब्धुमिति भावः।

एतेनैव अङ्गुलीयकेन विदूषकस्य कृत्रिमविषवेगोपशमो भविष्यति, कारावद्धाया मालविकाया बन्धमुक्तिश्च इति ज्ञातव्यम्।

---

কৌমুদিকে, তোর এত একাগ্রতা কোথা হইতে আসিল যে—আমি সম্মুখে রহিয়াছি, তাহাতেও আমাকে ছাড়াইয়া চলিয়া যাইতেছিস্, এদিকে একবার দৃষ্টিপাতও করিতেছিস্ না ? (ঠ)

কৌমু। অ্যাঁ! বকুলাবলিকা! সখি, মহিষী ধারিণী শিল্পীর নিকট হইতে নাগমুদ্রাযুক্ত এই অঙ্গুরীয়কটী আনিয়াছেন, এই অঙ্গুরীয়কটী নিপুণভাবে দেখিতে দেখিতে যাইতেছি, তাই তোর তিরস্কারে (অনুযোগে) পড়িয়াছি। ( ড )

[स्थाने सज्जति ते दृष्टिः। अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेशरेण कुसुमित इव ते अग्रहस्तः ]। (ढ)

द्वितो। हला! कहिं पत्थिदासि?। [हला! कस्मिन् प्रस्थितासि? ] (ण)

बकु। देवीए वअणेण णट्टाआरिअं अज्जगणदासं पुच्छिदुं, उवदेसग्गहणे कीरिसी मालविअत्ति। [देव्या वचनेन नाट्याचार्य्यं आर्य्यगणदासं प्रष्टुं उपदेशग्रहणे कीदृशी मालविकेति। ] (त)

---

(ढ) विलोक्य दृष्ट्वा अङ्गुलीयकमिति शेषः। ते तव दृष्टिः नयनं, स्थाने युक्तमेव सज्जति अत्र संसक्तं जातं, तथाहि अस्याः सौन्दर्य्यातिशयशालितया तव दृष्टेरासक्ति-र्युज्यत एव इति नास्ति तव दोषः इति भावः। उद्भिन्ना उद्गताः किरणाः रश्मय एव केशराः यस्य तेन, अनेन तव हस्तस्थितेन अङ्गुलीयकेन ते तव अग्रहस्तः करः कुसुमितः पुष्पित इव अस्तीति शेषः।

हस्तस्य अग्रं अग्रहस्त इत्येकदेशिसमासः। तथाहि कुसुमानि यथा उद्गत-केसराणि शोभन्ते तथैव तव करोऽपि अस्य मणेः किरणसमूहेन इति भावः। कुसुमित इति कुसुमशब्दादितच्प्रत्ययेन सिद्धम्।

अत्र किरणेषु केसरत्वस्य आरोपात् रूपकम्, तदनुप्राणिता च अग्रहस्ते कुसु-मितत्वोत्प्रेक्षणात् उत्प्रेक्षा सा च इव शब्देन वाच्या।

(ण) कुत्र कस्मिन् स्थाने प्रस्थिता गन्तुमपक्रान्ता असि, कुत्र त्वया गम्यते इत्यर्थः।

(त) देव्याः महिष्याः धारिण्याः वचनेन आदेशेन, उपदेशस्य शिक्षायाः ग्रहणे अभिनयकलायाः शिक्षणार्थं स्थापितायाः अनुकरणे इत्यर्थः। मालविका कीदृशी,

---

বকু। (দেখিয়া) তোর দৃষ্টি বাস্তবিক যথাস্থানেই আসক্ত হইয়াছে। এই অঙ্গুরীয়কটীর কিরণগুলি কেশরের ন্যায় উদ্ভিন্ন হওয়ায় তোর করতল যেন কুসুমযুক্ত বলিয়া মনে হইতেছে। (ঢ)

কৌমু। ওলো, কোথায় যাইতেছিস্? (ণ)

कौमु। सहि ! ईदिसेण वावारेण असण्णिहिदावि सा भट्टिणा कहं दिट्ठा ?। [ सखि ! ईदृशेन व्यापारेण असन्निहिताऽपि सा भर्त्रा कथं दृष्टा ?। ] (थ)

बकु। आं, सो जणो देवीए पासगदो चित्ते दिट्ठो। [ आं, स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः ] (द)

कौमु। कहं विअ ? [ कथमिव ? ]

---

पारदर्शिनी न वा इति प्रष्टुम्। प्रस्थिता अस्मि इति अध्याहृत्य अन्वयः। तथाहि आर्य्यगणदाससमीपे प्रस्थितास्मीति भावार्थमादाय उत्तरम् मन्तव्यम्, अन्यथा यथा श्रुतार्थे प्रश्नस्य उत्तरासम्भवात्। कुवेत्यनेन गन्तव्यस्य देशस्यैव पृष्टत्वात्।

(थ) ईदृशेन रहसि आर्य्यगणदाससमीपेन अवस्थाय अभिनयशिक्षारूपेण व्यापारेण कर्म्मणा असन्निहिता राज्ञः सन्निधिमप्राप्तापि सा मालविका कथम् केन प्रकारेण भर्त्रा स्वामिना अग्निमित्रेण दृष्टा। तथाहि एवं रहसि स्थितायाः कर्म्मान्तर-व्यापृतायास्तस्या राज्ञा दर्शनं एकान्ततोऽसम्भवं कल्पयामि इति भावः। अभिनयादि-शिक्षार्थं अन्यत्रावस्थितेरावश्यकत्वात् मालविकायाः महाराजाग्निमित्रसान्निध्यं न सम्भवति, अतः कथं सा बाला नृपतिना अवलोकिता इति निर्गलितार्थः।

(द) आमिति स्मरणार्थकमव्ययम्। सः जनः मालविकारूपः। देव्याः धारिण्याः पार्श्वगतः पार्श्वे चित्रितः इत्यर्थः। चित्रे चित्रफलके दृष्टः। तथाहि देवीचित्रं अव-लोकयता तत्परिजनरूपेण चित्रितायास्तस्या दर्शनमवश्यम्भावीति सा दृष्टा इति भावः।

---

বকু। শিক্ষাগ্রহণে মালবিকা কিরূপ ?—মহিষীর বাক্যে নাট্যাচার্য্য আর্য্য গণদাসকে এই কথা জিজ্ঞাসা করিতে যাইতেছি। ( ত )

কৌমু। সখি, এইরূপ কার্য্যে ব্যাপৃত থাকায় রাজার নিকট তাহার অনুপস্থিতিসত্ত্বেও রাজার দর্শনপথে সে কি করিয়া পড়িল ? ( থ )

বকু। ও, মালবিকাকে রাজা দেবীর পার্শ্বে চিত্রিত দেখিয়াছেন।

কৌমু। কি রকম ? ( দ )

वकु। सुणाहि। चित्तसालं गदा देवी पच्चग्गवस्सरात्रं चित्तलेहं आआरिअस्स पलोअन्ती चिठ्ठदि, तहिं अन्तरे भट्टा उवट्ठिदो। [ शृणु। चित्रशालां गता देवी प्रत्ययवर्णरागां चित्रलेखां आचार्य्यस्य प्रलोकयन्ती तिष्ठति, अस्मिन्नन्तरे भर्त्ता उपस्थितः ] (ध)

कौमु। तदो तदो ? [ ततस्ततः ? ] (न)

वकु। उवआरागन्तरं एक्कासणोवविट्टेण भट्टिणा चित्त-गदाए देवीए परिअणमज्झगदं आससदारिअं देक्खिअ देवी पुच्छिदा। [ उपचारानन्तरं एकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजन-मध्यगतां आसन्नदारिकां दृष्ट्वा देवी पृष्टा ] (प)

---

(ध) शृणु, कथं दृष्टा मालविका तदाकर्णय इत्यर्थः। देवी महिषी चित्रशालां गता प्राप्ता सती यदा यस्मिन् काले, प्रत्ययः नूतनः वर्णरागः वर्णरञ्जनं यत्र तथाभूतं चित्रलेखं चित्राङ्कनं आचार्य्यस्य चित्रशिल्पिनः, प्रलोकयन्ती पश्यन्ती। तस्मिन् अन्तरे अवसरे भर्त्ता स्वामी अग्निमित्रः उपस्थितः उपगतः तत्रेति शेषः। तथाहि तदानीमेव अनाशंसितागमनः भर्त्ता तत्र उपस्थितः अभवदिति भावः।

(न) ततः ततः, तदनन्तरं किं वृत्तम् इदं कथय इति उत्कण्ठायां वीप्साप्रयोगः।

(प) उपचारानन्तरं यथायोग्याभ्यर्थनात् परम्। एकस्मिन् अभिन्ने आसने उपविष्टेन महिष्या सह एकमासनमध्यासीनेन भर्त्रा अग्निमित्रेण चित्रगतायाः चित्रफलके चित्रितायाः। परिजनानां परिचर्य्याकारिणां जनानां मध्यं मध्यभागं गतां आसन्नपरिचारिकां निकटस्थितां परिचारिकां प्रेक्ष्य देवी धारिणी पृष्टा जिज्ञासिता।

---

বকু। শোন, যখন মহিষী চিত্রশালায় যাইয়া আচার্য্যের নব বর্ণে রঞ্জিত চিত্র দেখিতেছিলেন, তখনই রাজা আসিয়া সেইখানে উপস্থিত হইলেন। (ধ)

কৌমু। তারপর, তারপর ? (ন)

कौमु। किं ति ? [ किमिति ? ] (फ)

वकु। अपुव्वा इअं दारिआ देवीए आसण्णा लिहिदा किंणामहेएत्ति। [ अपूर्वेयं दारिका देव्या आसन्ना लिखिता किंनामधेयेति ] (ब)

कौमु। आकिदिविसेसे आअरो पदं करेदि। तदो तदो ? [ आकृतिविशेषे आदरः पदं करोति। ततस्ततः ] (भ)

---

(फ) किं कीदृशं वस्तु अग्निमित्रेन पृष्टा देवीति शेषः।

(ब) किमित्यनेन जिज्ञासितं वस्तु प्रस्तौति—अपूर्वा इत्यादिना। अपूर्वा अतिरमणीया इयं दारिका बालिका परिजनानां मध्यवर्त्तिणी इयं परिचारिका। देव्याः आसन्ना अतिनिकटवर्त्तिणी लिखिता चित्रिता किं नाम धेया, अस्या किं नाम तदुच्यताम्। यद्यपि "आदौ वाच्यः स्त्रिया राग" इति नियमः अनेन विपर्य्यस्यति, तथापि नायिकाया महत्त्वप्रतिपादनाय अयं प्रक्रमः कवेरिति मन्तव्यम्।

(भ) आकृतिविशेषे अन्यविलक्षणाकृतौ अतिसुन्दरमूर्त्तावित्यर्थः। आदरः स्नेहः पदं करोति अधिरोहति। तथाहि सुन्दराकृतौ सौन्दर्य्यनिवन्धनमेव जनस्य प्रेमातिशयो जायते इति मालविकायां अतिसुन्दराकृतौ राज्ञः तथा आग्रहो जातः इति भावः। "पदं स्थाने परित्राणे व्यवसायोपदेशयोः। वाक्ये वस्तुनि शब्दे च पादतच्चिह्नयोरपि" इत्यजयः।

---

বকু। (তারপর) যথোপযুক্ত অভ্যর্থনার পর রাজা রাণীর সহিত এক আসনে উপবিষ্ট হইলেন এবং মহিষীর পরিজনগণের মধ্যে অবস্থিতা আসন্ন পরিচারিকাকে দেখিয়া রাণীর নিকট জিজ্ঞাসা করিলেন। (প)

কৌমু। কি জিজ্ঞাসা করিলেন? (ফ)

বকু। দেবীর অতি সন্নিকটে চিত্রিতা এই অপূর্ব্ব বালিকাটীর নাম কি? (ব)

वकु। तदो अवहीरिअवअणो भट्टा सङ्किदो देवीं पुणोवि अणुबन्धिदुं पउत्तो। तदो कुमारिए वसुलच्छीए आअक्खिदं,— अज्ज! एसा मालविअत्ति। [ततः अवधीरितवचनो भर्त्ता शङ्कितो देवीं पुनरप्यनुबन्धुं प्रवृत्तः। ततः कुमार्य्या वसुलक्ष्म्या आख्यातं—आर्य्य! एषा मालविकेति ] (म)

---

(म) ततः राज्ञः प्रश्नानन्तरं, भर्त्ता राजा अग्निमित्रः। अवधीरितं उत्तराप्रतिपादनेन अवज्ञातं वचनं प्रश्नवाक्यं यस्य तथाभूतः अप्राप्तप्रत्युत्तरः सन् अतः शङ्कितः शङ्कायुक्तः कथं श्रुत्वापि मद्वाक्यं देवी नोत्तरवाचं प्रतिपद्यते तत् कीदृशमत्र गूढ़कारणमित्येवं तर्काकुलचेता इत्यर्थः। अनुबन्धुं प्रष्टुं प्रवृत्तः, पुनरपि देवीमुक्तार्थं पृष्टवान् इति भावः। ततः राज्ञः पुनः प्रश्नानन्तरं, कुमार्य्या पञ्चवर्षवयोमध्यस्थितया राजकन्यया वसुलक्ष्म्या तदभिधानया आख्यातं कथितं,—आर्य्य, एषा दृश्यमाना रमणी मालविका तदभिधाना। कुमार्य्या इति विशेषणेन वसुलक्ष्म्याः शृङ्गारादिविषयकगूढ़ार्थविज्ञानविरहत्वेन च राज्ञीमनोगतं मालविकाया गोपनहेतुमविदितवत्या तन्नामप्रकाशनं सुसङ्गतं क्रियते। कुमारीलक्षणं यथा भागवतटीकायां श्रीधरस्वामिना उद्‌ङ्कितं—"कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमापञ्चदशात् यौवनन्तु ततः परम्"। अत्र कुमार्य्या वसुलक्ष्म्या मुखेन मालविकाया राजसमीपे स्वप्रकाशप्रस्तावेन दैवस्य एव अत्र कामचारः प्रतिपाद्यते, अन्यथा कथं वा तदानीं वसुलक्ष्मीर्वा तत्र उपस्थिता स्यात्, अन्यस्याः निपुणायाः कस्याश्चिदुपस्थितौ सा नूनं राज्ञीमनोगतं ज्ञात्वा नैवाकथयिष्यत् तथा।

---

কৌমু। রমণীর মূর্ত্তিতে স্বতই আদর আসিয়া থাকে। তারপর তারপর? (ভ.)

বকু। তদনন্তর মহিষী রাজার বাক্যের উত্তর না দেওয়ায় রাজা শঙ্কিত হইয়া দেবীকে পুনরায় জিজ্ঞাসা করিতে লাগিলেন। পরে কুমারী বসুলক্ষ্মী বলিল যে—আর্য্য, ইহার নাম মালবিকা। (ম)

कौमु। (सस्मितं)। सरिसं क्खु एदं वालभाअस्स। तदो अवरं कहेहि। [ सदृशं खलु तत् बालभावस्य। ततोऽपरं कथय ] (य)

वकु। किं अस्सं? सम्पदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि। [ किमन्यत्? साम्प्रतं मालविका सविशेषं भर्तुर्दर्शनपथात् रक्ष्यते ] (र)

कौमु। हला अणुचिट्ठ अत्तणो णिओअं। अहं वि एदं

---

(य) सस्मितं ईषद्धास्यसहकारेण, हास्यकारणञ्च वाचा एव व्यक्तम्। एतत् राज्ञीमनोगतस्य रहस्यस्य उद्‌भेदनं बालभावस्य शैशवस्य सदृशं योग्यं खलु। तथाहि राज्ञी सर्वथा मालविकाया राजसकाशे प्रच्छादनमभिप्रेतवती, तत्र कारणं प्राप्तपरिचयायां मालविकायां राज्ञः अनुरागसम्भावनाया: आशङ्का। तच्च सर्वं वाल्यवशादेव वसुलक्ष्मीर्न विज्ञातवतीति तथा कथितवतीति भाव:। ततः अपरं एतस्मात् परं किमभवत् तत् कथय। तथाहि यदि वसुलक्ष्मीर्बालिका नाभविष्यत् तदा नूनमिदं रहस्यं नोदभेदयिष्यत् इति भाव:।

(र) अन्यत् वक्ष्यमाणादिति शेष:। किं साम्प्रतं अधुना वसुलक्ष्म्या मालविकाया: परिचयदानानन्तरमित्यर्थ:। भर्तु: स्वामिन: दर्शनपथात् दृष्टिमार्गात् सविशेषं यत्नात् रक्ष्यते गोप्यते, तथाहि यथा यथा नात:परं पुनर्मालविकां राजा पश्येत् तथा तथा एव राज्ञी आचरति इति भाव:। "अपूर्व्वा इयं दारिआ" इत्यत: प्रक्रम्य "दंसणपहादो रक्खीअदि" इत्यन्तग्रन्थेन प्रतिपादिता मालविकायां राजानुरक्तिरेव नाटके वीजमिति प्रतिपत्तव्यम्।

---

কৌমু। ( ঈষৎ হাস্যসহকারে ) এইরূপ পরিচয় দেওয়া শৈশবেরই যোগ্য। তারপর আর কি হইল বল। ( য )

বকু। আর কি? সম্প্রতি মালবিকাকে ভর্ত্তার দৃষ্টিপথ হইতে বিশেষরূপে দূরে দূরে রাখা হইতেছে। ( র )

अङ्गुलीअअं देवीए उवणइस्सं। [हला, अनुतिष्ठ आत्मनो नियोगम्। अहमपीदमङ्गुलीयकं देव्यै उपनेष्यामि] इति निष्क्रान्ता। (ल)

बकु। (परिक्रम्यावलोक्य च)। एसो णट्टाआरिओ सङ्गीदसालादो णिग्गच्छदि। जाव से अत्ताणं दंसेमि। [एष नाट्याचार्य्यः सङ्गीतशालातो निर्गच्छति। यावदस्यात्मानं दर्शयामि] इति परिक्रामति। (व)

(प्रविश्य) गणदासः। कामं खलु सर्वस्यापि कुलविद्या बहुमता, न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम्। तथाहि— (श)

---

(ल) आत्मनः स्वस्य नियोगं कर्त्तव्यं कर्म्म अनुतिष्ठ साधय। देव्याः धारिण्याः। उपनेष्यामि सङ्गमयामि।

(व) नाट्याचार्य्यः अभिनयकलाशिक्षकः गणदास इत्यर्थः। सङ्गीतशालातः रङ्गगृहात्। अस्य गणदासस्य। आत्मानं दर्शयामि तस्य समीपे आत्मानं प्रकाशयामि इत्यर्थः। इति उक्त्वा परिक्रामति गणदासस्य प्रवेशदिशं उपसर्पति।

(श) कामं पर्य्याप्तं, सर्वस्यापि सकलस्य एव जनस्य कुलविद्या कुलक्रमागता विद्या बहुमता आदरविषयीभूता भवतीति शेषः। तथाहि कुलपरम्परा या विद्या प्रचलति तस्या निन्दनीयत्वेऽपि सर्व्वथा आदरेण ग्राह्यता वर्त्तते इति भावः। "सहजे किल जे विनिन्दिदे णहु से कम्म विवज्जणीअसे" इति तात्पर्य्यम्। किन्तु अस्माकं नटजातीनां नाट्यं अभिनयकलां प्रति गौरवं बहुमानः मिथ्या निरर्थकं न, न केवलं कुलक्रमागत-विद्येत्येव नाट्यं गौरवपदं, किन्तु गुणविवेचनयापीति भावः। तदेव समर्थयितु-मुपन्यस्यति तथाहीत्यादिना।

---

কৌমু। আচ্ছা, তুই তোর কাজে যা, আমিও এই অঙ্গুরীয়ক দেবীর নিকটে লইয়া যাই। (এই বলিয়া নিষ্ক্রান্ত হইল)। (ল)

বকু। (পরিক্রমণান্তর দেখিয়া) ঐ যে নাট্যাচার্য্য সঙ্গীতশালা হইতে নির্গত হইতেছেন। তাঁহার কাছে যাইয়া দেখা দিই (এই বলিয়া চলিল)। (ব)

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधकम् ॥४॥

[ अन्वयः । मुनयः इदं (नाट्यं) देवानां शान्तं चाक्षुषं क्रतुम् आमनन्ति । रुद्रेण उमाकृतव्यतिकरे स्वाङ्गे इदं द्विधा विभक्तम् । अत्र त्रैगुण्योद्भवं लोकचरितं नानारसं दृश्यते । ( अत एव ) एकमपि नाट्यं बहुधाः भिन्नरुचेः जनस्य समाराधकम् । (४) ]

---

४ । नाट्यस्य गौरवकारणानि विशेषेण व्यनक्ति—देवानामित्यादिना । मुनयः भरतादयः नाट्यशास्त्रप्रवक्तारः, इदं अस्मज्जातिविद्यारूपं नाट्यं अभिनयकलां शान्तं शान्तभावयुक्तं, कान्तमिति पाठे मनोहरम् । चाक्षुषं चक्षुरिन्द्रियगोचरं देवानां देवतानां क्रतुं अश्वमेधादिवत् तृप्तिसम्पादकं आमनन्ति ब्रुवते । तथाहि, यथा अश्वमेधादियागसम्पादनेन देवानां सुनिर्म्मलः परितोषः प्रादुर्भवति, तथैव नाट्यकलानुशीलनेन इति अस्माकमेषा जातिविद्या धर्म्मानुकूलतया सुतरां गौरवयोग्या इति भावः । अश्वमेधादयो यागाः अश्वादीनां समालम्भेन नैष्टुर्य्यभावसाध्या इदञ्च न तथा इति शान्तमित्यनेन प्रतिपाद्यते, अतएव यागादाधिक्यप्रत्ययात् व्यतिरेकः । अपिच रुद्रेण रुद्रदेवेन उमया गौर्य्या कृतः सम्पादितः व्यतिकरः मिलनं यत्र तथाभूते स्वस्य अङ्गे देहे अर्द्धनारीश्वरात्मके द्विधा ताण्डवलास्यभेदेन इदं नाट्यं विभक्तं कृतविभागतां नीतं ; तथाहि रुद्रस्य अर्द्धनारीश्वरस्य पुंदेहावच्छेदेन ताण्डवनृत्यकला नारीदेहावच्छेदेन च लास्यकला सुलग्ना, अतएव नाट्यकलायामुपयोगिनस्तद्विषयस्य अर्द्धनारीश्वरेण आभिनिवेशस्वीकारात् सुतरां गौरव-

---

( প্রবেশানান্তর ) গণদাস। সকল ব্যক্তিরই কুলপরম্পরাগত বিদ্যা আদরের বস্তু ; কিন্তু আমাদের যে নাট্যের প্রতি যে গৌরব, তাহা অনর্থক নহে। ( অর্থাৎ কেবল কুলক্রমাগত বিদ্যা বলিয়াই আমরা নাট্যের প্রতি অনুরক্ত নই, পরন্তু ইহার বহু গুণও আছে ) কারণ— ( শ )

योग्यता ज्ञातव्या। अपिच अत्र अस्मदुपन्यहीति नाट्यं त्रयो गुणाः सत्त्वरजस्तमांसि तान्येव त्रैगुण्यं तस्मात् उद्भवः यस्य तथाभूतं लोकानां चरितं स्वभावः नानारसं बहुलरसयुक्तं दृश्यते ; तथाहि सत्त्वगुणप्रधानस्य चरितं निर्म्मलं शमरमादियुक्तं, रजोगुणप्रधानस्य चरितं क्रोधादियुक्तमित्येवं लोकचरितानां नानारसता प्रतिपद्यते अभिनेयानां भिन्नप्रकृतिकत्वात्। तथाहि रामादीनां सत्त्वगुणप्रधानचरितानाम् चरितेषु शान्तवात्सल्यादिः, रावणादीनां रजोगुणप्रधानचरितानां वीरादिः, दुष्टानां तमोगुणप्रधानचरितानां परस्त्रीसमास्कन्दनादिहेतुभूतशृङ्गारादिः इत्येवं नानारसाः अत्रैव नाटके तिष्ठन्ति ; तदेव महापुण्यजन्यनानारसानुभूतिसम्भवसत्त्वात् गौरवयोग्यता इति तात्पर्य्यम्। अतः नाट्यं अभिनयकला एकं अनन्यमाहात्म्यकं अपि, भिन्ना अन्यविलक्षणा रुचिः अभिलाषः यस्य तथाभूतस्य जनस्य बहुधा बहुप्रकारेण समाराधकं चित्तसन्तोषप्रदम्। तथाहि केचित् शृङ्गारे केचित् वीरे परे च शान्तरसादौ प्रणयिनः, अत तेषां तेषां सर्वेषामेव रसानां समन्वयो वर्त्तत इति सर्वेषामेव तेषामिदं प्रीतिं सुमहतीमुत्पादयतीति अनन्यविलक्षणमेवेदं नाट्यं समादरभागिति भावः। सर्व्वभावानां नाट्ये अवस्थितौ प्रमाणं यथा भारतीये—"सर्वोपदेशजननं नाट्यमेतद्भविष्यति।
न तज्ज्ञानं न तच्छिल्पं नासौ विद्या न सा कला। नासौ योगो न तत् कर्म्म नाट्येऽस्मिन् यन्न दृश्यते"। इति।

अत्र इदंपदप्रतिपाद्ये नाट्ये क्रतुत्वारोपात् तत्र च अधिकविशेषणस्य शान्तत्वस्य चाक्षुषत्वस्य च आरोपात् अधिकारूढवैशिष्ट्य रूपकम्। नाट्योत्कर्षप्रतिपादनकार्य्यं प्रति क्रतुत्वारोपादिकारणोपन्यासात् समुच्चयः। भिन्नरुचीनामपि जनानां बहुधा चित्ताराधनरूपकार्य्यं प्रति पूर्व्वपूर्व्ववाक्यार्थस्य हेतुत्वप्रत्ययात् वाक्यार्थहेतुकं काव्यलिङ्गम्। प्रागुक्ताधिकारूढवैशिष्ट्यरूपकेण अश्वमेधापेक्षया नाट्यस्य उत्कर्षप्रतीतेः व्यतिरेको व्यज्यते इत्यलङ्कारेण अलङ्कारध्वनिः। इदं शब्दस्य एकेनैव प्रकारेण पुनरुक्तत्वात् अनवीकृतत्वदोषः। एकमित्युत्तरं प्रयोक्तव्यस्य अपिशब्दस्य ततपूर्वं प्रयोगात् अक्रमतादोषश्च। वृत्तं शार्द्दूलविक्रीड़ितम्।

---

৪। মুনিগণ এই নাট্যকে দেবতাদিগের প্রীতিপ্রদ রমণীয় দর্শন-

বকুলা। (উপেত্য)। অজ্জ! বন্দামি। [আর্য্য! বন্দে]

গণ। ভদ্রে! চিরং জীব।

বকুলা। অজ্জ দেবী পুচ্ছদি—অবি উবদেসগহণে ণ অদিকিলিস্সদি বো সিস্সা মালবিঅত্তি। [আর্য্য দেবী পৃচ্ছতি—অপ্যুপদেশগ্রহণে নাতিক্লিশ্যতি বঃ শিষ্যা মালবিকেতি] (ষ)

গণ। ভদ্রে! বিজ্ঞাপ্যতাং দেবী, পরমনিপুণা মেধাবিনী চেতি, কিং বহুনা? (স)

---

(ষ) দেবী মহিষী ধারিণী। অপিশব্দঃ প্রশ্নে। উপদেশস্য শিক্ষণীয়বিষয়স্য গ্রহণে শিক্ষাবিষয়ে। বঃ যুষ্মাকং, গৌরবে বহুবচনম্। শিষ্যা ছাত্রী মালবিকা, ন অতি ক্লিশ্যতি ক্লেশং লভতে, অনায়াসেন সা ভবতা শিক্ষিতস্য বিষয়স্য ধারণাং কর্ত্তুং শক্নোতি ন বা ইতি ভাবঃ।

(স) দেবী মহিষী। বিজ্ঞাপ্যতাং বক্ষ্যমাণং বিষয়মিতি শেষঃ। পরমনিপুণা নিতরাং চাতুর্য্যবতী মেধাবিনী মালবিকেতি শেষঃ। তথাহি অহং মালবিকায়ৈ যৎ যৎ বস্তু উপদিশামি, তৎ তৎ সা স্বীয়মেধাপ্রকর্ষেণ পরমং নৈপুণ্যং দর্শয়তীতি ভাবঃ।

---

যোগ্য ক্রতুরূপে বর্ণনা করেন। রুদ্রদেব উমার সম্মিলনে অর্দ্ধনারীশ্বর হইয়া স্বীয় অঙ্গে লাস্য ও তাণ্ডব ভেদে এই নাট্যকে দ্বিধা বিভক্ত করিয়াছেন। এই নাট্যে সত্ত্ব রজঃ ও তমোগুণ সম্বন্ধি লোকচরিত্রসম্বলিত নানা রসের প্রত্যক্ষ হইয়া থাকে। অতএব লোকসমূহ ভিন্নরুচি হইলেও একমাত্র এই নাট্যই সর্ব্বপ্রকারে লোকের প্রীতিপ্রদ।

বকু। আর্য্য, নমস্কার।

গণ। ভদ্রে! চিরজীবিনী হও।

বকু। আর্য্য, মহিষী জিজ্ঞাসা করিতেছেন, যে—ভবদীয় শিষ্যা মালবিকার শিক্ষাগ্রহণবিষয়ে অধিক ক্লেশ হইতেছেনা ত? (ষ)

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला ॥५॥

[ अन्वयः । मया प्रयोगविषये यत् यत् भाविकं तस्यै उपदिश्यते, बाला तत्तद्विशेषकरणात् मे प्रत्युपदिशति इव । ५ । ]

---

बहुना अधिकेन वचसा किं न किमपि प्रयोजनमिति, किन्तु वक्ष्यमाणं स्वल्पमेव वचनं तत्प्रकर्षे पर्य्याप्तं, निवेद्यताञ्च तदेव देव्यै इति भावः ।

तदेव स्वल्पं मालविकाप्रकर्षविज्ञापकं वस्तु प्राह—यदित्यादिना । मया शिक्षकेण प्रयोगविषये अभिनयकर्म्मणि तस्यै मालविकायै यत् यत् भाविकं शृङ्गारादानुकूलभावयुक्तं वस्तु उपदिश्यते शिक्षणाय कथ्यते । केचित्तु भाविकं भावनासम्पदं नृत्यमित्यर्थं वर्णयन्ति, तद् यथा—"आङ्गिकाभिनयप्रायमल्पवाचिकसात्त्विकम् भावानामास्पदं नृत्यं पदार्थव्यञ्जनात्मकम् ॥" इति । तथाहि यो यो नृत्यविशेषो मया तस्यै उपदिश्यते इति भावः । तस्य तस्य भाविकविषयस्य विशेषः अतिशयः उपदिष्टविषयेभ्यो वैलक्षण्यं वा, तत्करणात् तदुद्भावनात् बाला शैशवावस्थामेकान्ततः अपरित्यजन्त्यपि मालविका मे मह्यं प्रत्युपदिशतीव गुरुरिव शिक्षयतीव । तथाहि मया यद् वस्तु उपदिश्यते तस्मादपि समुत्कर्षातिशयेन सा तद्वस्तु गृह्णाति गृहीतार्थस्य च तया प्रयुक्तस्य दर्शनेन अहं नूतनं किमपि प्रकृष्टं वस्तु तस्याः सकाशात् शिक्षे, एवंविध एव तस्याः बुद्धिप्रकर्ष इति भावः । एतेन मालविकाया प्रयोगग्रहणे परमं नैपुण्यमभिव्यक्तम् । बाला इति विशेषणेन बालाया एव अस्या एवंप्राया शक्तिर्न जाने यदेयं परिणतवया भविष्यति तदाकीदृशनैपुण्यमर्ज्जयिष्यतीति भावो लभ्यते । अत्र मालविकायां गणदासप्रत्युपदेशरूपक्रियाकारित्वसम्भावनाया इवशब्देन व्यञ्जनात् भावाभिमानिनी क्रियोत्प्रेक्षा, तया च गणदासादपि मालविकाया नैपुण्यातिशयप्रतीत्या व्यतिरेको व्यज्यते इत्यलङ्कारेण अलङ्कारध्वनिः । आर्य्याजातिः ॥ ५

---

গণ। ভদ্রে, মহিষীকে জানাইবে যে—মালবিকা শিক্ষাগ্রহণবিষয়ে অত্যন্ত নিপুণা এবং তাহার ধারণাশক্তিও অসীম। অধিক কি? (স)

বকুলা। (আত্মগতম্)। অদিক্কন্তং বিঅ ইরাবদীং পেক্খামি। (প্রকাশম্)। কিদত্থা দাণিং বো সিস্সা, জাএ গুরুঅণো এবং তুস্সদি। [অতিক্রান্তামিবৈরাবতীং প্রেক্ষে। কৃতার্থা ইদানীং বঃ শিষ্যা, যস্যাং গুরুজন এবং তুষ্যতি] (ছ)

গণ। ভদ্রে! তদ্বিধানামসুলভত্বাৎ পৃচ্ছামি,—কুতো দেব্যা তৎ পাত্রমানীতম্? (জ)

---

(ছ) আত্মগতং স্বগতং "অশ্রাব্যং খলু যদ্বস্তু তদিহ স্বগতং মতম্" ইতি। ইরাবতীং তদাখ্যাম্ অগ্নিমিত্রস্য রাজ্ঞীং নৃত্যবিদ্যাসুনিপুণামিত্যর্থঃ। অতিক্রামন্তীং কলাকৌশলেন উল্লঙ্ঘয়ন্তীমিব প্রেক্ষে, তথাহি ইরাবত্যপেক্ষয়াপি মালবিকা উৎকৃষ্টতরা ইতি ভাবঃ। এতেন ইরাবত্যপেক্ষয়াপি অস্যাঃ উপরি রাজ্ঞঃ অগ্নিমিত্রস্য পরমঃ প্রণয়ঃ সুসমঞ্জসঃ ক্রিয়তে, স চ পরতো ব্যক্তীভবিষ্যতি। ইদানীং ভবতাম্ এবং সন্তোষোদয়ে সতীত্যর্থঃ। বঃ যুষ্মাকং শিষ্যা অত্রাপি গৌরবে বহুবচনং মন্তব্যম্। কৃতার্থা কৃতকৃত্যা, যস্যাং বঃ শিষ্যায়াং গুরুজনঃ শিক্ষকজনঃ এবং অতিমাত্রং তুষ্যতি সন্তুষ্টান্তঃকরণো ভবতি, তথাহি যত্র শিষ্যজনে গুরুজনস্য সন্তোষঃ স এব বরং, ইয়ঞ্চ মালবিকা তথা জাতা ইতি ভাবঃ।

(জ) তদ্বিধানাং তাদৃশীনাং মালবিকাতুল্যানাং জনানাম্ ইত্যর্থঃ। অসুলভত্বাৎ অনায়াসং লব্ধুমশক্যত্বাৎ দুর্লভত্বাদিত্যর্থঃ। পৃচ্ছামি বক্ষ্যমাণমিতি শেষঃ। দেব্যা

---

আমি মালবিকাকে অভিনয়বিষয়ে ভাবসম্বলিত যে যে বিষয় শিক্ষা দিই, সেই সেই বিষয়ে বৈলক্ষণ্য উদ্ভাবন করিয়া সে বালিকা হইয়াও আমাকে যেন শিক্ষা দেয়॥ ৫

বকু। (স্বগত) মালবিকা যেন ইরাবতীকে অতিক্রম করিতেছে বলিয়া মনে হয়। (প্রকাশ্যে) আপনার ছাত্রী কৃতার্থ হইয়াছে, কারণ তাহার প্রতি আপনি এরূপ তুষ্ট হইয়াছেন। (হ)

बकुला। अत्थि देवीए वस्सावरो भादा वीरसेणो णाम। सो भट्टिणा अन्तवालदुग्गे णम्मदातीरे ठाविदो। तेण सिप्पाहिआरे जोग्गा इअं दारिअत्ति वहिणीए देवीए उवाअणं पेसिदा। [ अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम। स भर्त्रा अन्तपालदुर्गे नर्म्मदातीरे स्थापितः। तेन शिल्पाधिकारे योग्येयं दारिकेति भगिन्या देव्या उपायनं प्रेषिता ] (क)

---

महिष्या धारिण्या तत् पात्रं मालविकारूपं शिक्षापात्रं कुतः कस्मात् स्थानात् आनीतम्। तथाहि ईदृशं वस्तु न सर्व्वत्र मिलति, यत्र मिलति तत् सुतरां प्रशस्तिमद्देशस्थानम्; अतः तस्य स्थानस्य नाम श्रोतुमभिलषामीति भावः।

(क) वर्णेन अवरः हीनः स्वापेक्षया निकृष्टवर्णजातः, तथाहि आदौ असवर्णविवाहः प्रचलित आसीत्, तदवसरे देव्याः जनकेन कस्याश्चित् वैश्यायाः पाणिग्रहणात् तद्गर्भे च वीरसेनस्य जातत्वात् वर्णावरभ्रातृत्वमस्य। सः वीरसेनः भर्त्त्रा स्वामिना अग्निमित्रेण अन्तः सीमा राज्यस्येति शेषः, तं पालयति शत्रुकवलात् रक्षति यत् तत् अन्तपालं दुर्गं तस्मिन्। नर्म्मदायाः तदाख्यायाः नद्याः तीरे स्थापितः तदध्यक्षत्वेन प्रतिष्ठितः। तेन अन्तपालदुर्गाध्यक्षेण वीरसेनेन इयं दारिका बालिका शिल्पाधिकारे कलाविद्याशिक्षायां योग्या इति ज्ञात्वा भगिन्यै देव्यै महिष्यै धारिण्यै उपायनं उपहारः प्रेषिता।

ननु पूर्व्वपूर्व्वयुगे असवर्णविवाहस्य शास्त्रतो व्यवहारतश्च अविरोधेऽपि "समुद्रयात्रा-स्वीकारः कमण्डलुविधारणम्, द्विजानामसवर्णासु कन्यासूपयमस्तथा" इत्यादितः कलेरादौ महात्मभिः, "निवर्त्तितानि कर्म्माणि व्यवस्थापूर्वकं बुधैः"। इत्यादिनिषेधश्रवणेन अस्य वृत्तस्य कलियुगसम्बन्धितया कथं सामञ्जस्यम् इति चेन्न कलियुगे असवर्णविवाहस्य निषिद्धत्वेऽपि न सर्वत्र देशे निषेधः प्रावर्त्तत ततश्च "येषु स्थानेषु यच्छौचं धर्म्माचारश्च यादृशः। तत्र तन्नावमन्येत धर्म्मस्तत्रैव तादृश" इत्यादिनियमतो दोषाभावः।

---

গণ। মালবিকার ন্যায় ব্যক্তি সুলভ নহে। অতএব আমি জিজ্ঞাসা করি যে মহিষী এই সৎপাত্রটী কোথা হইতে আনিলেন? (ক)

गण। (स्वगतम्।) आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां सम्भावयामि। (प्रकाशम्)। भद्रे! मयाऽपि यशस्विना भवितव्यम्। यतः, (ख)

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥६॥

[अन्वयः]। पयोदस्य जलं समुद्रशुक्तौ न्यस्तम् मुक्ताफलताम् इव आधातुः शिल्पं पात्रविशेषे न्यस्तं गुणान्तरं व्रजति ॥ ६ ।]

---

(ख) आकृतिविशेषात् अस्या आकारस्य साधारणतो वैलक्षण्यात्, अस्या आकारगतासाधारण्यादित्यर्थः। एनाम् मालविकां अनूनम् अनपकृष्टं वस्तु कुलशीलादिकं यस्याः ताम्। बहुव्रीहौ कप्रत्ययः। प्रशस्तकुलशीलसमन्वितामित्यर्थः। सम्भावयामि तर्कयामि, तथाहि अस्या आकृतेः महत्त्वं विविच्य नूनमियं महाकुलसम्भूता साधुशीला चेति निरूपयामि इति ईदृश्या आकृतेः नीचजातौ दुःशीले च असम्भवादिति भावः।

मया शिक्षकेनापि यशस्विना कीर्त्तिमता भवितव्यम्। तथाहि सच्छिष्यमुपदिश्य तस्य उत्कर्षसम्पादनेन परिचितविज्ञभावप्रकर्षो यशस्वी एव गुरुः स्यादिति मयापि मालविकायाः प्रकर्षेण तथा इति भावः। यतः यस्मात् हेतोः, इदञ्च परवर्त्तिश्लोकार्थे अन्वेतव्यम्।

६। अथ यशोलाभे हेतुमाह—पात्रेत्यादिना। पयोदस्य जलदस्य जलं समुद्रशुक्तौ समुद्रस्थितायां शुक्तिकायां न्यस्तमिति शेषः मुक्ताफलतां मौक्तिकत्वमिव आधातुः

---

বকু। বীরসেননামক মহিষীর একজন অসবর্ণমাতৃগর্ভজাত ভ্রাতা আছে, রাজা তাহাকে নর্ম্মদার তীরে সীমান্তস্থিত দুর্গে স্থাপন করিয়াছেন। তিনি 'এই বালিকা কলাবিদ্যা শিক্ষা করার সুযোগ্য' দেখিয়া ইহাকে ভগিনী মহিষীর নিকট উপহাররূপে পাঠাইয়াছেন। (ক)

গণ। (স্বগত) ইহার মনোরম আকৃতিদর্শনে ইহাকে সৎকুলজাতা বলিয়া মনে হয়। (প্রকাশ্যে) ভদ্রে! ইহা দ্বারা আমিও যশস্বী হইব। (খ)

वकुला। अध इं। अह कहिं वो सिस्सा? [अथ किम। अथ कस्मिन् वः शिष्या?] (ग)

गण। इदानीमेव पञ्चाङ्गादिकमभिनयमुपदिश्य मया 'विश्रम्यता'मित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति। (घ)

---

आधानकर्तुः प्रकृते शिक्षकस्य इत्यर्थः। शिल्पं कलाविद्या पात्रविशेषे सुजने विलक्षणगुणसम्पन्ने शिष्ये इत्यर्थः। न्यस्तं उपाहितं सत् गुणान्तरं गुणविशेषं व्रजति लभते। तथाहि यथा स्वातिनक्षत्र समुद्रशुक्तिकायां मेघजलपातेन तदैव जलं मुक्ता भवति तथैव शिक्षकस्य शिक्षा सत्पात्रे न्यस्ता ततोऽतिप्रकर्षातिशयं गच्छति तेन च आधातुरुत्कर्ष एव प्रतीतः सन् परमं यशस्तस्य निर्व्वर्त्तयतीति मया मालविकायां विद्यां निष्पाद्य तथा यशो लब्धव्यमिति भावः। अत्र श्रौती पूर्णोपमालङ्कारः।

(ग) इदानीं वः युष्माकं शिष्या मालविका कुत्र वर्त्तते इति शेषः।

(घ) इदानीमेव न तु कालविलम्बेनापीत्यर्थः। पञ्चाङ्गादिकं; पञ्चाङ्गाभिनयो यथा—"चिन्ताचिन्हं हस्तपादैरङ्गै श्चेष्टादि साम्यतः। पात्राद्यवस्थाकरणं पञ्चाङ्गोऽभिनयो मतः॥" इति।

अथवा पञ्चाङ्गानि प्रेरणस्य अङ्गपञ्चकम् इत्यर्थः। तद् यथा—"नृत्यं तथा च कैवारो मर्म्मरो जागरं तथा। गीतञ्चेति समाख्यातं प्रेरणस्याङ्गपञ्चकम्" इति। विश्रम्यताम् विश्रामः क्रियताम् इत्यभिहिता कथिता सती। दीर्घिकायाः उद्यानगतप्रशस्त-सरोवरस्य अवलोकनाय दर्शनाय तत्रत्यतरङ्गरङ्गादिपर्य्यवेक्षणाय इत्यर्थः, यः गवाक्षः वातायनं तत्र गता, वापीविभ्रमदर्शनोत्सुकतया गवाक्षमास्थिता इत्यर्थः। प्रवातं

---

কারণ, উপদেষ্টার শিক্ষা বিশিষ্ট পাত্রে ন্যস্ত হইলে তাহা গুণান্তর প্রাপ্ত হয়। যেরূপ স্বাতী নক্ষত্রে মেঘের জল শুক্তিতে পড়িলে তাহা মুক্তারূপে পরিণত হয়॥ ৬

বকুলা। তা' বটে। আর্য্য! আপনার শিষ্যা কোথায়? (গ)

গণ। সম্প্রতিই পঞ্চাঙ্গ প্রভৃতি অভিনয় শিক্ষা দিয়া "এখন যাইয়া

বকুলা। তেন হি অনুজাণাদু মং অজ্জো জাব সে অজ্জস্স পরিতোসনিবেদণেন উস্সাহং বড্ঢেমি। [ তেন হি অনুজানাতু মামার্য্যঃ, যাবদস্যা আর্য্যস্য পরিতোষনিবেদনেন উৎসাহং বর্দ্ধয়ামি ] (ঙ)

গণ। দৃশ্যতাং সখী। অহমপি লব্ধক্ষণঃ স্বগেহং গচ্ছামি। ( ইতি নিষ্ক্রান্তৌ )। (চ)

মিশ্রবিষ্কম্ভকঃ। (ছ)

---

প্রকৃষ্টং বায়ুং আসেবমানা সম্যক্ উপভুঞ্জানা তিষ্ঠতি। তথাহি সা দীর্ঘিকাবলোকন-গবাক্ষে সম্প্রতি বর্ত্তত ইতি ভাবঃ।

(ঙ) অস্যাঃ মালবিকায়াঃ, আর্য্যস্য ভবতঃ পরিতোষস্য তস্যা উপরি সন্তুষ্টেঃ নিবেদনেন বিজ্ঞাপনেন উৎসাহং বর্দ্ধয়ামি গুরুতোষেণ শিষ্যস্য উৎসাহঃ বর্দ্ধত ইতি ভাবঃ। কেচিত্তু পরত এব "দৃশ্যতাং সখী"তি বচনাৎ অত্র অস্যা ইত্যনেন দেব্যা ধারিণ্যা উপন্যাসঃ, তথাহি ধারিণীসমীপং গত্বা তদনুগতজনস্য উপরি তব পরিতোষাতিশয়ং নিবেদ্য আনন্দং জনয়ামি, আশ্রিতস্য অনুগতস্য উন্নতিশ্রবণাতঃ পরমহর্ষসম্ভবাদিত্যর্থঃ।

(চ) সখী মালবিকা পক্ষে ধারিণী, দৃশ্যতাং অবলোক্যতাং তয়া সহ সাক্ষাৎকারানন্তরং মম সন্তোষো নিবেদ্যতাম্ ইত্যর্থঃ। অহমপি লব্ধঃ প্রাপ্তঃ ক্ষণঃ অবসরঃ যেন তথাভূতঃ প্রাপ্তকর্ম্মাবকাশঃ সন স্বগেহং নিজালয়ং গচ্ছামি। অহমপি লব্ধক্ষণ ইত্যস্য ভিন্নবাক্যত্বে কেচিদেবম্ অর্থং কুর্বন্তি যথা—লব্ধঃ ক্ষণঃ উৎসবঃ শিষ্যায়াঃ প্রকর্ষাতিশয়েন পরমানন্দঃ যেন তথাভূতঃ জাতঃ অস্মীতি শেষঃ। "সময়োৎসবয়োঃ ক্ষণ"ইতি কোষবচনম্।

---

বিশ্রাম কর" এই কথা বলায় মালবিকা দীর্ঘিকা-দর্শন-যোগ্য গবাক্ষে যাইয়া নির্ম্মল বায়ু সেবন করিতেছে। ( ঘ )

বকুলা। তবে আর্য্য আমাকে আজ্ঞা করুন, আমি যাইয়া আপনার পরিতোষ তাহার নিকট বলিয়া উৎসাহ বর্দ্ধন করি। ( ঙ )

গণ। যাও, তুমি সখীর সহ সাক্ষাৎ কর, আমি অবসর লাভ করিয়াছি, অতএব স্বগৃহে গমন করি। ( দুইজনে নিষ্ক্রান্ত হইল )। ( চ )

[ ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा । (ञ) ]

राजा । (अनुवाचितलेखममात्यं विलोक्य) । **वाह्नतक ! किं प्रतिपद्यते वैदर्भः ? (झ)**

---

इति एतद्वाक्यानन्तरं, निष्क्रान्तौ निष्क्रान्तश्च निष्क्रान्ता च तौ, बकुलावलिका गणदासश्च इति स्त्रिया: पुमानेकशेषे इति पुमेकशेषः ।

(छ) विष्कम्भकलक्षणन्तु—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः । सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः । मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः" इति ॥ अत्र नीचपात्रे कौमुदिका बकुलावलिका च, मध्यमं पात्रं गणदासः, तैः वृत्तवर्त्तिष्यमाणानां मालविकायाः शिक्षापाटवगवाक्षाश्रयणराजानुरागादीनां निदर्शनात् सङ्कीर्णत्वात्मकमिश्रत्वं विष्कम्भकस्य ।

(ञ) एकान्ते एकपार्श्वे स्थिताः परिजनाः यस्य तथाभूतम् । लेखेन पत्रेण युक्तः हस्तः यस्य तथाभूतः, इति मध्यपदलोपी समासः । अथवा लेखो हस्ते यस्य तथाभूत इति व्यधिकरणबहुव्रीहिः । अन्वास्यमानः किञ्चिदिव पश्चादुपविश्य सेव्यमानः । अथवा अन्वास्यमानः सहैव स्थित्वा सेव्यमानः नतु साधारणपरिजनवत् एकान्तावस्थानेन इति भावः ।

अत्र स्वभावत आस्‌धातोरकर्म्मकत्वेऽपि अनूपसर्गपूर्वकत्वेन अर्थविशेषवत्त्वात् सकर्म्मकत्वम् । प्रविशति रङ्गस्थानस्थितदर्शकानां दृष्टिगोचरो भवति । प्रपूर्वविश्‌धातोर्नाटकादौ दृष्टिगोचरत्वरूपार्थः रूढ्या जहत्स्वार्थलक्षणया प्रतीयते, शक्यार्थस्तु अभ्यन्तरप्रवेश एव ।

(झ) अनुवाचितः राज्ञः स्वयं पाठानन्तरं स्वयमेव पठितः लेखः पत्रं येन तथाभूतः प्रथमतो राजा पत्रं स्वयं पपाठ, ततः पत्रार्थविवेकाय मन्त्रिहस्ते पाठाय तत् दत्तवान् ;

---

মিশ্র বিষ্কম্ভক । ( ছ )

[ পরে রাজা প্রবেশ করিলেন, তাহার পরিজনবর্গ একপার্শ্বে রহিয়াছে, মন্ত্রী পত্রহস্তে রাজার ঈষৎ পশ্চাৎ ভাগে বর্ত্তমান । ( জ ) ]

অমাত্য:। দেব! আত্মবিনাশম্। (ঞ)

রাজা। নির্দেশমিদানীং শ্রোতুমিচ্ছামি। (ট)

অমাত্য:। ইদমিদানীমনেন প্রতিলিখিতম্—"পূজ্যেনাহমাদিষ্ট:,—'পিতৃব্যপুত্রো ভবত: কুমারো মাধবসেন: প্রতিশ্রুতসম্বন্ধো মমোপান্তিকমুপসর্পন্নন্তরা ত্বদীয়েনান্তপালেনাবস্কন্দ্য গৃহীত:; স ত্বয়া মদপেক্ষয়া সকলত্রসোদর্য্যো মোচয়িতব্য'

---

স্তোঽপি নিভৃতং পপাঠ ইতি মন্তব্যম্। অনুবাচিতলেখমিতি বিশেষণং রাজ্ঞ: প্রশ্নোপযোগার্থম্, অন্যথা প্রশ্নোত্তরস্য তেন দানমসম্ভবমেব স্যাত্। বাহং বাহং শত্রুগণানাং বাহুবলমিত্যর্থ:, তকতি হসতি পরাভবতীত্যর্থ:, য: তস্য সম্বোধনম্। "বাহো বাহৌ পুমান্ মানভেদে বৃষতুরঙ্গয়ো"রিতি রভস:। বৈদর্ভ: বিদর্ভরাজ: যজ্ঞসেন: কিং প্রতিপদ্যতে অভিসন্দধাতি অস্মাস্ত ইতি শেষ:। অথবা কিং প্রতিপদ্যতে নির্দ্ধারয়তি কিং বিবিচ্য অস্মাসু এবং পত্রমারোপিতম্ প্রতি জ্ঞাতুমিচ্ছামীতি ভাব:।

(ঞ) দেব মহারাজ, ইতি রাজ্ঞ: সম্বোধনম্। তথাচ দর্পণে—"রাজা স্বামীতি দেবেতি ভৃত্যৈ"রিতি। আত্মন: স্বস্য বিনাশং প্রাণচ্যুতিং প্রতিপদ্যতে অভিসন্দধাতি, তথাহি যথা অনেন ভবতি পত্রমারোপিতম্ তথা মন্যে নূনময়মাত্মনৈব বিনাশমভিকাঙ্ক্ষতি অন্যথা কথমেবং ভবন্মর্য্যাদামতিক্রামেত্ ইতি ভাব:।

অমাত্যানামনীচপুরুষত্বাত সংস্কৃতভাষা পাঠ্যা, তথাচ "পুরুষাণামনীচানাং সংস্কৃতং স্যাত্ কৃতাত্মনাম্"। ইতি।

(ট) নির্দিশ্যতে য: স: নির্দেশ: তং, সংবাদবিশেষং, অভিসন্ধিভেদং বা শ্রোতুমিচ্ছামি; কো নাম অভিসন্ধি: পত্রে আরোপিত:, তং ব্রূহি ইতি ভাব:।

---

রাজা। (অমাত্যের পত্র পাঠ শেষ হইয়াছে দেখিয়া) বাহতক, বিদর্ভরাজের কি মন্তব্য স্থির হইল? (ঝ)

অমাত্য। মহারাজ, তিনি নিজের মৃত্যু কামনা করিয়াছেন। (ঞ)

রাজা। তিনি কি লিখিয়াছেন—আমি শুনিতে চাহি। (ট)

इति। एतन्ननु वो विदितं यत्तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः, अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति। सोदरा पुनरस्य ग्रहणविप्लवे विनष्टा। तदन्वेषणाय यतिष्ये। अथवा अवश्यमेव माधवसेनो मया पूजेन मोचयितव्यः। श्रूयतामभिसन्धिः। (ठ)

---

(ठ) अनेन वैदर्भेण इदानीं प्रत्युत्तरावसरे इदं वक्ष्यमाणं वस्तु प्रतिलिखितं प्रत्युत्तर-वचनतया प्रतिपादितम्। किन्तत् इत्याह—पूजेन इत्यादिना मोचयितव्य इत्यन्तेन। पूजेन मानेन भवता अग्निमित्रेण अहं विदर्भराजः यज्ञसेनः आदिष्टः आज्ञप्तः, भवतः पितृव्यपुत्रः पितृभ्रातृपुत्रः, माधवसेनः, तदाख्यः, प्रतिश्रुतः प्रतिज्ञातः सम्बन्धः वैवाहिकसम्पर्कः येन तथाभूतः मह्यं स्वभगिनीं मालविकां दास्यतीत्येवं कृताङ्गीकार-वचन इत्यर्थः। मम अग्निमित्रस्य उपान्तिकं समीपम् उपसर्पन् आगच्छन् अन्तरा पथिमध्ये त्वदीयेन त्वत्सम्बन्धिना अन्तपालेन सीमान्तदुर्गपालेन अवस्कन्द्य आक्रम्य गृहीतः अवरुद्धः। सः माधवसेनः तव पितृव्यपुत्रः, मदपेक्षया मत्स्नेहेन मदनुरोधेन वा सकलत्रसोदर्यः कलत्रेण स्त्रिया सहोदरया च सह मोचयितव्यः बन्धमुक्तः कर्त्तव्य इति, इति शब्दः अग्निमित्रलिखितवाक्यावसानसूचकः।

एतदित्याद्यारभ्य "बन्धनात् सद्य" इत्यन्तं यज्ञसेनस्य स्वीयमतंप्रतिपत्तव्यम्। ननु एतत् वक्ष्यमाणं वस्तु वः युष्माकं विदितम् अवगतम्। यत् तुल्याभिजनेषु सदृशवंशेषु वंशमर्यादया समेषु इत्यर्थः। भूमिधरेषु राजसु राज्ञां वृत्तिः अनुरागो विरागो वा, तथाहि राजानः तुल्याभिजनैरेव भूमिपालैः सह सम्बन्धसूत्रेण बद्धा भवन्ति, तथाभूतैरेव च पितृव्यपुत्रादिभिः स्वतो विरोधं गच्छन्ति इत्यर्थः। अतएव सहजवैराश्रयेण पितृव्यपुत्रेण माधवसेनेन सह मम एतावान् विरोध इति भावः। अतः अस्मात् हेतोः तव वैरस्य स्वाभाविकत्वादित्यर्थः। अत्र अस्मिन् विषये पूज्यः मान्यः भवान् मध्यस्थः उदासीनः एकतरपक्षाश्रयणात् विरत इत्यर्थः। भवितुमर्हति, ननु माधवसेन-पक्षाश्रयणेन मम विरोधकारीति भावः। अस्य सोदरा सहोदरा भगिनी मालविका ग्रहणविप्लवे माधवसेनस्य संयमनवेलायां समुत्पन्ने उपद्रवे विनष्टा अदर्शनं गता,

আর্য্যসচিবং মুঞ্চতি যদি পূজ্যঃ সংযতং মম শ্যালম্।
মোক্তা মাধবসেনং ততোঽহমপি বন্ধনাৎ সদ্যঃ ॥ ৭ ॥ ইতি।”

[ অন্বয়ঃ। যদি পূজ্যঃ সংযতং মম শ্যালম্ আর্য্যসচিবং মুঞ্চতি, ততঃ অহমপি মাধবসেনং সদ্যঃ বন্ধনাৎ মোক্তা। ৭। ]

---

অত্র বিনষ্টেত্যনেন মরণরূপামঙ্গলার্থব্যঞ্জকত্বাদশ্লীলতাদোষঃ। অতএব মাধবসেনস্য মোচনসম্ভাবনায়ামপি সোদরাসহিতস্যাস্য মোচনমসম্ভবমেব তস্যা এব অলাভাৎ। তস্যাঃ মালবিকায়াঃ অন্বেষণায় গবেষণায় লাভায় যতিষ্যে চেষ্টাং করিষ্যে, যদি লপ্সিয় তদা কথঞ্চিৎ প্রতিপাদয়িতুং নামর্হেয়ম্ ইতি ভাবঃ।

অথবা পক্ষান্তরে ময়া যজ্ঞসেনেন প্রযোজ্যকর্ত্রা পূজ্যেন ভবতা অগ্নিমিত্রেণ প্রযোজককর্ত্রা। মোচয়িতব্যঃ মুক্তবন্ধনঃ কারয়িতব্যঃ, নাহং স্বেচ্ছয়া তং বন্ধনাৎ মুক্তং করিষ্যামীত্যভিপ্রায়ঃ।

অথ স্বয়মপি মোচয়িষ্যং যেনাভিসন্ধিনা সঃ শ্রূয়তামিত্যাহ—শ্রূয়তামভিসন্ধি-রিত্যাদিনা শ্লোকান্তেন।

---

অমাত্য। সম্প্রতি বিদর্ভরাজ এই লিখিয়াছেন যে—“মাননীয় মহারাজ আমাকে আদেশ করিয়াছেন—‘ভবদীয় পিতৃব্যপুত্র কুমার মাধবসেন আমার সহিত বৈবাহিক সম্বন্ধে প্রতিশ্রুত হইয়া আমার নিকট আসিতেছিলেন, পথিমধ্যে তদীয় সীমারক্ষক তাহাকে আক্রমণ করিয়া বদ্ধ করিয়াছে, আমার অনুরোধে স্ত্রী ও ভগিনীর সহিত তাহাকে মোচন করিয়া দিবে।’ আপনি অবশ্যই ইহা জানেন যে—সমান বংশোদ্ভূত রাজগণের প্রতি রাজগণের বিরোধ সতঃসিদ্ধ। অতএব মাননীয় মহারাজের এস্থলে উদাসীনতা অবলম্বন করাই উচিত। তদীয় সহোদরা মালবিকা সেই আক্রমণের বিশৃঙ্খলায় কোথায় অদৃশ্য হইয়াছে। তাহার অন্বেষণার্থ যত্ন করিব। অথবা যদি মাধবসেনকে মাননীয় মহারাজ আমার নিকট হইতে অবশ্যই মোচন করাইতে চাহেন, তবে আমার অভিপ্রায় শুনুন ॥ ( ঠ )

राजा । (सरोषम् ।) कथं कार्य्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः ! वाहतक, प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः । तद् यातव्यपक्षे स्थितस्य पूर्वसङ्कल्पितसमुन्मूलनाय वीरसेनमुखं दण्डचक्रमाज्ञापय । (ङ)

७। अभिसन्धिमेवाह—आर्य्येत्यादिना । यदि पूज्यः मान्यः भवान् संयतं इतःपूर्वं वन्दीभावेन निगृहीतं मम श्यालं भार्य्यायाः भ्रातरम् आर्य्यसचिवं प्रधानामात्यं ममेति शेषः । मुञ्चति बन्धनात् मुक्तं करोति, ततः तदा अहमपि सद्यः तस्मिन् एव क्षणे नतु कालं विलम्ब्यापीति भावः । माधवसेनं मम सहजशत्रुमपि भवतः अनुगतं मित्रं बन्धनात् मोक्ता मुक्तं कर्त्तास्मि, तथाहि यदि त्वमार्य्यसचिवं मुञ्चेः तदैव माधवसेनस्य मत्तो मोक्षः नान्यथा ; अतः त्वमपि तथा कार्य्यं कुरु इति भावः । मोक्ता इत्यस्य शीलार्थतृण्प्रत्ययान्तस्य निष्ठादित्वेन षष्ठीनिषेधात् कर्म्मणि द्वितीया एव ।

(ङ) सरोषं सक्रोधं, रोषकारणञ्च परत एव व्यक्तीभवति । कार्य्यविनिमयेन कर्म्मव्यतीहारेण, अनात्मज्ञः आत्मनो बलाबलविवेकशून्यः । तथाहि यज्ञसेनः मदपेक्षया बहुधा दुर्बलः अहञ्च तस्मात् सबलः, तथापि यत् असौ मयि एवमुद्धतो वर्त्तते तन्नास्य सुविवेकफलमिति भावः ।

वैदर्भः विदर्भराजः मे मम प्रकृत्या स्वभावेन अमित्रः शत्रुः प्रतिकूलकारी विरुद्धकार्य्यकारी च, तथाहि अस्य प्रकृत्यामित्रत्वं विषयानन्तरत्वादिति तत् तस्मात् तस्य प्रकृत्यामित्रत्वात् प्रतिकूलकारित्वाच्च इत्यर्थः । यातव्यस्य अभिषेणयितव्यस्य शत्रोरित्यर्थः । पक्षेस्थितस्य वर्त्तमानस्य तस्य यज्ञसेनस्य इत्यर्थः । पूर्वसङ्कल्पितस्य आदौ अभिलषितस्य यस्य कस्यचित् अस्मद्विरुद्धविषयस्य इत्यर्थः । समुन्मूलनाय समूलं

আপনি যে আমার শ্যালক আর্য্য সচিবকে সংযত করিয়াছেন, তাহাকে যদি বন্ধন হইতে মোচন করিয়া দেন ; তবে আমিও মাধবসেনকে সত্বই বন্ধন হইতে মোচন করিয়া দিব ॥ ৭

अमात्यः। यदाज्ञापयति देवः। (ढ)

राजा। अथवा, किं भवान् मन्यते ? (ण)

अमात्यः। शास्त्रदृष्टमाह देवः। (त)

---

विनाशनाय वीरसेनमुखं वीरसेनेन परिचालितं दण्डचक्रं, दण्डान्ते शत्रवः एभिरिति दण्डानि सैन्यानि तेषां चक्रं समूहं आज्ञापय, तथाहि सैन्यप्रेषणेन यथा शत्रुः अस्मत्पराभवादिकामनामपि परिवर्ज्जयेत् तथा करोतु इति भावः। अत्र अमित्र-शब्दः शत्रुवाची तदर्थ एव, "द्विड़् विपक्षाहितामित्रदस्युशात्रवशत्रव"इति कोषात् पुंलिङ्गोपपत्तिः।

(ढ) देवः महाराजः यत् वस्तु आज्ञापयति तदेव मया क्रियते इति शेषः। तथाहि एषोऽहं वीरसेनमुखं दण्डचक्रं शत्रुसमुन्मूलनाय प्रेषये इति भावः।

(ण) अथवा भवान् अमात्यः किं कीदृशं मन्यते, तथाहि अत्रावसरे शत्रुरभियातव्यो न वा तद्भवानपि विचारयतु इति भावः।

(त) शास्त्रेण तृतीयनेत्ररूपेण शास्त्रज्ञानेन दृष्टं विवेचितं वस्तु देवः महाराजः आह कथितवान्, अतो नास्ति ममात्र वैमत्यहेतुः, ममाप्यत्र सम्मतिरस्तीति भावः।

---

রাজা। (রোষসহকারে) কি! আত্মজ্ঞানশূন্য বিদর্ভরাজ কার্য্যের বিনিময়ে আমার সহিত ব্যবহার করিতে উদ্যত হইয়াছে! বাহতক, বিদর্ভরাজ স্বভাবতঃ আমার শত্রু এবং বিরুদ্ধাচারী, তাহার প্রতি অভিযান করা কর্ত্তব্য। অতএব তাহার সঙ্কল্প সমূলে উৎপাটিত করিবার জন্য বীরসেনচালিত সৈন্যসমূহকে আদেশ কর। (ড)

অমাত্য। মহারাজ! যাহা আজ্ঞা করেন। (ঢ)

রাজা। অথবা আপনি কি মনে করেন ? (ণ)

অমাত্য। মহারাজ! শাস্ত্রানুমোদিত বিষয়ই বলিয়াছেন। (ত)

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढ़मूलत्वात्।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्त्तुम्॥ ८॥

[ अन्वयः। अचिराधिष्ठितराज्यः शत्रुः प्रकृतिषु अरूढ़मूलत्वात् नवसंरोपणशिथिलः तरुः इव समुद्धर्त्तुं सुकरः। ८। ]

राजा। तेन ह्यवितथं तन्त्रकारवचनम्। इदमेव निमित्तमादाय समुद्योज्यतां सेनापतिः। (थ)

---

८। तदेव शास्त्रमतमाह—अचिरेत्यादिना। अचिरं स्वल्पकालं यावत् अधिष्ठितं आश्रितं राज्यं राजत्वं येन तथाभूतं अल्पकालं यावत् राज्यमधिष्ठितवान् शत्रुः रिपुपक्षीयो राजा प्रकृतिषु प्रजावर्गेषु अरूढ़ं दृढ़म् अप्रतिष्ठितं मूलं यस्य तस्य भावः तस्मात् हेतोः, नवेन नूतनेन अचिरजातेन संरोपणेन शिथिलः श्लथमूलः, तरुः वृक्ष इव समुद्धर्त्तुं उत्पाटयितुं विनाशयितुञ्च सुकरः अनायासेनैव तदुन्मूलनं साधयितुं शक्यमिति भावः। अत्र वृक्षपक्षे प्रकृतिषु इत्यस्य स्वीयकारणमृत्तिकासु इत्यर्थः प्रतिपत्तव्यः, स च श्लेषात् तरुरिव इत्यत्र उपमा चेति श्लेषानुप्राणितोपमालङ्कारः।

(थ) तेन शत्रोः अचिराधिष्ठितराज्यतया प्रकृतिषु अरूढ़मूलत्वेन इत्यर्थः। तन्त्रकारस्य अर्थशास्त्रकारस्य वचनं प्रोक्तार्थकं वाक्यं अवितथं सत्यमेव भविष्यतीति शेषः। नूनमनायासेनैव वयं शत्रुसमुन्मूलनं कर्त्तुं क्षमिष्यामहे इति भावः। इदमेव प्रवृत्तमेव मच्छ्वशुरालङ्घनरूपं विदर्भराजस्य कार्य्यविनिमयकामनाप्रकाशकवाक्यमिति यावत्, निमित्तं व्यपदेशमादाय अवलम्ब्य समुद्योज्यतां व्यापार्य्यताम्।

एतेन व्यापारेण उपन्यस्तेन प्रकृतनाटकनायकस्य अग्निमित्रस्य मालविकायामुन्मुखतायामपि राजकार्य्यादिरूपे कर्त्तव्यार्थे अनलसताव्यञ्जनेन उत्कर्षः प्रतिपादितस्तेन प्रकृतनाटकीयवस्तुनोऽपि इति ज्ञातव्यम्।

---

যে শত্রু অল্পকাল মাত্র রাজ্যে অধিষ্ঠিত হইয়াছে, প্রজাগণের মধ্যে তাহার মূল দৃঢ় না হওয়ায় নবরোপিত শিথিলমূল বৃক্ষবৎ তাহাকে অত্যল্প আয়াসেই উৎপাটিত করা যায়॥ ৮

अमात्यः। तथा। ( इति निष्क्रान्तः )।

( परिजनो यथाव्यापारं राजानमभितः स्थितः )। (द)

(प्रविश्य विदूषकः)। आसत्तोम्हि तत्तभवता रस्सा—'गोदम! चिन्तेहि दाव उवाअं जह मे जदिच्छादिट्ठपड़िकिदी मालविआ पच्चक्खदंसणा होदित्ति।' मए अ तं तहा किदं दाव मे णिवेदेमि। [ आज्ञप्तोऽस्मि तत्रभवता राज्ञा—गौतम! चिन्तय तावदुपायं यथा यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति। मया च तत्तथा कृतं, तावदस्य निवेदयामि। ( इति परिक्रामति ) )। (ध)

---

(द) यथाव्यापारं व्यापारं स्वस्वकार्य्यं अनतिक्रम्य इति वाक्येन अव्ययीभावसमासात् सिद्धम्। निजकर्म्मव्यापृततया इत्यर्थः। राजानम् अभितः राज्ञः चतुर्द्दिक्षु, "तसोभयाभिपरिसर्वै"रिति द्वितीया। स्थितः नतु तेऽपि निष्क्रान्ताः इति भावः।

(ध) विदूषकः नाटकीयपात्रविशेषः, तल्लक्षणं यथा,—"कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः" इत्युक्तलक्षणकः। तत्र भवता माननीयेन राज्ञा नृपतिना अग्निमित्रेण आज्ञप्तः अस्मि अहमिति शेषः। "त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि" इत्यमरः। उपायं गतिं चिन्तय निर्द्धारय यथा यदृच्छया दैवगत्या नतु स्वेच्छाक्रमेण इत्यर्थः। एतेन दैवस्यापि आनुकूल्यं तत्सम्पर्के सूचितम्। यादृगिच्छा यदृच्छा, पृषोदरादित्वात् साधु। दृष्टा आलोकिता प्रतिकृतिः चित्रगता मूर्त्तिः यस्याः तथाभूता, प्रत्यक्षेण चाक्षुषप्रत्यक्षकरणभूतेन चक्षुषा दर्शनं प्रत्यक्षं यस्याः तथाभूता, चाक्षुषप्रत्यक्षविषयीभूता भवति, तथाहि यथा कथञ्चित् मम मालविकादर्शनं साधय इति भावः। मयापि तत् उपायचिन्तनं

---

রাজা। অতএব শাস্ত্রকারের বচন অতি সত্য। এই কারণ অবলম্বন করিয়াই সেনাপতিকে অভিযানে উদ্‌যুক্ত কর। (থ)

অমাত্য। আচ্ছা। ( এই বলিয়া নিষ্ক্রান্ত হইলেন )।

[ পরিজনগণ রাজার চতুষ্পার্শ্বে স্ব স্ব কর্ত্তব্যে ব্যাপৃত হইল। (দ) ]

राजा। (विदूषकं दृष्ट्वा)। अयमपरः कार्य्यान्तरसचिवोऽस्माक-मुपस्थितः। (न)

विदू। (उपगम्य)। वड्ढदु भवं। [ वर्द्धतां भवान् ]।

राजा। (सशिरःकम्पम्)। इत आस्यताम्। (विदूषक उपविष्टः)।

राजा। कच्चिदुपेयोपायदर्शने व्याप्टतं ते प्रज्ञाचक्षुः ? (प)

---

तथा तेन प्रकारेण एव कृतं सम्पादितम्। तथाहि यथा मालविकया सह राज्ञः दर्शनतः सम्मेलनं भवेत् तथा एव गतिरस्माभिरुद्भाविता इति भावः। अस्य राज्ञः अग्निमित्रस्य निवेदयामि तदुपायस्य विज्ञापनं करोमि। अनेन सन्दर्भेण गम्यमानं राज्ञः मालविकायामौत्सुक्यम्, अतः आरम्भो नाम प्रथमावस्थात्र कथिता इति।

(न) कार्य्यान्तरस्य अपरकार्य्यस्य मालविकासाक्षात्कारूपस्य सचिवः सहायः। उपस्थितः आगतः। तथाहि यथा मन्त्री राज्यकार्य्यसहायः तथैव विदूषको मम मालविकासाक्षात्कारसहाय इति भावः।

---

( বিদূষকের প্রবেশ )

বিদূ। মহারাজ আমাকে আদেশ করিয়াছেন,—'গৌতম! আমি দৈবযোগে মালবিকার প্রতিকৃতিমাত্র দেখিতে পাইয়াছি। এক্ষণে, যাহাতে তাহাকে প্রত্যক্ষ দর্শন করিতে পারি, তোমাকে তাহার উপায় চিন্তা করিতে হইবে।' আমিও তদনুরূপ অনুষ্ঠান করিয়াছি। অতএব, এক্ষণে তাঁহার গোচরে নিবেদন করি। ( এই বলিয়া পরিক্রমণ )। ( ধ )

রাজা। ( বিদূষককে দেখিয়া ) এই যে আমাদের কার্য্যান্তরসম্পাদক অপর মন্ত্রী উপস্থিত। ( ন )

বিদূ। (সমীপস্থ হইয়া) আপনি সর্ব্বথা সংবর্দ্ধিত হউন।

রাজা। (শিরঃকম্পনসহকারে)। এইখানে উপবেশন কর।

विदू। पओअसिद्धिं पुच्छ। [ प्रयोगसिद्धिं पृच्छ। ] (फ)

राजा। कथमिव ? (ब)

विदू। ( कर्णे )। एव्वं विअ। [ एवमिव ] (इत्यावेदयति )। (भ)

---

(प) उपायेन निमित्तविशेषेण उपेयं लभ्य दर्शनं साक्षात्कार: तस्मिन् कौशलविशेषेण सम्पादनार्हं मालविकासाक्षात्कारे इत्यर्थ:। ते तव प्रज्ञाचक्षु: ज्ञाननेत्रं व्यापृतं नियुक्तं कच्चित् समर्थं किं, "कच्चित् कामप्रवेदने" इत्यमर:। तथाहि कथं मम मालविकया सह साक्षात्कारो भविता, तत् किं भवान् निपुणतया विचिन्त्य निर्द्धारितवान् इति प्रश्न:। अत्र प्रज्ञायां चक्षुस्त्वारोपात् रूपकम्। अत्र गम्यमानस्य मालविकारूपबीजस्य विन्यासादुपक्षेपो नाम सन्ध्यङ्गमुक्तं भवति।

(फ) प्रयोगस्य व्यापारस्य सिद्धिं साफल्यं पृच्छ। तथाहि कथं व्यापारविषयकं प्रश्नं करोषि, प्रज्ञाचक्षुर्म्मे तत्साक्षात्कारसम्पादनाय व्यापृतं सफलञ्च जातमिति जानीहि इति भाव:।

(ब) कथं केन प्रकारेण प्रयोगसिद्धि: जाता तत् कथय इति भाव:।

(भ) कर्णे कर्णप्रान्ते, अन्यस्य अश्रुतरूपेण रहसि इत्यर्थ:। तथोक्तम्—"कर्णे एवमेवेत्युक्त्वा ज्ञाप्य: पश्चात् प्रसङ्गत:" इति, इति आवेदयति विज्ञापयति। गणदासेन सह हरदत्तस्य स्वस्वप्रयोगमाश्रित्य विवादमुद्भाव्य अहम् आगत:, तेनैव गणदासशिष्याया: मालविकाया: प्रयोगदर्शनमाश्रित्य उत्कर्षविचारप्रसङ्गे मालविकया सह तव दर्शनं सम्भविष्यतीति भाव:। एतत् सर्वं परत एव प्रसङ्गात् प्रकाशतां यास्यति।

---

( বিদূষকের উপবেশন। )

রাজা। তোমার প্রজ্ঞারূপ নেত্র, উপায় অবলম্বনসহকারে প্রাপ্যবস্তুর পরিদর্শনে সমর্থ হইয়াছে ত ? ( প )

বিদূ। ফলসিদ্ধির কথা জিজ্ঞাসা করুন ; উপায়চিন্তার কথা জিজ্ঞাসায় প্রয়োজন কি ? ( ফ )

রাজা। কিরূপ ? ( ব )

राजा। साधु वयस्य, निपुणमुपक्रान्तम्। इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे। कुतः? (म)

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि॥ ९॥

[ अन्वयः। सहायवान् एव (जनः) सप्रतिबन्धम् अर्थम् अधिगन्तुं प्रभुः (भवति)। सचक्षुरपि तमसि दीपेन विना दृश्यं न पश्यति। ९। ]

---

(म) निपुणं अतिचातुर्य्यसहकारेण उपक्रान्तम् प्रारब्धम्। इदानीम् एवं निपुणं त्वया प्रक्रान्ते सति दुरधिगमा दुर्लभा सिद्धिः साफल्यं यस्य तथाभूते, दुर्लभफलेऽपि अस्मिन् आरम्भे कर्म्मणि वयं साफल्याभिलाषिणः आशंसामहे आशान्विता भवामः। तथाहि भवता यथा प्रक्रान्तं तथा मन्ये अवश्यमेव सत्वरमस्य आरम्भस्य सुफलं सम्भविष्यतीति भावः। कुतः कस्मात् हेतोः तत् इति प्रश्ने उत्तरं श्लोकमुत्तरतया निबद्धवान्, अतः कुत इत्यस्य समाधानमुत्तरश्लोकेन।

९। विदूषकस्य साहाय्यलाभेन एव अत्र सिद्धिर्भविष्यतीति सामान्यतः समर्थकोपन्यासेन समर्थयते—सप्रतिबन्धमित्यादिना। सहायवान् सहायशाली जन एव, नतु सहायविरहित इत्येवशब्दस्यवच्छेद्यम्। सप्रतिबन्धं बाधायुक्तं प्रतिबन्धक सद्भावेन दुर्लभमित्यर्थः। कार्य्यं अधिगन्तुं प्राप्तुं तस्मिन् कर्म्मणि साफल्यमुपलब्धुम् इत्यर्थः, प्रभुः समर्थो भवति इति शेषः। तथाहि अहं त्वां प्रकृष्टं सहायं लब्धवान्, अतएव यद्यपि मालविकायाः साक्षात्कारे धारिणीप्रभृतयः बहवः प्रतिबन्धका विद्यन्ते, तथापि सहायस्य चातुर्य्येण तत्र कापि बाधा न सम्भविष्यतीति भावः।

---

বিধূ। ( কর্ণে )। এইরূপ * * *।— [এই বলিয়া, প্রকৃত ঘটনা নিবেদন করিতে লাগিল ]। ( ভ )

রাজা। সাধু, বয়স্য! তুমি সর্ব্বথা দক্ষতাসহকারেই কার্য্য করিয়াছ। এক্ষণে উপস্থিত বিষয়ের সিদ্ধিলাভ দুঃসাধ্য হইলেও, তাহার সম্পাদনপক্ষে আমরা আশাবদ্ধ হইতে পারি। ( ম )

(नेपथ्ये)। अलमलं बहु विकत्थ्य ? राज्ञः समक्षमेवावयो रधरोत्तरयोर्व्यक्तिर्भविष्यति। (य)

---

सहायवतः कार्य्यलाभे समर्थकं विशेषमाह—दृश्यमित्यादिना। तमसि अन्धकारे दीपेन आलोकरूपसहकारिकारणेन विना सचक्षुः चक्षूरूपप्रत्यक्षकारणयुक्तोऽपि जनः दृश्यं दर्शनयोग्यं वस्तु घटपटादिकं न पश्यति तद्विषयकचाक्षुषप्रत्यक्षाश्रयो न भवति। प्रत्यक्षे उद्भूतरूपवत्त्वं आलोकश्च सहकारि, दृश्यमित्यनेन उद्भूतरूपवद्द्रव्यमुच्यते प्रक्षते, तत्र च प्रत्यक्षाभावे अत्र आलोकसमवधानविरह एव प्रयोजकः। तथाच नियमः— "गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयो"रिति। अत्र सहायवानेव इत्येवशब्देन सहायहीनस्य जनस्य कार्य्यार्ज्जनाभावरूपस्य सामान्यवस्तुनः दीपविरहवतः सचक्षुषोऽपि दृश्यदर्शनाभावरूपविशेषवस्तुना समर्थनात् सामान्यस्य विशेषेण समर्थनरूपोऽर्थान्तरन्यासः अलङ्कारः सचक्षुष्ट्वस्य कारणस्य सत्त्वेऽपि कार्य्यस्य दृश्यदर्शनस्य विरहवर्णनात् विशेषोक्तिरिति, सा च आलोकाभावात्मकोक्तनिमित्ता इति केचित्।

अत्र कार्य्यपदेन कार्य्यफलं लक्षणया रूढ़िप्रयोजनाभावेऽपि तदर्थस्य लक्षणया स्वीकारात् नेयार्थता-दोषः। अन्यत्र कुत्रचित् कार्य्यपदस्य फलपरत्वं दर्शनेन रूढ़िस्वीकारे अवाचकत्वं दोषः, तथाच तर्कवागीशः—"रूढ्यादिमत्त्वे लाक्षणिकपदप्रयोगे अवाचकत्वं, तदसत्त्वे तु नेयार्थत्वमिति भेद"इति। सहायवानेव इत्यनेन उक्तात् सहायवतः सप्रतिबन्धकार्य्यफललाभरूपाद्वस्तुनः अन्यस्य सहायविरहवतः तदभावरूपस्य वस्तुनः अर्थतः प्रत्ययात् आर्थी परिसंख्या। पूर्वार्द्धप्रतिपादितादप्रस्तुतात् सामान्यात विशेषस्य विदूषकसाहाय्येन राज्ञः मालविकासाक्षात्कारलाभरूपस्य प्रस्तुतस्य विशेषस्य प्रत्ययात् अप्रस्तुतप्रशंसालङ्कारः। अत्रापि उपक्षेपनामकं सन्ध्यङ्गम्। आर्य्याजातिः।

(य) बहु अतिमात्रं विकत्थ्य आत्मश्लाघां कृत्वा अलं, विशेषेण अहङ्कारं मा कुरु,

---

কেননা, উপযুক্ত সহায় পাইলে, কার্য্য যতই কেন প্রতিবন্ধযুক্ত হউক না, তাহার সাধনবিষয়ে সমর্থ হওয়া যায়। দেখ, চক্ষুষ্মান্ ব্যক্তিও বিনা প্রদীপে অন্ধকারে কোন বস্তুই দেখিতে পায় না॥ ৯

राजा। ( आकर्ण्य )। **सखे! त्वत्सुनीतिपादपस्य पुष्पोद्भिन्न-मिदम्।** (र)

विदू। **फलं वि अइरेण देक्खिस्ससि।** [फलमप्यचिरेण द्रक्ष्यसि] (ल)

---

इत्यर्थः। राज्ञः स्वामिनः अग्निमित्रस्य समक्षं समीपे आवयोः गणदासस्य हरदत्तस्य च इत्यर्थः। अधरे निकृष्टे ये उत्तरे विवादप्रक्रमे परस्परं प्रति प्रयुक्ते उत्तरवचने तयोः तत्प्रतिपाद्यार्थयोः आत्मश्लाघाकरविषययोरित्यर्थः। व्यक्तिः प्रकाशः भविष्यति। तथाहि किमात्मनैव आत्मप्रशंसानिर्व्वचनेन, राज्ञा एव आवयोः उत्कर्षापकर्षौ विचारयिष्येते इति भावः। इदं वाक्यं नेपथ्यस्थितयोः विदूषकेणानुप्रक्रमितस्य विवादस्य अवसरे गणदासहरदत्तयोरिति प्रतिपत्तव्यम्।

(र) तव सुनीतिः निपुणं प्रयुक्तो नयः सा एव पादपः वृक्षः तस्य, तव सुप्रयुक्त-नीतिरूपवृक्षस्य। इदं श्रूयमाणं प्रस्तुतं पुष्पं प्रसूनं उद्भिन्नं प्ररूढ़म्। तथाहि त्वं मालविकया सह मम साक्षात्कारसम्पादनाय यां नीतिं प्रयुक्तवान् तस्या एव नीतेः फललाभस्य उपक्रमो लक्ष्यते इति भावः। अत्र नीतौ पादपत्वस्य इदम्पदोपस्थापित गणदासहरदत्तयोः कलहे च पुष्पत्वस्य आरोपात् रूपकम्। एतेन एतदनन्तरमेव फललाभो व्यज्यते।

(ल) फलमपि मम सुनीतिपादपस्येति शेषः द्रक्ष्यसि आलोकयिष्यसि। तथाहि अस्मादेव समुत्पन्नात् नाट्याचार्य्ययोः कलहात् तव मालविकासाक्षात्काररूपं फलमपि सम्भविष्यतीति भावः। अपिः पुष्पस्य समुच्चायकः, अत्र मालविकासाक्षात्काररूपस्य

---

(নেপথ্যে) আর আত্মগরিমা প্রকাশ করিবার প্রয়োজন নাই। রাজার সমক্ষেই আমাদের মধ্যে কে শ্রেষ্ঠ,—কে নিকৃষ্ট, তাহার পরিচয় হইবে। ( য )

রাজা। ( শ্রবণ করিয়া ) সখে! তোমার সুনীতিরূপ বৃক্ষের পুষ্প উদ্গত হইয়াছে। ( র )

( ततः प्रविशति कञ्चुकी )। (व)

कञ्चु। देव ! अमात्यो विज्ञापयति अनुष्ठिता प्रभोराज्ञेति। एतौ पुनर्हरदत्तगणदासौ (श)—

उभावभिनयाचार्य्यौ परस्परजयैषिणौ।
त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ ॥ १० ॥

[ अन्वयः। शरीरिणौ साक्षात् भावौ इव उभौ अभिनयाचार्य्यौ परस्परजयैषिणौ ( सन्तौ ) त्वां द्रष्टुम् आगतौ। १०। ]

---

वीजस्य दृढ़ताप्रत्यायनात् परिन्यासो नाम सन्ध्यङ्गम् उपक्षिप्तम्। तव निश्चितमेव अस्मात् मालविकादर्शनं घटिष्यते, तन्निश्चिन्तो भव इति तात्पर्य्यम्।

(व) कञ्चुकी अन्तःपुरस्य प्रधानकर्म्मचारी अन्तःपुरिकानां शिक्षारक्षादिष्वधिकारेषु नियुक्तो वृद्धब्राह्मणः। तल्लक्षणं यथा—"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वशास्त्रार्थकुशलः कञ्चुकीत्यभिधीयते" इति।

(श) विज्ञापयति वक्ष्यमाणमिति शेषः। प्रभोः राज्ञः आज्ञा सेनापतेः समुद्‌योजनविषयिनी अनुष्ठिता आचरिता, समुद्‌योजितः तेन सेनापतिरिति भावः। एतौ इति गणदासहरदत्तयोरधिष्ठानदिशं प्रति अङ्गुल्या निर्द्दिश्य। हरदत्तगणदासौ इतीदं श्लोकार्थे अन्वेति, हरदत्तस्य गणदासात् पूर्व्वं निर्द्देशः राज्ञा तस्य परिगृहीतत्वात् अभ्यर्हितत्वाभिमानेन। अथवा हरदत्तस्य वयसा ज्यायस्त्वं प्रतिपद्य तथा नतु गुणतो गौरवम् अन्यथा एव प्रक्रमितव्यत्वात्।

१०। हरदत्तगणदासयोः कृत्यमाह—उभावित्यादिना। शरीरिणौ देहधारिणौ साक्षात् भावौ रसानुगुणभावद्वयमिव उभौ द्वौ अभिनयस्य नाट्यस्य आचार्य्यौ शिक्षकौ

---

বিদূ। অবিলম্বেই ফলও দেখিতে পাইবেন। ( ল )

( কঞ্চুকীর প্রবেশ )

কঞ্চু। দেব ! অমাত্য নিবেদন করিতেছেন, প্রভুর আদেশ প্রতিপালিত হইয়াছে। পুনশ্চ, এই হরদত্ত ও গণদাস দুই জন—( ব-শ )

राजा। प्रवेशय तौ। (ष)

कञ्चु। यदाज्ञापयति देवः। (इति निष्क्रम्य ताभ्यां सह प्रविष्टः)। इत इति भवन्तौ। (स)

गण। (राजानं विलोक्य)। अहो। दुरासदो राजमहिमा! (ह)

---

हरदत्तगणदासौ इति गद्यस्थमत्रान्वेति। परस्परं अन्योन्यस्य जयं अभिभवं इच्छतः यौ तौ गुणप्रशंसया अन्योन्यस्य उपरि वर्त्तितुकामौ सन्तौ त्वां द्रष्टुम् अवलोकयितुम् उद्यतौ उद्युक्तौ, तथाहि त्वत्समीपे उभयोर्गुणविचारो भवतु, ततश्च यः कश्चिदनयोरुत्कृष्टतरः स्यादित्यभिप्रेत्य त्वत्समीपे आगन्तुमुद्यतौ इति भावः। अत्र शरीरिणोर्भावयोरसम्भवतोः स्वरूपस्य हरदत्तगणदासयोः सम्भावनाया इवशब्देन प्रत्यायनात् वाच्या स्वरूपोत्प्रेक्षा।

(ष) तौ हरदत्तगणदासौ, प्रवेशय मम समीपे आनय।

(स) ताभ्यां हरदत्तगणदासाभ्यां सह। प्रविष्टः राज्ञः समीपे रङ्गस्थाने इति शेषः। इतः इतः अस्यां दिशि, भवन्तौ आगच्छतामिति शेषः।

(ह) अहो विस्मये, राज्ञः भूपतेः अग्निमित्रस्य महिमा महत्त्वम्। दुरासदः दुर्गमः, अपरिमेयो राजप्रभाव इत्यर्थः।

---

ইহারা ( উভয়ে ) অভিনয় শিক্ষা দিয়া থাকে। উভয়েই—যেন সাক্ষাৎ ভাবদ্বয় শরীর পরিগ্রহ করিয়া, পরস্পর জয় কামনা করত, আপনাকে দেখিবার জন্য উদ্যত হইয়াছে ॥ ১০ ॥

রাজা। উভয়কে প্রবেশ করাও। ( ষ )

কঞ্চু। যে আজ্ঞা।

( এই বলিয়া নিষ্ক্রমণ ও তাহাদের সহিত প্রবেশ। )

কঞ্চু। আপনারা এদিকে আসুন। ( স )

গণদাস। ( রাজাকে দেখিয়া ) অহো! রাজার মাহাত্ম্য কি দুর্ব্বোধ! ( হ )

न च न परिचितो न चाप्यरम्य
श्चकितमुपैमि तथापि पार्श्वमस्य।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः॥ ११॥

[ अन्वयः। (अयम्) न परिचितः न च, अरम्योऽपि न च। तथापि चकितम् अस्य पार्श्वम् उपैमि। स एव अयम् सलिलनिधिरिव प्रतिक्षणं मे अक्ष्णोः नवः नवः भवति। ११। ]

---

११। अथ राजमहिम्नो दुरासदत्वमेव प्रतिपादयति—न चेत्यादिना। अयं राजा इत्यध्याहार्य्यम्। अयं राजा परिचितः अभ्यस्तः न इति न च, अपितु परिचित एव, न च अयं अरम्यः अरमणीयः असौम्यमूर्त्तिर्भवति, अपि तु रम्य एव; द्वौ नञौ प्रकृत्यर्थं गमयत इति नियमेन तत्तदर्थाधिगमः। एतच्च चकितत्वाभावे प्रयोजकं दर्शितम्। तथापि एवं चकितत्वाभावप्रयोजके सत्यपि इत्यर्थः। अहं चकितं सभयम् अस्य राज्ञः पार्श्वम् अन्तिकं उपैमि उपसर्पामि, तच्चास्य अलौकिकप्रभावबलादिति भावः। एतेन रम्यत्वं भीमत्वञ्च एकत्र प्रतिपाद्य भीमकान्तनृपगुणाः प्रतिपादिताः। स एव पुरा दृष्टचरः परिचितपूर्व्व एव च अयं राजा सलिलनिधिः समुद्र इव प्रतिक्षणं प्रतिमुहूर्त्तम्। मे मम अक्ष्णोः चक्षुषोः सम्बन्धे नवः नवः अत्यन्तनूतनः भवति, तथाहि परिचितोऽप्ययं प्रत्येकमुहूर्त्त एव दर्शनादपरिचित इव आभाति, इति अलौकिकभावत्वं राज्ञ इति भावः। अत्र अपरिचितत्वारम्यत्वरूपयोर्भयहेत्वोरभावेऽपि भयरूपस्य कार्य्यस्य वर्णनात् हेत्वभावे कार्य्यसत्त्वरूपविभावनालङ्कारः। राज्ञि जलनिधिसादृश्यवर्णनया इवशब्देन करणात् उपमा श्रौती। प्रथमपदार्थे सम्बद्धस्य राज्ञः अयमित्यादिवाचकपदाश्रवणात् न्यूनपदतादोषः। तच्छब्दस्य पूर्व्वानुभूतरूपार्थतया नात्र यच्छब्दानुपादानेऽपि दोषः, तात्पर्य्यतस्तत्प्रत्ययस्य स्वाभाव्यात्। नवो नव इति नूतनप्रकार इत्यर्थकतया, "प्रकारे गुणवचनस्ये"ति द्विर्भावः। पुष्पिताग्रावृत्तम्। एतत्कवितानुसारितकवितान्तरं यथा रघौ—भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्। अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः॥

हरदत्तः । महत् खलु पुरुषाकारमिदं ज्योतिः । तथाहि—(च)

द्वारे नियुक्तपुरुषानुमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्त्तितदृष्टिपातै-
र्वाक्याद्दृते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥

[ अन्वयः । ( अहम् ) द्वारे नियुक्तपुरुषानुमतप्रवेशः सिंहासनान्तिकचरेण सह उपसर्पन् विनिवर्त्तितदृष्टिपातैः अस्य तेजोभिः वाक्यात् ऋते पुनः प्रतिवारित इव अस्मि । १२ ]

---

( च ) इदं दृश्यमानं महत् प्रचुरतरम् पुरुषाकारं मनुष्याकारं ज्योतिः तेजः । राजनि ज्योतिर्भेदसम्बन्धेऽपि अभेदोक्तेरतिशयोक्तिः । तथाहि अयं राजा महता तेजसा दीप्यते इति भावः । उक्तप्रकारेण तेजसा सह राज्ञः अभेदप्रतिपादनेन महातेजस्कत्वमस्य व्यक्तम् । तथाहीत्यस्य परश्लोकेनान्वयः ।

१२ । अथास्य तेजोमयत्वोक्तिं सहेतुकां करोति—द्वार इत्यादिना । द्वारे प्रतीहारभूमौ नियुक्तेन इतरजनप्रवेशनिषेधाद्यर्थं स्थापितेन पुरुषेण रक्षिजनेन अनुमतः अनुमोदितः प्रवेशः अभ्यन्तरगमनं यस्य तथाभूतः, द्वारपालैरनिरुद्धगतिरित्यर्थः । पुनश्च सिंहासनस्य राजासनस्य अन्तिके समीपे न तु दूरेऽपीत्यर्थः । चरति यः तेन राज्ञः सुतरां प्रीतिपात्रेण विश्वस्तकर्म्मचारिणा कञ्चुकिना इत्यर्थः । सह उपसर्पन् राज्ञः समीपं गच्छन्, सर्व्वमेवेदं असङ्कोचकारणमिति भावः । विनिवर्त्तिताः दुर्व्विषहत्वात्

---

এই রাজা সকলেরই সবিশেষ পরিচিত ও সর্ব্বথা মনঃপ্রীতিকর। তথাপি, আমি ভীত হইয়া ইহাঁর নিকটে গমন করিতেছি। পুনশ্চ, ইহাঁকে যদিও বারম্বার দর্শন করিয়াছি, তথাপি আমার দৃষ্টিপথে ইনি সাগরের ন্যায়, নব নব ভাবে প্রতিক্ষণ আবির্ভূত হইতেছেন। ১১

হরদত্ত। এই পুরুষাকারে প্রাদুর্ভূত জ্যোতির নিশ্চয়ই মাহাত্ম্য আছে। কেননা (ক)

कञ्चु। एष देवः, उपसर्पतां भवन्तौ। (क)

उभौ। (उपेत्य)। विजयतां देवः। (ख)

राजा। स्वागतं भवद्भ्याम्? (परिजनं विलोक्य)। आसने तावत्तत्रभवतोः। (ग)

---

प्रतिहताः दृष्टिपाताः यैः तथाभूतैः, स्वीयभास्वरतया इव दृष्टिप्रतिरोधकारिभिः अस्य राज्ञः तेजोभिः ज्योतिर्भिः पुनः वाक्यात् निषेधवचनात् ऋते प्रतिवारितः प्रतिषिद्ध इव अस्मि। तथाहि यद्यपि द्वारप्रवेशादारभ्य न कोऽपि मां राजसमीपगमने प्रत्यरुणत् तथापि राज्ञस्तेजःप्रतिघातात् समीपगमने मम महान् सङ्कोचो जायते इति भावः। अत्र राज्ञस्तेजसा वारणसम्भावनाया इवशब्देन प्रत्ययात् उत्प्रेक्षा। तया च हेतुं विनापि वारणरूपकार्य्योत्पादनवर्णनप्रतीत्या विभावना व्यज्यते इत्यलङ्कारेण अलङ्कारध्वनिरिति। वसन्ततिलकं वृत्तम्।

(क) एषः दृश्यमानः देवः महाराजः वर्तते इति शेषः। भवन्तौ हरदत्तगणदासौ युवाम् उपसर्पतां तस्य समीपं गच्छताम्।

(ख) उभौ हरदत्तगणदासौ, उपेत्य राज्ञः समीपं गत्वा, देवः महाराजः विजयतां प्रशस्तिं लभताम्।

(ग) अत्रभवतोः माननीययोः हरदत्तगणदासयोः आसने आसनयुगलं, प्रत्येकमेकमासनमित्यर्थः। उपानय इति शेषः। परिजनं प्रति एष राज्ञः आदेश इति।

---

আমি দৌবারিকের নিকট প্রবেশানুমতি লাভ করিয়া, এই কঞ্চুকীর সহিত তৎসমীপে গমন করিতেছি। সম্প্রতি ইহাঁর তেজ, দৃষ্টি প্রতিহত করিয়া, পুনরায় যেন বিনা বাক্যেই নিকটে যাইতে আমাকে নিবারণ করিতেছে ॥১২॥

কঞ্চু। এই মহারাজ : আপনারা উভয়ে নিকটস্থ হউন। ক)

উভয়ে। ( উপস্থিত হইয়া ) মহারাজের জয় হউক। (খ)

(उभौ परिजनोपनीतयोरासनयोरुपविष्टौ।) (घ)

राजा। किमिदं शिष्योपदेशकाले युगपदाचार्य्याभ्यामत्रोपस्थानम् ? (ङ)

गण। देव! श्रूयताम्,—मया सुतीर्थादभिनयविद्या सुशिक्षिता; दत्तप्रयोगश्चास्मि। देवेन देव्या च परिगृहीतः। (च)

---

(घ) उभौ हरदत्तगणदासौ, परिजनेन राज्ञः पार्श्वचरभृत्येन उपनीतयोः उपस्थापितयोः आसनयोः। अधिकरणे सप्तमी। उपविष्टौ आसीनौ भवत इति शेषः।

(ङ) शिष्यस्य स्वकीयशिष्यजनस्य उपदेशकाले शिक्षणयोग्यसमये, युगपत् एकदैव किं कथं आचार्य्याभ्यां अभिनयकलाशिक्षकाभ्यां युवाभ्याम् अत्र मत्सन्निधाने इदं दृश्यमानम् उपस्थानम उपस्थितिः? तथाहि नहि साधारणेन कारणेन स्वनियोगं परित्यज्य युवयोरिदानीमत्र आगमनं सम्भाव्यते, तत्र कारणं किमिति मे जिज्ञासाविषय इति भावः।

(च) देव, महाराज, श्रूयतां तत्कारणम् आकर्ण्यतां त्वया इति शेषः। मया गणदासेन सुतीर्थात् सुपण्डितादध्यापकात् "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु" इति कोषात् तीर्थशब्दस्य उपाध्यायार्थकत्वम्। "आख्यातोपयोगे" इति पञ्चमी। अभिनयविद्या नाट्यविद्या सुशिक्षिता सुचारुरूपेण अधिगता। न तु साधारणेन शिक्षा कृता, अपि तु सावधानधारणया इति भावः। दत्तः शिष्येभ्यः प्रतिपादितः प्रयोगः शिक्षणं येन तथाभूतः, तथाहि न केवलं शिक्षामात्रेण लोकानां

---

রাজা। আপনাদের স্বাগত? (পরিজনের প্রতি দৃষ্টিপাত করিয়া) আচার্য্যমহাশয়দিগকে আসন দাও। (গ)

(পরিজনকর্ত্তৃক আনীত আসনে উভয়ের উপবেশন।) (ঘ)

রাজা। আপনাদের শিষ্যদিগকে এই ত উপদেশ দিবার সময়। কি জন্য উভয়েই এককালে এ সময়ে এখানে আসিলেন? (ঙ)

রাজা। বাঢ়ং জানে। ততঃ কিম্? (ছ)

গণ। সোঽহমমুনা হরদত্তেন প্রধানপুরুষসমক্ষম্ "অযং ন মে পাদরজসাপি তুল্য" ইত্যধিক্ষিপ্তঃ। (জ)

হর। দেব! অযমেব প্রথমং পরিবাদকরঃ, "অত্রভবতঃ কিল মম চ সমুদ্রপল্বলযোরিবান্তর"মিতি। তদত্রভবানিমং মাং

বিদ্যা পরিণতিং ব্রজতি পরং শিষ্যেভ্যঃ বিদ্যাযাঃ প্রতিপাদনেন, যতস্তদবসরে এব আত্মনঃ ত্রুটিঃ সম্যগধিগম্যতে ততশ্চ তত্শোধনং ভবতি; অতঃ সর্ব্বথা অহং পরিণতশিক্ষো জাত ইতি ভাবঃ। দেবেন মহারাজেন দেব্যা মহিষ্যা চ পরিগৃহীতঃ গুণবত্ত্বপ্রশংসযা সমাদৃত ইত্যর্থঃ।

(ছ) বাঢ়ং নিশ্চিতং জানে, "ত্বং সুশিক্ষিত" ইতি সম্যক্ বেদ্মি ইত্যর্থঃ। ততঃ তদনন্তরং কিং তত্ কথয ইতি শেষঃ।

(জ) অভিনযবিদ্যাযাম্ এবং সুশিক্ষিতঃ অহং, অমুনা অত্রৈব মযা সহ প্রবিষ্টেন হরদত্তেন তদাখ্যেন অভিনযশিক্ষকেণ। প্রধানপুরুষাণাং মাননীযজনানাং সমক্ষং সমীপতঃ অযং গণদাসঃ মে মম পাদরজসা চরণপাংশুভিরপি ন তুল্যঃ সদৃশঃ। তথাহি নতঃ অযং সর্ব্বথা অতিনিকৃষ্টতর ইতি ভাবঃ। ইতি উক্তবাক্যেন অধিক্ষিপ্তঃ তিরস্কৃতঃ।

(ঝ) প্রথমং আদৌ অযং গণদাস এব পরিবাদকরঃ মম তিরস্কারকারী, অত্র-

গণদাস। দেব! শ্রবণ করুন—আমি সর্ব্বথা সদ্গুরুরই নিকট অভিনয়বিদ্যা সম্যক্ বিধানে শিক্ষা করিয়াছি। মহারাজও আমাকে অভিনয়াধিকারে নিয়োগ করিয়াছেন এবং স্বয়ং দেবীও আমাকে যথেষ্ট অনুগ্রহ করিয়া থাকেন। (চ)

রাজা। হাঁ, আমি ইহা জানি। তারপর কি বলুন? (ছ)

গণদাস। এই হরদত্ত প্রধান পুরুষগণের সমক্ষে এই বলিয়া আমাকে অবমানিত করিয়াছে, যে—'এ ব্যক্তি আমার চরণধূলিরও তুল্য নহে।' (জ)

च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकः। (ञ)

विदू। समत्थं पड़िस्सादं। [समर्थं प्रतिज्ञातं] (ञ)

---

भवतः माननीयस्य अस्य हरदत्तस्य इति सोल्लुण्ठनोक्तिः, विपरीतलक्षणया सम्मानलेशस्यापि अयोग्यस्य इति भावः। मम च गणदासस्य, अस्मदा निर्देशो नितरामात्मनः श्लाघासूचनाय। समुद्रपल्वलयोः सागरक्षुद्रकूपयोरिव महत् अन्तरं भूयान् प्रभेदः, तथाहि समुद्रेण यथा पल्वलस्य तुलनाभिलाषो नितराम् हास्यकरः, तथैव मया सह तुलनाभिलाषोऽस्य इति भावः। केचित्तु अत्र हरदत्तो वक्ता अस्मच्छब्दं स्वपरमेव प्राह, तेन उपमानयोः प्रक्रमोऽपि सङ्गच्छते अन्यथा प्रक्रमव्यत्ययेन तात्पर्य्यमवसेयं स्यात्। अन्यांशे अर्थविधौ तुल्यम्। तत् तस्मात् अत्रभवान् माननीयो भवान् इमं गणदासं मां हरदत्तञ्च शास्त्रे अभिनयादिप्रतिपादकशास्त्रे शास्त्रशिक्षाविषये प्रयोगे शिष्याय विद्यायाः प्रतिपादननैपुण्ये च विमृशतु विचारयतु। तथाहि अस्य मम च शास्त्रशिक्षाविषये शिष्यशिक्षणविषये च नैपुण्यस्य उत्कर्षम् अपकर्षञ्च विचार्य्य आवयोः कः समुत्कृष्टतरः तदवधार्य्य कथ्यताम्, अन्यथा आवयोः एषः विवादः न उपशाम्येत् इति भावः। देवः महाराज एव दैवतुल्य इत्यपि नौ आवयोः विशेषज्ञः वैलक्षण्याभिज्ञः प्राश्निकः प्रश्नपावम् प्रश्नपूर्व्वकोत्कर्षापकर्षनिश्चायक इति यावत्। तथाहि त्वमेव आवयोरिमं उत्कर्षापकर्षविचारं कर्त्तुमर्हसि नान्यः इत्यभिनयाचार्य्यमुखतो राज्ञः प्रयोगविषये तथा समुत्कर्षव्याख्यानात् नायकोत्कर्षः। प्राश्निकः प्रश्नेन संसृष्ट इत्यर्थे प्रश्नशब्दात् ष्णिकप्रत्ययः।

---

হরদত্ত। মহারাজ! প্রথমে এই গণদাসই আমার নিন্দা করিয়াছে। এ ব্যক্তি বলিয়া থাকে,—‘আমাতে ইহাতে সমুদ্র-কূপের প্রভেদ।’ অতএব মহারাজ নাট্য-শাস্ত্রে ও অভিনয়বিষয়ে আমাদের উভয়ের পরীক্ষা করুণ। মহারাজই আমাদের তারতম্য অবগত আছেন। অতএব প্রশ্নপূর্ব্বক উপস্থিত বিবাদে মীমাংসা করিতে পারিবেন। (ঝ)

गण। प्रथम: कल्प:। अवहितो देव: श्रोतुमर्हति। (ट)

राजा। तिष्ठ तावत्। पक्षपातमत्र देवी मन्यते। तदस्या: पण्डितकौशिकीसहिताया: समक्षमेव न्याय्यो व्यवहार:। (ठ)

---

(ञ) समर्थं सुयोग्यमेव प्रतिज्ञातं प्रतिज्ञा कृता, तथाहि राजा एव गुणदोषयो-रभिज्ञ: युवयो: प्रयोगादिकं पर्य्यवेक्ष्य युवां गुणदोषत: परिच्छेत्तुं समर्थ:, न तु अन्य: ; तत् अस्य समीपे गुणदोषविचारप्रार्थना युवयो: अतियोग्या इति भाव:। एतेन विदूषकेन स्वाभिलषितसिद्ध्यनुकूलं तयो: प्रकृतार्थे प्रवर्त्तनं दृढ़ीक्रियते। "उत्तरकाल कर्त्तव्यत्वप्रकारकबोधानुकूलव्यापार: प्रतिज्ञा" इति नैयायिका:, "प्रतिज्ञा साध्याभि-धायिका वागिति" स्मार्त्तभट्टाचार्य्या:। "प्राच्या विदूषकादीना" मिति नियमेन विदूषकस्य प्राच्या भाषा।

(ट) प्रथम: प्रकृष्ट: कल्प: पक्ष:, तथाहि राजा एव आवयो: उत्कर्षापकर्षौ सूक्ष्मतया विचारयिष्यति इति प्रकृष्टतम: पन्था: इति भाव:। अवहित: अवधान-सहकारेण वर्त्तमान: श्रोतुमर्हति, सावधानं आवयो: प्रयोगमवधेहि इत्यर्थ:।

(ठ) तिष्ठ क्षणम् अपेक्षस्व, तत्र हेतुमाह—पक्षेत्यादिना। देवी धारिणी अत्र अस्मिन् कर्त्तव्ये गुणदोषमूलकप्रकर्षापकर्षनिर्णयविषये पक्षपातं एकपक्षपातित्वं मन्यते मंस्यते भविष्यत्सामीप्ये वर्त्तमानाविधानात्। तथाहि गणदास: देव्या परि-गृहीत:, हरदत्तश्च राज्ञा, यदि हरदत्तस्य प्रकर्षो राज्ञा सत्यभूतोऽपि निर्द्धार्य्यते, तदा स्वपरिग्रहत्वेन हरदत्तस्य प्रकर्षो राज्ञा उपचित इत्यपि राज्ञी मन्येत इति भाव:।

तत् तस्मात् कारणात् पण्डितकौशिकीसहिताया: गुणदोषविचारक्षमया कौशिक्या युक्ताया: अस्या: देव्या: समक्षं प्रत्यक्षत एव व्यवहार: विचारप्रयोग: न्याय्य: युक्त:। यथा अयमुत्कर्षापकर्षविचार: मे न पक्षपातमूलक इति प्रतिपन्नं स्यात्, एतेनैव

---

বিদূষক। তোমার এই মতবাদ সর্ব্বথা যুক্তি-সঙ্গত। (ঞ)

গণদাস। আচ্ছা, ভাল কথা। মহারাজ! অবধানপূর্ব্বক শুনিতে আজ্ঞা হউক। (ট)

विदू। सुठ्ठु, भवं भणादि। [ सुष्ठु भवान् भणति ] (ड)

आचार्य्यौ। यद्देवाय रोचते। (ढ)

राजा। मौद्गल्य! अस्तुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्द्धमाह्वयतां देवी। (ण)

कञ्चु। यदाज्ञापयति देवः। (इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः)। इत इतो भवतो। (त)

---

पण्डितकौशिकीसहितायाः इत्यपि देव्या विशेषणतया उपन्यस्तम्, तस्याः समस्त-विषयाणां सूक्ष्मविचारक्षमत्वात् देव्या विश्वाससम्भवात्।

(ड) भवान् सुष्ठु सुयोग्यं भणति, तथाहि राज्ञीसमक्षमेव युज्यते व्यवहारः, अन्यथा त्वया उद्भावितस्य दोषस्य सम्भवात् इति भावः।

(ढ) देवाय महाराजाय यत् वस्तु रोचते स्वदते, तथाहि यथा महाराजेन सुष्ठु मन्यते तथैव कर्त्तव्यमिति भावः। "रुच्यर्थानां प्रीयमाणः" इति देवाय इत्यत्र चतुर्थी।

(ण) मौद्गल्येति कञ्चुकिनो नाम, मौद्गल्यगोत्रजातत्वेनास्य तथा संज्ञा वा। अस्तुं प्रश्नपूर्व्वं प्रस्तावं वृत्तान्तं हरदत्तगणदासयोः परस्परं कलहं तन्मूलकं मदन्तिके व्यवहारस्थापनञ्च निवेद्य विज्ञाप्य पण्डितकौशिक्या कौशिकीनामधेयया पण्डित-परिव्राजिकया सार्द्धं देवी धारिणी आह्वयताम् आमन्त्र्यताम् त्वया इति शेषः।

---

রাজা। স্থির হও। মহারাণী এ বিষয়ে পক্ষপাত মনে করিতে পারেন। অতএব পণ্ডিতকৌশিকীর সহিত তাঁহার সমক্ষেই এ বিষয়ের বিচার হওয়া ভাল। (ঠ)

বিদূষক। আপনি বেশই বলিয়াছেন। (ড)

উভয় আচার্য্য। মহারাজের যেরূপ অভিরুচি। (ঢ)

রাজা। মৌদ্গল্য! উপস্থিত প্রস্তাব জানাইয়া বিদুষী কৌশিকীর সহিত দেবীকে আহ্বান কর। (ণ)

धारि। (परिव्राजिकां विलोक्य)। **भअवदि ! हरदत्तस्स गणदासस्स अ संरम्भे कहं पेक्खसि ?** [भगवति ! हरदत्तस्य गणदासस्य च संरम्भे कथं प्रेक्षसे ? ] (थ)

परिव्राजिका। **अलं स्वपक्षावसादशङ्कया ? न परिहीयते प्रतिवादिनो गणदासः। (द)**

---

(त) परिव्राजिकया पण्डितकौशिकया सह वर्त्तमानया देव्या धारिण्या सह। इतः इतः अस्यां दिशि आगच्छतु इति शेषः।

(थ) कौशिक्याः परिव्राजिकापदमधितिष्ठन्त्याः साधारणापेक्षया विलक्षणशक्तिकतया भगवतीति सम्बोधनम्। संरम्भे विरोधमूलकविवादे कथं कं प्रकारं प्रेक्षसे, आलोचयसि ? तथाहि अत्र व्यवहारे कस्य जयः कस्य च पराजयो भावीति ज्ञातुमिच्छामि इति भावः। एष च प्रश्नः हरदत्तस्य राजपरिग्रहत्वेन स्वपरिग्रहगणदासापेक्षया उत्कर्षनिर्णयसम्भावनया इति परत एव व्यक्तम् भविष्यति।

(द) स्वपक्षस्य स्वपरिग्रहत्वेन आत्मीयस्य अवसादः पराजयः तस्य शङ्कया सम्भावनया अलं, वृथैव त्वं स्वीयपक्षस्य पराभवमाशङ्कसे इति भावः। शङ्काया मिथ्यात्वे हेतुमाह—नेत्यादिना। प्रतिवादिनः प्रतिपक्षरूपेण विवादकारिणः हरदत्तात गणदासः त्वत्परिगृहीतः अपरः अभिनयाचार्य्यः न परिहीयते न हीनतां गच्छति, अपि तु साम्यम् उत्कर्षं वा व्रजति, अतएव समात् हीनात् वा कथं गणदासस्य पराजयः स्यादिति भावः।

---

কঞ্চু। যে আজ্ঞা মহারাজ। (এই বলিয়া নিষ্ক্রান্ত হইয়া, পরিব্রাজিকাও দেবীর সহিত প্রবেশ করিল।)

কঞ্চু। এদিকে এদিকে মহারাণী। (ত)

ধারি। (পরিব্রাজিকার প্রতি দৃষ্টি নিক্ষেপ করিয়া) ভগবতি ! হরদত্ত ও গণদাস—এই উভয়ের বিবাদ কিরূপ বুঝিতেছেন ? (থ)

धारि। जइवि एव्वं तहवि राअपरिग्गहो से पहाणत्तणं उवहरदि। [यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रधानत्वमुपहरति।] (ध)

परि। अयि! राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती। पश्य—(न)

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः॥१२॥

[अन्वयः। अनलः भानोः परिग्रहात् अतिमात्रभासुरत्वं पुष्यति। चन्द्रोऽपि निशापरिगृहीतः (सन्) महिमानम् अधिगच्छति। १२।]

---

(ध) यद्यपि एवं प्रतिवादिनः गणदासस्य अपरिहीनत्वम् इत्यर्थः। राज्ञा परिग्रहः स्वीकारः, अस्य प्रधानत्वं प्रकृष्टताम् उपहरति ददाति। तथाहि राज-परिग्रहतया गुणवत्त्वेन हीनस्यापि अस्य गणदासात् उत्कर्ष इति, अतएवाहं तस्यैव विजयमाशङ्के इति भावः।

(न) राज्ञीशब्दस्य भाजनं आश्रयं आत्मानं चिन्तयतु विवेचयतु, तथाहि यथा राज्ञः परिग्रहत्वेन अस्य हरदत्तस्य उत्कर्षः, तथा राज्ञ्यास्तव परिग्रहत्वेन अस्यापि इति, कथं तत्पराजयशङ्का इत्यम्। यतः यथा लोकाः राजपरिग्रहोऽयमिति मत्वा हरदत्तस्य अनुत्कृष्टतरस्यापि राजसन्तोषणाय एव उत्कर्षं स्वीकरिष्यन्ति, तथा तवापि राज्ञ्याः परिग्रहोऽयमिति कृत्वा अस्यापि उत्कर्षं स्वीकरिष्यन्ति इति भावः।

१२। अथ अप्रस्तुतेन प्रस्तुतमनुकूलयति—अतिमात्रेत्यादिना। अनलः अग्निः भानोः सूर्य्यस्य परिग्रहात् सूर्य्यसम्पर्कात् रात्रौ सूर्य्यकिरणानां अग्नौ प्रवेशादिति भावः। अतिमात्रं अत्यर्थं भासुरत्वं दीप्तिमत्त्वम् पुष्यति धारयति, तथाहि दिवा किरण-

---

পরিব্রাজিকা। স্বপক্ষের পরাজয় শঙ্কা করিবেন না। গণদাস প্রতি-বাদী হরদত্ত অপেক্ষা কোন অংশেই হীন নহে। (দ)

ধারি। যদি ওরূপ হয়, তাহা হইলে রাজা যে আত্মীয়বোধে বিশেষ অনুগ্রহ করেন, তাহাতেই গণদাসের প্রধানত্ব বর্দ্ধিত হইবে। (ধ)

विदू। अविह्म! अविह्म!! उवट्ठिदा देवी पीठमद्दिअं पण्डिदकोसिइं पुरोकरिअ तत्तभोदी धारिणी। [अपिह्म! अपिह्म! उपस्थिता देवी पीठमर्द्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी।] (प)

राजा। पश्याम्येनाम्। यथा,—(फ)

---

त्याहस्समन्वितो भानुः रात्री अग्नौ तेजः समाविश्य अस्तं व्रजति, अतएव रात्री अनलः दिनापेक्षया अधिकतरतेजस्वी भवति, इति भावः। रात्री रविरश्मयः पावकमुपसंक्रामन्ति, तथा च श्रुती "आदित्यो नक्तमग्निं संक्रमते" इति। चन्द्रः अपि निशया रात्र्या परिगृहीतः प्राप्तः सन् महिमानं दिनापेक्षया अधिकतरकान्तिं अधिगच्छति लभते, तथाहि यथा राज्ञः परिग्रहात् हरदत्तस्य उत्कर्षः तथा तव परिग्रहात् गणदासस्यापि इति मा तावदात्मावज्ञावसादं कल्पयेथा इति भावः। अत्र समाद्प्रस्तुतात् समस्य प्रस्तुतस्य प्रतीतेः अप्रस्तुतप्रशंसालङ्कारः। प्रथमार्द्धे रात्रवित्यस्यावश्यप्रयोक्तव्यस्य अनुपादानात् न्यूनपदतादोषः, "रात्रावतिभासुरता"मित्यादि दिशा समाधेयः।

(प) अपिह्म अपिह्म इति विस्मयार्थकम् अव्ययम्, सम्भ्रमे द्विरुक्तम्। देवी महिषी धारिणी, पीठं आसनं मर्द्दयति उपवेशनक्रियया पीड़यति या तां स्वीयमासनं उपवेशनाय आश्रयन्ती, पारिभाषिकं तल्लक्षणं यथा दर्पणे—"दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु। किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः॥" पुरस्कृत्य अग्रे कृत्वा उपस्थिता आगता।

---

পরি। অয়ি! আপনি আপনাকেও রাজ্ঞী বলিয়া মনে করুন। (ন) দেখুন, অনল সূর্য্যের অনুপ্রবেশবশতঃ রাত্রিতে অতিমাত্র ঔজ্জ্বল্য ধারণ করিয়া থাকে। এবং চন্দ্রও রজনীর সংসর্গে সবিশেষ সমৃদ্ধি সম্ভোগ করেন॥ ১৩॥

বিদূষক। আশ্চর্য্য! আশ্চর্য্য! দেবী মহারাজ্ঞী ধারিণী, সহচারিণী পণ্ডিতকৌশিকীকে অগ্রে করিয়া উপস্থিত হইয়াছেন। (প)

मङ्गलाऽलङ्कृता भाति कौशिक्या यतिवेषया।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥१४॥

[अन्वयः। (या एषा) विग्रहवत्या अध्यात्मविद्यया समं त्रयीव यतिवेषया कौशिक्या मङ्गलालङ्कृता भाति। १४।]

(क) एनां दृश्यमानां महिषीं पश्यामि, या एषा महिषी एतद्भागस्य उत्तरवर्त्ति-श्लोकेनान्वयसमाप्त्या अर्थसमाप्तिः कार्य्या।

१४। या एषा इति गद्यस्थं कर्तृपदमाकर्षणीयम्। विग्रहवत्या मूर्त्तिमत्या अध्यात्मविद्यया आत्मसम्बन्धिज्ञानेन ब्रह्मविज्ञानधारया इत्यर्थः, समं त्रयी वेदत्रयमिव, अत्र ऋग्यजुःसाम्नां त्रयानामेव उपादानं, अथर्व्ववेदस्य अभिचारादिक्रियावेदकत्वेन भीषणतया प्रकृते असामञ्जस्यभङ्गाय इति मन्तव्यम्। यतिवेषया यतिजनसमुचितविशुद्ध-वेशधारिण्या कौशिक्या पण्डितपरिव्राजिकया सममिति शेषः। मङ्गलेन शुभावेदकेन विशुद्धेन सवादिना विशुद्धभूषणादिसम्भारेण वा अलङ्कृता भूषिता अथवा मङ्गला मङ्गलयुक्ता अलङ्कृता नानाविधभूषणभूषिता च भाति, तथाहि इयमसौ आगच्छन्ती कौशिकीसमभिव्याहृता देवी मया दृश्यमाना एवं मन्यते यथा अध्यात्मविद्यया मूर्त्ति-मत्या समभिजुष्टा त्रयीति। एतेन मङ्गलमयत्वात् अतिविशुद्धत्वाच्च राज्ञां राज्ञो महान् समादरो रतिविशेषश्च व्यज्यते इति। कामनालेशेनापि मुक्तस्य जनस्य अध्यात्म-विद्या भवतीति सापि कामनायुक्ता व्यवह्रियते अत एव तथा समम् कौशिक्याः सादृश्यमभ्युपगम्यम्। त्रयी च यागादिधर्म्मक्रियाद्वारेण स्वर्गादिबहुविधकाम्यानुकूलतया कामनाविषयवतीति तया समम् देव्याः सादृश्यमभ्युपगम्यम्। तत्सादृश्याभ्युपगममूला च देव्याः कौशिकीयुक्तायाः अध्यात्मविद्यासहितत्रयीस्वरूपोत्प्रेक्षा इति। त्रयीत्यत्रापि विभक्तिविपरिणामेन विग्रहवतीत्यन्वेति। "स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमरः। मङ्गलं विद्यते यस्याः इत्यर्थे अस्त्यर्थे अप्रत्यये मङ्गला इति द्वितीयकल्पे सिद्धं। अनुष्टुव् वृत्तम्।

রাজা। এই রাণী যেরূপ,—আমি তাহা দেখিতেছি। (ক)

परि । (उपेत्य) । विजयतां देवः । (ब)

राजा । भगवति ! अभिवादये । (भ)

परि । महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।
धारिणीभूतधारिण्योर्भव भर्त्ता शरच्छतम् ॥१५॥

[अन्वयः । शरच्छतं महासारप्रसवयोः सदृशक्षमयोः द्वयोः धारिणीभूतधारिण्योः भर्त्ता भव । १५ । ]

---

(ब) उपेत्य राज्ञः समीपे उपस्थाय । देव महाराज विजयताम् सर्व्वोत्कर्षेण वर्त्तताम् । "जयतेर्नास्ति पञ्चम्या" मित्यादिनियमस्वीकारमते "विजयते" इति पाठः स्वीकर्त्तव्यः ।

(भ) भगवति, साधारणापेक्षया विलक्षणशक्तिसम्पन्ने, ननु षड़ैश्वर्य्यशालिनि इति प्रकृते अनुपयुक्तत्वात् तदर्थस्य, प्रकृतार्थश्च तात्पर्य्यानुपपत्तिमूलकलक्षणाशक्त्या अवसेयः । अभिवादये वन्दे भवतीमिति शेषः ।

१५ । अथ राज्ञा कृतप्रणामा परिव्राजिका युक्तरूपमाशीर्व्वादवचनं प्रयुङ्क्ते —महेत्यादि । शरदां वत्सरानां शतं, शतसंख्यकान् वत्सरान् अभिव्याप्य इत्यर्थः । महान् प्रचुरः सारः वलं स्थिरांशश्च प्रसवः शस्यादिकं सन्तानश्च ययोः तयोः महावल-सम्पन्नयोः प्रचुरस्थिरांशसम्पन्नयोश्च, सदृशी परस्परं तुल्या क्षमा सहिष्णुता ययोः तयोः, द्वयोः धारिणी तदाख्या राजमहिषी भूतधारिणी पृथिवी च तयोः भर्त्ता स्वामी पालकश्च भव । तथाहि चिरं धारिण्या सह अवियुक्तः पृथिवीम् उपभुङ्क्ष्व, राज्ये शस्य-

---

धर্ম্ম ও পাতিব্রত্যপ্রভৃতি সর্ব্ববিধ পবিত্র গুণে ও মঙ্গলার্থক দ্রব্যসমূহে অলঙ্কৃতা এই দেবী, যতিবেশধারিণী কৌশিকীর সাহচর্য্যে, মূর্ত্তিমতী অধ্যাত্মবিদ্যার সহিত সম্মিলিত বেদবিদ্যার ন্যায় যেন শোভা পাই-তেছেন ॥১৪॥

পরি। ( সমীপে সমাগত হইয়া ) মহারাজের জয় হউক। (ব)

রাজা। ভগবতি ! অভিবাদন করি। (ভ)

धारि। जेदु अज्जउत्तो। [जयत्वार्य्यपुत्रः] (म)

राजा। स्वागतं देव्यै ? (परिव्राजिकां विलोक्य)। भगवति! क्रियतामासनपरिग्रहः। [सर्व्वे उपविशन्ति।] (य)

---

सम्पत्तय इव चिराय धारिणीगर्भे सुसन्तानान् लभस्व इत्यादिरूपाशीरिति भावः। अत्र स्वामित्वपरिपालकत्वभेदेन भर्त्तृत्वस्य भिन्नस्यापि श्लेषमूलकाभेदाध्यवसायात् भेदे अभेदरूपातिशयोक्तिरिति केचित् वदन्ति। धारिणीभूतधारिण्योः परस्परं साम्यप्रत्ययेन उपमेयोपमा गम्या। परे तु—भूतधारिण्या एव प्रसिद्धतया उपमानत्वप्रत्ययात् उपमा-सामान्यं व्यज्यते। भूतधारिणीशब्दस्य स्त्रीलिङ्गतया राज्ञश्च पुंलिङ्गत्वेन लिङ्गसाम्यात् नायकव्यवहारसमारोपात् समासोक्तिरित्यपि। तृतीयपादे छेकानुप्रासः इति। द्वयोरेकतरपार्श्वमपहाय अपरस्य भरणप्रतिषेधाय द्वयोरेव इत्येवार्थप्रतिपत्तये द्वित्व-संख्याप्रतिपादकस्य द्वयोरिति पदस्य नाधिकत्वं। "सारो बले स्थिरांशे च न्याय्ये क्लीवे वरे त्रिषु" इत्यमरः। "अपत्योत्पादयोः पुष्पे फले च प्रसवो मत" इति अजयः।

(म) आर्य्यस्य माननीयस्य श्वशुरस्य पुत्रः, स च स्वामी नतु देवरादिः, नाटकादौ स्वामिनमुद्दिश्य एव तस्य प्रवृत्तिदर्शनात् प्रसिद्धेरेव प्रमाणत्वात्। "कृत्तद्धितसमासा-नामभिधानं नियामकम्" इति "कोषाप्तवाक्याद्व्यवहारतश्चे"ति च श्रवणात् "आर्य्य-पुत्रोऽथ भर्त्ता च स्वामी"ति हेमचन्द्रीयात् योगरूढोऽयं आर्य्यपुत्रशब्द इति निर्व्विवादम्।

(य) भगवति, इति कौशिक्याः सम्बोधनम्, अत्रापि भगवतीशब्दस्य पूर्व्ववदर्थविशेषे वृत्तिर्मन्तव्या। आसनपरिग्रहः आसनस्वीकारः क्रियताम् उपविश्यतामित्यर्थः। सर्व्वेषु

---

পরি। মহারাজ, মহাসারসমুদ্ভূতা ও সর্ব্বথা তুল্যক্ষমাশালিনী ধারিণী ও ধরণী এই উভয়ের স্বামী হইয়া, শতবর্ষ জীবিতসুখ ভোগ করুন ॥১৫॥

ধারি। আর্য্যপুত্রের জয় হউক, জয় হউক। (ম)

राजा। भगवति! अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम्। (र)

परि। (सस्मितम्)। अलमुपालम्भेन? पत्तने सति ग्रामे रत्न-परीक्षा? (ल)

---

कौशिकीं प्रत्येव राज्ञा आसनपरिग्रहानुरोधवचनस्य प्रयोगात् सर्व्वतो गौरवं कौशिक्या एव व्यज्यते।

सर्व्वे कौशिकीगणदासहरदत्ताग्निमित्रधारिणीप्रभृतयः तत्र उपस्थिता यावन्तः जनाः। उपविशन्ति आसने इति शेषः।

(र) अत्रभवतोः मान्ययोः, विज्ञाने नृत्यगीतादिकलाविद्यायां संघर्षिणोः विवदमानयोः, अहं कलाविद्यायाम् उत्कृष्ट इत्यवं वाटेन परस्परविरोधकारिणोः हरदत्त-गणदासयोः तदाख्ययोः अनयोः अभिनयाचार्य्ययोः, भगवत्या अस्मासु मध्ये सर्व्वतः गौरवमधितिष्ठन्त्या भवत्या प्राश्निकपदम् विचारकपदम् अध्यासितव्यम् आश्रयितव्यम्। तथाहि अनयोः कतर उत्कृष्टस्तत् त्वया एवं अनयोः प्रयोगम् दृष्टवत्या निर्णेयो देय इति भावः।

(ल) सस्मितम् ईषत् हास्येन सह, तच्च राज्ञोक्तस्य वाक्यस्य अयुक्तत्वमुद्भावनाय। उपालम्भेन तिरस्कारेण अलम्। साधारणस्य जनस्य विज्ञेन जनेन गुरौ कर्म्मणि नियोगस्तस्य तिरस्कार एव, पत्तने नगरे राजधान्यामित्यभिप्रायः, सति वर्त्तमाने, ग्रामे क्षुद्रपल्लीग्रामादौ रत्नस्य परीक्षा उत्कर्षापकर्ष विवेचना?

तथाहि पत्तने बहवः रत्नवेदिनः श्रेष्ठिप्रभृतयः सन्ति, ग्रामादौ च न तथा, ततः

---

রাজা। দেবি! স্বাগত?, (পরিব্রাজিকাকে অবলোকন করিয়া) ভগবতি! আসন পরিগ্রহ করুন। (সকলের উপবেশন)। (য)

রাজা। ভগবতি! এই মাননীয় হরদত্ত ও গণদাস পরস্পর প্রয়োগ-বিজ্ঞান লইয়া বিবাদে প্রবৃত্ত হইয়াছেন। আপনাকে ইহাদের বিবাদ মীমাংসা করিতে হইবে। (র)

राजा। नैतदेवम्। पण्डितकौशिकी खलु भगवती। पक्ष-पातिनावहं देवी च। (व)

नगरे रत्नपरीक्षासम्भावने सति क्षुद्रग्रामे तत्परीक्षा यथा हास्याय कल्पते विफलताञ्च समवलम्बते, तथैव अत्र भवति वर्त्तमाने गुणदोषपरीक्षायां सुनिपुणे मया तत्परीक्षण-मिति कथमन्याय्ये मां नियोजयसि इति भावः। अत्र पत्तन इत्यादि वाक्यप्रतिपाद्यात् समात् अप्रस्तुतात् पत्तनात् ग्रामात् रत्नपरीक्षणाच्च क्रमेण प्रस्तुतस्य, राज्ञः कौशिक्याः आचार्य्ययोः उत्कर्षापकर्षयोश्च प्रतिपत्त्या अप्रस्तुतप्रशंसालङ्कारः। यद्यपि "पूः स्त्री पुरीनगर्य्यौं वा पत्तनं पुटभेदन"मित्यमरवचनात् पुरीमात्रमेव पत्तनशब्दवाच्यम्, तथापि "पत्तनादि द्वयं राजधान्यनुगत"मिति रघुनाथवचनात् अत्र तदर्थता। तल्लक्षणं यथाह रघुनाथः—"देवतायतनैश्चित्रैः प्रासादापण-वेश्मभिः। नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः॥" इति। ग्रामलक्षणं यथा मार्कण्डेये—"तथा शूद्रजनप्राया सुसमृद्धकृषीवला। क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका।" इति।

(व) एतत् मया अभिहितं वस्तु एवं भवत्या उक्तरूपं भवत्यास्तिरस्काररूपं न भवतीति शेषः। तथाहि यत् मया उक्तं तस्य स्वारसिक एवार्थस्त्वयि संक्रामति, नतु अन्यथा तिरस्कारादिरूपार्थ इति भावः। तत्रैव हेतुमाह—पण्डितेत्यादिकम्। खलु यस्मात् भगवती अलौकिकशक्तिशालिनी भवती पण्डितकौशिकी पाण्डित्यसम्पन्नाः कौशिक्यभिधाना। तथाहि मूढे गुणदोषविचारासमर्थे एव जने अयं भारो न्यस्त-स्तिरस्काराय प्रभवति नतु गुणदोषविचारक्षमायां भवत्यामिति भावः। ननु त्वं स्वयं देवी वा एतावुभावपि गुणदोषविचारे शक्तौ, तत् कोऽयमत्र मम विशेषः येन स्वस्य देव्याश्च परित्यागेन मामेव अत्र नियोजयसि इत्याकाङ्क्षायामाह—पक्षेत्यादि। अहं देवी महिषी च पक्षपातिनौ अनयोरेकतरपक्षाश्रितौ भवाव इति शेषः। तथाहि मत्-परिग्रहो हरदत्तः, देवीपरिग्रहश्च गणदास इति स्वत एव स्वपरिग्रहस्य उत्कर्षनिर्णये

পরি। (ঈষৎ হাস্য করিয়া) তিরস্কারের প্রয়োজন নাই। নগর থাকিতে গ্রামে রত্নপরীক্ষা? (ল)

आचार्य्यौ। सम्यगाह देवः। मध्यस्था भगवती नौ गुण-दोषतः परिच्छेत्तुमर्हति। (अ)

राजा। तेन हि प्रस्तूयतां विवादः। (ष)

---

वा मतिः प्रवर्त्ततामिति शङ्कया पक्षपातशून्यायां भवत्याम् एष भारः न्यस्त इति भावः। वस्तुतस्तु अत्र राज्ञः पण्डितकौशिक्या एतद्विषयस्य विचारप्रार्थनायाम् एवमाग्रहे हेतुरीदृशो मन्तव्यः, यथा राजा यदि स्वयमनयोराचार्य्ययोर्गुणदोषौ विचारयितुं प्रवृत्तः स्यात् तदा तदनुकूलतया मालविकाया उपस्थापनस्य देवीसमक्षं तथा प्रयोजनीयता प्रतिपाद्य न आयासाफल्यम् लभेत, यदि देवी विचारप्रवृत्ता स्यात् तदा कथञ्चित् अन्तरा बुद्धिचातुर्य्येण उभयोः विवादभङ्गमेव साधयेत्; एवञ्च सति सर्व्वमेव नाशं गच्छेदभि-लषितमिति। पण्डिता चासौ कौशिकी चेति कर्म्मधारये पूर्व्वपदस्य पुंवद्भावः।

(अ) देवः महाराजः सम्यक् समीचीनं आह, मध्यस्था पक्षपातशून्या भगवती कौशिकी नौ आवां गुणदोषतः गुणे दोषे च विषये। सप्तम्यास्तस् वक्तव्यः। परिच्छेत्तुं निर्णेतुम् अर्हति। तथाहि पक्षपातरहिता पण्डितकौशिकी यथा आवयोः उत्कर्षाप-कर्षौ निर्णेष्यति तथैव वयं विश्वसिमः इति, अन्यथा विपक्षाणामन्यथा मनोगतिर्व्वा-स्यादिति भावः। एतौ तु न राजमनोगतमभिप्रायं जानीतः, परं स्वत एव एवं भावः इति ज्ञातव्यम्।

(ष) तेन मध्यस्थायाः कौशिक्याः विचारस्य वादिप्रतिवादिभ्यामुभाभ्यामेव अङ्गी-कर्त्तव्यतया स्वीकारेण। विवादः वादप्रतिवादविषयः विचार्य्यविषयः प्रस्तूयतां आरभ्यताम्—हरदत्तगणदासाभ्यामिति शेषः।

---

রাজা। ইহা সেরূপ নহে। আপনি পক্ষপাতশূন্যা পণ্ডিতকৌশিকী; আমরা স্ত্রীপুরুষ—উভয়ে পক্ষপাতী। (ব)

আচা। মহারাজ যুক্তিসঙ্গত কথাই বলিয়াছেন। ভগবতীর কাহারও প্রতি পক্ষপাত নাই। অতএব আমাদের গুণদোষ বিচার করিয়া উপস্থিত বিবাদ মীমাংসা করিতে পারেন। (শ)

परि । देव ! प्रयोगप्रधानं हि नाट्यशास्त्रम्, किमत्र वाग्-व्यवहारेण ? कथं वा देवी मन्यते ? । (च)

देवी । जइ मं पुच्छसि, तदा एदाणं विवादो एव्व ण मे रुच्चदि । [ यदि मां पृच्छसि, तदा एतयोर्व्विवाद एव न मे रोचते] । (छ)

---

(च) नाट्यशास्त्र अभिनयविषयकं शास्त्रं प्रयोगः अभिनयः आङ्गिकाद्यवस्थानुकार एव प्रधानं प्राधान्येन अवलम्बनीयं यस्य तथाभूतम्, अभिनयप्रकर्षेणैव नाट्यशास्त्रे ज्ञानप्रकर्षं प्रतिपद्यते नतु श्रवणमात्रेण ; अतः अत्र अस्मिन् नाट्यविषयकप्रकर्षविचारे वाचां शास्त्रविषयमाश्रित्य वचनानां व्यवहारेण प्रयोगेण किम् अपितु न किमपि फल-मिति। तथाहि, अत्र विचारविषये अभिनयदर्शनमेव भृशमुपयुज्यते नतु वाग्विशेषावतार इति भावः । देवी महिषी वा किं कीदृशं मन्यते, प्रयोगप्रदर्शने महिष्याः किमभि-मतं तज्ज्ञातुमिच्छामीति भावः। देवीमतजिज्ञासा तु देव्या अन्यथामननप्रतिषेधाय इति ज्ञेयम्।

(छ) पृच्छसि अस्मिन् विषये औचित्यमनौचित्यं वा जिज्ञाससे, तदा एतयोः अभिनयाचार्य्ययोः हरदत्तगणदासयोः विवादः वाक्प्रयोगेण कलह एव न मे मह्यं रोचते का कथा प्रयोगप्रदर्शनेन इति। अथवा इमौ द्वावेव अभिनयविद्यायां सुनिपुणौ समानौ तदनयोः प्रतिद्वन्द्वितया विरोध एव न वरमित्यहं जानामीति भावः । स चार्थं भावः प्रत्युत्तरपर्य्यालोचनेन व्यक्तीभवतीव । "मे" इत्यत्र रुच्यर्थानां प्रीयमाण इति चतुर्थी ।

---

রাজা। তবে বিবাদমীমাংসার জন্য প্রস্তুত হউন। (ঘ)

পরি। মহারাজ! নাট্যশাস্ত্র প্রধানতঃ প্রয়োগেরই উপর নির্ভর করিয়া থাকে। অতএব উপস্থিত ক্ষেত্রে বাক্যপ্রপঞ্চের প্রয়োজন কি ? দেবী এ বিষয়ে কি মত করেন ? (স)

দেবী। যদি আমায় জিজ্ঞাসা করেন, তাহা হইলে বলি—ইহাঁদের বিবাদ আমার অভিপ্রেত নহে। (হ)

गण। देवि! न मां समानविद्यतया परिभवनीयमवगन्तुमर्हसि। (च)

विदू। भो! पेक्खामो उअरम्भरिसंवादं। किं मुहा वेअणदाणेण एदाणं? [भोः प्रेचामहे उदरम्भरिसंवादं। किं मुधा वेतनदानेन एतयोः?] (क)

---

(च) समाना अन्यूनानतिरिक्ता च विद्या ज्ञानं प्रकृते नाट्यविषयकमित्यर्थः, यस्य तस्य भावस्तत्तातया, हरदत्तो यथा नाट्यकलाभिज्ञः अहमपि तथा ननु तस्मात् आधिक्येन इत्येवमित्यर्थः। परिभवनीयं अपमानभाजनम् अवगन्तुं ज्ञातुम् अर्हसि, तथाहि अहं एतस्मात् अधिकतरं नाट्यादौ अभिज्ञः, अतः अनेन मम समानता-प्रतिपादनं भूयान् तिरस्कार एव मे इति भावः। अथवा समानविद्यतया मम एतस्य च नाट्यविद्यायाः तुल्यतया हेतोः मां परिभवनीयं हरदत्तेन पराजयार्हं न अवगन्तुमर्हसि, तथाहि समानविद्यस्यापि मे अनेन पराजयोऽशक्य एव इति भावः।

(क) उदरं बिभ्रति ये ते उदरम्भरयः "आत्मोदरकुचिषु भृञः खिः" इति। औदरिकाः उदरपूरणमात्रसाराः तेषां संवादं व्यापारं प्रेचामहे, तथाहि यथा औदरिकाः केवलमुदरपूरणमेव कर्त्तुं पारयन्ति, ननु अन्यत् किमपि गुणकर्म्म ; तथैव एतौ केवलं राजकोषात् धनान्याहृत्य उदरपूरणमेव कुर्व्वतः, नतु किमपि नाट्यादि-चातुर्य्यमनयोः विद्यते, अन्यथा किमेवं उत्कर्षापकर्षविचारे विमुखतामालम्बयाताम्? मुधा वृथा एतयोः उदरपूरणमात्रसारयोः नाट्याचार्य्ययोः वेतनदानेन भृतिनिष्पादनेन किम्, अपितु वेतनदानमनयोः वृथा, येन तथाज्ञानवत्त्वमनयोर्नास्ति येन उत्कर्षलाभाय प्रयतेतामिति भावः। एतच्च विदूषकवचनं गणदासस्य वाचा विवादविरतिसम्भावनया।

---

গণ। দেবি! সমানবিদ্যাবিশিষ্ট বলিয়া আমি যে পরাজিত হইব—এরূপ মনে করিবেন না। (ক)



देवी। णं कलहप्पिओसि। [ननु कलहप्रियोऽसि]। (ख)

विदू। मा एव्वं। अण्णोण्णकलहप्पिआणं मत्तहत्थिणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो? [मैवं। अन्योन्यकलहप्रिययो-र्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः]। (ग)

राजा। ननु स्वाङ्गसौष्ठवातिशयमुभयोर्दृष्टवती भगवती?। (घ)

---

(ख) ननु सम्बोधने। त्वमित्यध्याहार्य्यम्। कलहप्रियः द्वयोर्व्विवादप्रियः असि, अन्यथा कथमनर्थकोऽपि अनयोर्व्विवादस्तव एवमायहविषयो जातः, येन तन्निवृत्तिं सम्भाव्यैव समुत्तेजनसमर्थां परिभवसाधिकाञ्च वाचमनयोः प्रयोजयसि इति भावः।

(ग) मा एवम् अहं कलहप्रियः अस्मीति नैव निश्चिनुया इत्यर्थः। अन्योन्यं परस्परं कलहः विवादः तत्प्रिययोः तदनुरक्तयोः मत्तहस्तिनोः मत्तवारणयोः एकतरस्मिन् अन्यतरस्मिन् मत्तहस्तिनि अनिर्जिते अपराभूते, कुतः केन हेतुना उपशमः तयो-र्व्विवादस्य इति शेषः। अपितु न कुतोऽपि उपशमो भवतीति भावः। तद्वदनयोरपि एकतरस्य पराभवे अजाते न विवादोपशम इति प्रकृतार्थः। अहं समुत्तेजनवाचं प्रोचयेयं नवा तदनवलोकेऽव इमौ विवादं कुर्य्यातां यावत् एकतरस्य जयो न स्यात् तत् कोऽयमत्र मे दोष इति तात्पर्य्यम्। अत्र अप्रस्तुतेन समेन अन्योन्यकलहासक्त-मत्तहस्तिनोः एकतरस्य जयाभावे विवादोपशमाभावेन नाट्याचार्य्ययोः एकतरस्य अपराजये विवादोपशमाभावस्य प्रस्तुतस्य समस्य प्रत्ययात् अप्रस्तुतप्रशंसालङ्कारः।

(घ) ननु सम्बोधने, स्वाङ्गे स्वीयाभिनयाङ्गीभूते नृत्यगीतादौ सौष्ठवं चातुर्य्यं तस्य

---

বিদূ। ইহারা কেবল আহারাদি করিয়াই দিন কাটায়, ইহাদের জয় পরাজয় দেখিব। ইহাদিগকে বৃথা বেতন দিয়া ফল কি? (ক)

দেবী। তুমি নিশ্চয়ই কলহপ্রিয়। (খ)

বিদূ। অয়ি চণ্ডি! এরূপ মনে করিবেন না। পরস্পর কলহপ্রিয় মত্ত-হস্তিদ্বয়ের মধ্যে একতর পরাজিত না হইলে, শান্তি সম্ভাবনা কোথায়? (গ)

परि। अथकिम् ? (ङ)

राजा। तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम् ? (च)

परि। तदेव वक्तुकामास्मि। (छ)

श्लिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव ॥१६॥

---

अतिशयः प्राचुर्य्यम्। उभयोः अनयोः द्वयोः आचार्य्ययोः हरदत्तगणदासयोः इत्यर्थः। दृष्टवती प्रत्यक्षीकृतवती ?

(ङ) अथकिम्—दृष्टवती अहं अनयोरभिनयाङ्गनैपुण्यमिति भावः।

(च) तत् तदा इदानीं स्वाङ्गसौष्ठवातिशयदर्शने जाते सति आभ्याम् आचार्य्याभ्यां अतः अस्मात् स्वाङ्गसौष्ठवात् परम् अन्यत् किं वस्तु प्रत्याययितव्यम् दर्शयितव्यं येन पुनर्नूतनतया अनयोरुत्कर्षापकर्षौ अवगन्तुं क्षमेथा इति भावः।

(छ) तदेव यदतःपरं प्रत्याययितव्यं तद्वस्तु एव वक्तुकामा विज्ञापयितुकामा अस्मि, तथाहि वक्ष्यमाणमेव वस्तु अस्माभिरदृष्टपूर्व्वं दृष्टं सत् अनयोरुत्कर्षापकर्ष-विचारे आनुकूल्यं करिष्यति तत् तदेव दर्शयितव्यमाभ्यामिति भावः। तच्च वस्तु उत्तरश्लोके सम्यक्स्पष्टम् भविष्यति।

---

রাজা। ভগবতী ইহাদের উভয়ের প্রযুক্ত নাট্যাঙ্গের সৌন্দর্য্য দর্শন করিয়াছেন কি ? (ঘ)

পরি। হাঁ, দেখিয়াছি। (ঙ)

রাজা। তবে, এক্ষণে ইহাঁরা আর ইহার উপর কি দেখাইয়া, নিজেদের মধ্যে তারতম্য আমাদিগকে বুঝাইয়া দিবেন ? (চ)

পরি। তাহাই আমি বলিতে ইচ্ছা করি।—(ছ)

[अन्वयः। कस्यचित् आत्मसंस्था क्रिया शिष्टा (भवति)। अन्यस्य संक्रान्तिः विशेषयुक्ता (भवति)। यस्य उभयं साधु (भवेत्) स एव शिक्षकाणां धुरि प्रतिष्ठापयितव्यः। १६। ]

१६। अथ आचार्य्याभ्यामिदानीम् उत्कर्षापकर्षविचारानुकूलं शिष्यजने विद्यासंक्रमणस्य नैपुण्यम् प्रदर्शयितव्यमित्याह—शिष्टेत्याद्युपक्रमेण। कस्यचित् जनस्य आत्मसंस्था आत्मगता स्वेनगृहीता क्रिया नृत्यगीतादिविद्या शिष्टा उत्कर्षवती, तथाहि कश्चित् स्वयमतिशिक्षितः विद्याप्रकर्षमात्मन्येव प्रतिपद्यते नतु शिष्यजने तस्य विद्याप्रकर्षः उपलभ्यते। अन्यस्य अपरस्य कस्यचित् जनस्य संक्रान्तिः शिष्यजने उपसंक्रमः विशेषयुक्ता स्वापेक्षया वैलक्षण्यसहिता। तथाहि तस्य शिष्ये एव विद्याप्रकर्षः उपलभ्यते नतु स्वस्मिन् तथा समुत्कर्षप्रतीतिरिति। दृश्यन्ते च अद्यापि तथा विद्वांसः येषां सभायामुपस्थितानामात्मविद्यायाः न तथा परिस्फुरणं भवति येन विपक्षनिरासः स्यात्, किन्तु तेषामेव विद्या शिष्येषु संक्रान्ता सती सभायां सुविदुषो वाग्मिप्रवरानपि मूकानिव विदधातीति, अपरे च विद्वांसः सभायां प्रतिपक्षविजये गीष्पतिसदृशाः सिद्धवाच इति। एतदेवास्य सन्दर्भस्य विषयतां व्रजतीति ज्ञेयम्। किन्तु यस्य जनस्य उभयं आत्मसंस्था क्रिया शिष्ये तत्संक्रान्तिश्चेति द्वयं साधु उत्कृष्टं, यः स्वयं विद्यायां उत्कृष्टः, यस्य शिष्यजने विद्याप्रतिपादनञ्च तथा इत्यर्थः। स एव जनः शिक्षकाणां शिक्षादानकारिणां विदुषां धुरि अग्रे प्रधानपद इत्यर्थः। प्रतिष्ठापयितव्यः स्थापयितव्यः। तथाहि स एव सर्व्वथा उत्कृष्ट इति भावः। एतेन अनयोरपि शिष्ये विद्याप्रतिपादनमुत्कृष्टं नवा इति निर्णयाय शिष्यजनस्य क्रियाप्रवृत्तिर्दर्शनीया, तेनैव सम्यगुत्कर्षापकर्षनिर्णयो विधातव्य इति भावः। अत्र सामान्यात् अप्रस्तुतात् विद्वत्विशेषाणां आत्मगतत्वादिभिः विद्याप्रकर्षात् विशेषस्य प्रस्तुतस्य हरदत्तगणदासयोः आत्मगतत्वादिना विद्याप्रकर्षस्य सम्भावितस्य प्रत्ययात् सामान्यविशेषभावेन अप्रस्तुतप्रशंसालङ्कारः। प्रथमपादे कथितायाः आत्मसंस्थक्रियायाः द्वितीयपादे च संक्रान्तेरन्यस्य शिष्यगतक्रियारूपस्य आत्मगतक्रियारूपस्य च वस्तुनः व्यपोहनप्रत्ययात् परिसंख्या, सा च व्यपोहनस्य अर्थतो लाभात् आर्थीति उभयोः सङ्करः। स इत्यनन्तरं प्रयोक्तव्यस्य एव शब्दस्य तदनन्तरमनिवेश्य अक्रमेण अन्यत्र निवेशात् अक्रमतादोषः। "यद्योभयं साधु भवेत् स एव संस्थापनीयो

বিদূ। সুদং অজ্জেহিং ভঅবদীএ বঅণং। এস পিণ্ডিতত্থো উবদেসদংসণাদো নিণ্ণও ত্তি। [ শ্রুতমার্য্যাভ্যাং ভগবত্যা বচনম্। এষ পিণ্ডিতার্থ: উপদেশদর্শনান্নির্ণয় ইতি ] (জ)

হর। পরমভিমতং নঃ। (ঝ)

---

ধুরি শিক্ষকাণাম্” ইতি সমাধানদিক্। ইন্দ্রবজ্রোপেন্দ্রবজ্রয়োঃ সঙ্কররূপা উপজাতির্বৃত্তম্। ॥১৫॥

(জ) আর্য্যৈঃ মাননীয়ৈঃ যুষ্মাভিঃ, ইতি আচার্য্যাবুদ্দিশ্য উক্তম্, বহুবচনঞ্চ গৌরবদ্যোতকম্। ভগবত্যাঃ মাননীয়ায়াঃ পণ্ডিতকৌশিক্যাঃ বচনং শিষ্টেত্যাদি বাক্যং শ্রুতম্ আকর্ণিতম্। এষঃ বক্ষ্যমাণঃ পিণ্ডিতার্থঃ অর্থসমষ্টিঃ সংক্ষিপ্তসারার্থ ইত্যর্থঃ। উপদেশস্য শিক্ষায়াঃ শিষ্যসংক্রমিতায়া ইত্যর্থঃ। দর্শনাৎ নির্ণয়ঃ আচার্য্যয়োরনয়োঃ উৎকর্ষাপকর্ষবিচার ইত্যর্থঃ। ভবিষ্যতীতি শেষঃ। তথাহি যুবয়োঃ শিষ্যশিক্ষায়াঃ প্রকর্ষেণ অপকর্ষেণ চ গুণাগুণবিচারস্য কর্ত্তব্যত্বাৎ সা পরীক্ষণীয়া। অত্র মালবিকাদর্শনসন্দেহনির্ণয়াৎ যুক্তির্নাম সন্ধ্যঙ্গমুক্তম্।

(ঝ) পরম্ অত্যর্থং নঃ অস্মাকম্ অভিমতম্ অভিপ্রেতং অনয়া পণ্ডিতকৌশিক্যা উদ্ভাবিতং বস্তু ইত্যর্থঃ। তথাহি পণ্ডিতকৌশিকী যথা প্রকর্ষাপকর্ষনির্ণয়কারণং প্রাহ অস্মাকমপি তদেব সম্যগভিমতমিতি ভাবঃ।

---

কোন কোন শিক্ষক, স্বয়ং বিশেষরূপে অভিনয়াদি ব্যাপার সম্পাদন করিতে পারেন; আর কেহ বা শিষ্যদিগকে বিশিষ্টরূপে তত্তৎ ব্যাপার শিক্ষা দিয়া, তাহাদের দ্বারা তাহা সম্যক্ সাধন করিতে সমর্থ হইয়া থাকেন। এই উভয় গুণই যাহাতে আছে, তিনিই শিক্ষকগণের মধ্যে সর্ব্বপ্রধানপদে প্রতিষ্ঠিত হইবার যোগ্য পাত্র ॥১৬॥

বিদূ। আপনারা উভয়ে ভগবতীর বাক্য শুনিলেন। উপদেশদর্শনেই তারতম্য নির্ণীত হইয়া থাকে, ইহাই ফলিতার্থ। (জ)

হর। ইহাতে আমাদের সর্ব্বথা অভিমতি আছে। (ঝ)

गण। देवि! एवं स्थितम्? (ञ)

देवी। जदा उण मन्दमेधा सिस्सा उवदेसं मलिणेन्ति, तदा आआरिअस्स दोसो णु? [ यदा पुनर्मन्दमेधाः शिष्या उपदेशं मलिनयन्ति, तदा आचार्य्यस्य दोषो नु? ] (ट)

राजा। देवि! एवमापद्यते। विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति। (ठ)

---

(ञ) एवं इत्थम् इयोरेव विद्यायाः शिष्यसंक्रमे प्रकर्षापकर्षदर्शनेन शिक्षकयो-रावयोः प्रकर्षापकर्षविचारो भावीति निर्णीतम् इत्यर्थः, तदेव भवत्या कीदृशं निर्णीयते इति गणदासस्याभिप्रायः।

(ट) मन्दा प्रकृतविषयस्य सूक्ष्मार्थग्रहणे पाटवशून्या मेधा धारणावती बुद्धिः येषां ते अनिपुणमतयः शिष्या उपदेशं आचार्य्यस्य शिक्षां मलिनयन्ति मालिन्यं प्रापयन्ति, तथाहि शिष्येषु केचित् निपुणधियः केचिच्च मन्दास्तत्र मन्दाः शिक्षाविषयमनवगच्छन्तः शिक्षकस्यापि दूषका भवन्ति। तदा आचार्य्यस्य शिक्षकस्य दोषः अपराधः नु, अपितु-नैव, किन्तु यदि शिष्यजने विद्यायाः शिक्षकप्रतिपादितायाः उत्कर्षापकर्षविचारेण शिक्षकाणामपि तथात्वं स्यात् तथा यस्य शिष्योऽपकृष्टः प्रकृतार्थतत्त्वग्रहणाशक्तः, तस्य स्वयं सुविदुषोऽपि अन्यतः स्वापकृष्टात् उत्तमशिष्यसम्पन्नात् अपकर्षः स्यादिति अतएव ममात्र नास्ति तथा सम्मतिरिति भावः।

(ठ) अथ राजा देव्या अनभिमतत्वकारणं गणदासस्य निपुणस्यापि शिष्याया माल-विकायाः स्वल्पकालं तत्समीपे शिक्षार्थं विसर्जनेन इदानीमपि तथा नैपुण्यानुदय-सम्भावनया पराजयमाशङ्क्य प्रकृतप्रतिषेधवारणाय प्राह—देवित्यादि। एवं वक्ष्यमाण-रूपम् आपद्यते समुच्चार्य्यते पण्डितैरिति शेषः, यथा विनेतुः शिक्षयितुः अद्रव्यस्य

---

গণ। দেবি! ইহাই স্থিরীকৃত হইল? ( ঞ )

দেবী। শিষ্য বিশিষ্টরূপমেধাবিশিষ্ট না হইয়া যদি উপদেশের বিপরীত ব্যবহার করে, তাহাতে আচার্য্যের দোষ কি? ( ট )

देवी। (स्वगतं)। कहं दाणिं? (गणदासं विलोक्य प्रकाशम्)। अलं अज्जउत्तस्स उस्साहकारणं मनोरहं परिपूरिअ? विरम णिरत्थआदो आरम्भादो। [कथमिदानीं? अलमार्य्यपुत्रस्य उत्साहकारणं मनोरथं परिपूर्य्य? विरम निरर्थकादारम्भात्।] (ড)

---

अनुत्कृष्टपात्रस्य परिग्रहः शिक्षणीयतया ग्रहणम् अपि बुद्धेः मनीषायाः लाघवं चिप्रतां चातुर्य्यविशेषमित्यर्थः। प्रकाशयति द्योतयति। तथाहि शिक्षको यदि निपुणः तदा तदन्तिके निपुणः अनिपुणः वा शिष्यः पतन् कथञ्चित् तद्गुणांशलाभेन प्रकर्षं शिक्षकगतं प्रतिपादयितुं प्रभवति, तद्दर्शनेनैव च परे शिक्षकस्य असाधारण्यमवगन्तुं चमन्ते, तथाचोक्तं—"यद्दत् वृचसमुन्नतेरनुमितिः पत्रैकमात्रोद्गमात्" इति। अनिपुणस्य च शिक्षकस्य निपुणोऽपि शिष्यः कथमिव प्रकृष्टविषयस्य लेशमपि अवगच्छेत्, अनधिगते विषये स्वतः कस्यापि विशेषेण प्रवृत्तेरदर्शनात्। अतो मा नाम एवं देव्या मन्यतां यथा गणदासस्य शिष्यजनः अनतिकालशिक्षितस्तत् कथमिव सः अस्य उत्कर्षं वेदयितुं प्रभवेदिति भावः।

(ড) इदानीं सर्व्वेषामेव उपदेशदर्शनात् प्रकर्षापकर्षनिर्णये सम्मतौ सत्यामित्यर्थः। कथं केन प्रकारेण मम अनिष्टफलनिर्व्वर्त्तकं उपदेशदर्शनं वारयेयमिति वाक्यशेषः, अन्यथा उपदेशदर्शनावसरे मालविकाया उपस्थाने राजानुरागस्य तव भवितव्यत्वात् इति भावः। अथवा इदानीं कथं कः प्रकारो भवतु इति शेषः अनयोः प्रवर्त्तनीयकर्म्मनिवारणाय कीदृशः प्रकारो मया आश्रयनीय इति भावः। गणदासं विलोक्य इति—गणदासस्य एव स्वीयपरिग्रहत्वात् तस्यैव वारणौचित्यात्। आर्य्यपुत्रस्य मम पत्युः अग्निमित्रस्य, उत्साहकारणं मालविकादर्शनौत्सुक्यसाधकं मनोरथं परिपूर्य्य सफलं कृत्वा अलम्, "अलंखल्वोः प्रतिषेधयोः क्त्वा वा" इति क्त्वाप्रत्ययानन्तरम् तत्स्थाने यप् प्रत्ययः। निरर्थकात् किञ्चिदर्थशून्यात् आरम्भात्

---

রাজা। দেবি! এইরূপ প্রসিদ্ধি আছে, যে—তাদৃশ দুর্মেধকে উপদেশ দিলে তদ্দ্বারা শিক্ষকের বুদ্ধির প্রাখর্য্য হইয়া থাকে। (ঠ)

विदू। सुणुदु भोदी भणादि। भो गणदास! संगीदपदं लम्भिअ सरस्सईए उवाअणमोदआइं खादमाणस्स किं दे मुहणिग्गहेण विवादेण? [सुष्ठु भवती भणति। भो गणदास! संगीतपदं लब्ध्वा सरस्वत्या उपायनमोदकानि खादतः किं ते मुखनिग्रहेण विवादेन?] (ढ)

---

व्यापारात् विरम निवर्त्तस्व, तथाहि युवयोरनेन व्यापारेण वस्तुगत्या न किमपि फलं उत्कर्षादिनिर्णयरूपं सम्भविष्यति, परं ममाभिष्टरूपं राज्ञा मालविकायाः सन्दर्शनादिकमेवेति धारिण्या अभिप्रायः नातिस्फुटः। इतःपूर्व्वं राजाभिप्रायस्य देव्या विज्ञानं न तथा स्पष्टं यथा अत्र, आदावपि ज्ञानमस्तीति ज्ञेयम्॥

(ढ) सङ्गीतपदं नृत्यगीतादिकलाविद्यासु अधिकारं तत्कर्तौ अधिकृतत्वमित्यर्थः। लब्ध्वा प्राप्य देव्या सङ्गीतकाधिकारे नियुक्त इत्यर्थः। सरस्वत्याः वाग्देवतायाः सङ्गीताद्यधिष्ठात्र्या देव्या इत्यर्थः। उपायनमोदकानि उपहारस्वरूपानि खाद्यानि खादतः भक्षयतः ते तव मुखस्य निग्रहेण निग्रहस्वरूपेण विवादेन हरदत्तेन सह कलहाचरणेन किं कीदृशं फलम् अपि तु न किमपीति भावः। तथाहि प्रतिदिनमेव त्वं स्वीये सङ्गीताधिकारे स्थितः सङ्गीतादिना लोकाननुरञ्जयसि, अनुरञ्जिताश्च कति जनाः तुभ्यं मधुरमोदकादिकानि उपायनानि प्रेरयन्ति तैस्तव सुखं सुतरां सुखं अनुभवति, अस्मिन् च आचरणीये विवादे पराजयो यदि ते स्यात् तदा त्वयि ते विरक्ता भूत्वा न पुनः मोदकादीनि प्रेरयिष्यन्ति, ततो मुखस्य तव निग्रह एव भावीति तात्पर्य्यमत्र ज्ञेयम्। अथवा मुखनिग्रहेण मुखस्य क्लेशसम्पादकेन विवादेन विवादे वाचातिशय-प्रयोगेण मुखस्य क्लेशात्। एतच्च देव्या विवादे अनभिमतिमवेक्षमाणो गणदासः प्रकृतात् हरदत्तेन सह विवादात् विरमेत् वा तेन च एतावतः प्रयासस्य कारणं

---

দেবী। (স্বগত) এক্ষণে কি করা উচিত? (গণদাসের দিকে দৃষ্টিপাত করিয়া প্রকাশ্যে) আর্য্যপুত্রের মনোরথ পূরণ করার প্রয়োজন নাই। উহাতে তাঁহার ঔৎসুক্য বর্দ্ধিত ভিন্ন খর্ব্বীভূত হইবে না। অতএব এই বিফল অধ্যবসায় বা চেষ্টা হইতে বিরত হউন। (ড)

गण । सत्यमयमेवार्थो देवीवाक्यस्य । श्रूयतामवसरप्राप्तमिदानीम् । (ण)

लब्धास्पदोऽस्मीति विवादभीरो
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥१७॥

[अन्वयः । लब्धास्पदोऽस्मीति विवादभीरोः परेण निन्दां तितिक्षमाणस्य यस्य केवलजीविकायै आगमः (भवति) तं ज्ञानपण्यं वणिजं वदन्ति । १७ । ]

---

विपर्य्यस्तमेव स्यात् राज्ञः मनोरथस्य लुप्येत इति शङ्कया विदूषकस्य गणदाससमुत्तेजनप्रवर्त्तनम् इति मन्तव्यम् । "नृत्यं गीतं तथा वाद्यं त्रयं सङ्गीतमुच्यते" इति सङ्गीतरत्नाकरः ।

(ण) सत्यं यथार्थं देवीवाक्यस्य महिषीवचनस्य अयमेव विदूषकोक्तः विवादात् विरतिरूप एव अर्थः प्रतिपाद्यः । तथाहि देव्या अपि मम विवादात् निवर्त्तनमेव अभिप्रेतमिति तद्वाक्यादेव गम्यते इति भावः । इदानीं भवतां वाक्यावसाने सतीत्यर्थः । अवसरप्राप्तं अवकाशयोग्यं वस्तु श्रूयताम् वक्ष्यमाणमिति शेषः ।

१७ । अथ श्रव्यमेव वक्ष्यमाणमाह—लब्धेत्यादिना । अस्मि अहं लब्धं प्राप्तम् आस्पदं प्रतिष्ठा येन तथाभूतः अतिसमुन्नत इत्यर्थः । इति हेतोः विवादात् पक्षप्रतिपक्षभाविन एकतरोत्कर्षनिर्णायककलहात् भीरोः पराजयभीत्या पराङ्मुखस्य

---

বিদূ। আপনি ভাল কথাই বলিয়াছেন। ওহে গণদাস! তুমি সঙ্গীতের চর্চ্চাপ্রসঙ্গে প্রতিদিন সরস্বতীর প্রদত্ত উপঢৌকনস্বরূপ মোদক খাইয়া থাক; অনর্থক শুষ্ক বিবাদ করিয়া আপনার সে সুখের হানি করিতেছ কেন? (ঢ)

গণ। দেবী যাহা বলিলেন, তাহা সর্ব্বথা সত্য। আমি এখন অবসরোচিত যাহা বলিতেছি, শুনুন। (ণ)

देवी। अइरोवणीदा दे सिस्सा। अवरिणिट्ठिदस्स उवदेसस्स उण अणज्जं आविदणं। [ अचिरोपनीता ते शिष्या। अपरिनिष्ठितस्योपदेशस्य पुनरनार्थमाविदनम्।] (त)

---

परैष अन्यजनेन निन्दां जुगुप्सां तितिक्षमाणस्य सहमानस्य यस्य जनस्य आगमः शास्त्रज्ञानं केवलजीविकार्थे आजीवनमात्रसाधनाय भवति इति शेषः। तं ज्ञानं शास्त्रविद्यापण्यं विक्रेयं वस्तु यस्य तथाभूतं, ज्ञानविनिमयेन जीविकार्ज्जनकारिणम् इत्यर्थः। वनिजं वानिज्यव्यवसायिनं वदन्ति। तथाहि लब्धप्रतिष्ठस्य विवादादौ उत्कर्षोत्पत्त्या न लोकेषु उत्कर्षलाभाशा तस्य आदावेव प्रतिष्ठाया जातत्वात्, किन्तु तथापि स यदि विवादोपक्रमे तस्मात् पराङ्मुखताम् अवलम्बते तदा परे प्रतिपक्षा-दमुष्य अपकर्षं निर्द्धारयन्तो निन्दन्ति, तस्य सहनं न सर्व्वैः सुकरम् परं शक्तिहीनेन आलस्यादिदोषविशेषशालिना च, अतस्तस्य तत्शास्त्रज्ञानमनर्थकमिवेति अतएव नाहं कथमपि प्रतिपक्षेण हरदत्तेन सह प्रवृत्तात् कलहात् निवर्त्तितुं शक्ये इच्छामि च, निवृत्तौ लोकेषु निन्दाया एव सम्भवादिति भावः।

अत्र ज्ञाने पण्यत्वारोपस्य तथाभूते जने वणिक्त्वारोपे निमित्तत्वात् परम्परितरूपक-मलङ्कारः। तितिक्षमाणस्य इति "तिज् निसाने क्षमायाञ्च" इति तिज्धातोः स्वार्थे सन्प्रत्ययात् सिद्धिः आगमशब्दः शास्त्रवाची प्रकृते लक्षणया शास्त्रज्ञानं वक्ति।

(त) ते तव शिष्या मालविका अचिरं अल्पकालमात्रं उपनीता शिक्षार्थं त्वत्-समीपे अर्पिता, तथाहि एतावता अल्पेन कालेन तस्या एवं ज्ञानपरिणतिः न जाता यथा हरदत्तशिष्यापेक्षया परम् उत्कर्षं प्रयोगे दर्शयेत्, तथा च तन्मूलकः समुत्-कर्षः प्रतीयेत इति भावः। अपरिनिष्ठितस्य परिणतिं अलब्धवतः स्वल्पकालमात्रमन्-

---

আমি সর্ব্বতোভাবে প্রতিষ্ঠাপন্ন হইয়াছি—ইহাই ভাবিয়া যে ব্যক্তি বিবাদে ভয় করিয়া পরকৃত পরিবাদ সহ্য করত, একমাত্র জীবিকার জন্ম শাস্ত্রের অনুশীলন করে, তাহাকে লোকে জ্ঞানবিক্রয়ী বণিক্ বলিয়া থাকে। (১৭)

गण। अत एव मे निर्बन्धः। (थ)

देवी। तेण हि दुवेवि भअवदीए उवदेसं दंसेध। [ तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम्। ] (द)

परि। देवि! नैतन्न्याय्यम्। सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय। (ध)

---

शीलितस्य इत्यर्थः। उपदेशस्य शिक्षाविशेषस्य आवेदनम् सभायाम् परीक्षणीयविषया उपस्थापनम् अनार्थं असाधु। तथाहि मालविकाया शिक्षोपदेशस्य स्वल्पकालमनुशीलनात् अपरिणतप्रज्ञतया तदुपस्थानं पक्षप्रतिपक्षभावस्थले तवैव अनिष्टमुत्पादयिष्यतीति भावः।

(थ) अतएव मम शिष्यायाः मालविकायाः अचिरोपनीतत्वेन शिक्षायास्तस्या अपरिणतत्वेन च इत्यर्थः। मे मम निर्बन्धः आग्रहातिशयः। तथाहि मम अचिरोपनीतायाः शिष्याया एव तथा समुत्कर्षो भावी यथा हरदत्तं जेतुं शक्ष्यामि, अपिच अचिरोपनीताया एव तथा समुत्कर्षदर्शनेन मयि समधिकम् उत्कर्षमेव लोकाः ज्ञास्यन्तीति एतदर्थं ममायं प्रक्रम इति भावः।

(द) तेनः भवतः सुतरां निर्बन्धेन इत्यर्थः। द्वावपि हरदत्तो गणदासश्च। भगवत्या पण्डितकौशिक्याः प्रयोज्यकर्त्र्यां उपदेशं शिक्षां दर्शयताम्। देव्या अगत्या एतत् स्वीकृतम् इति। अभिप्रायस्तु केवलं कौशिकी एव तयोरभिनयशिक्षां शिष्ययोः प्रत्यक्षीकृत्य निर्णयं करोतु नान्यस्य मनस्त्वमिति। एतच्च कौशिकीवचनात् व्यक्तम्।

---

দেবী। আপনার শিষ্যা—অল্পদিন হইল, শিক্ষা করিতেছেন। এজন্য উপদেশ স্থায়ী হইতে পারে নাই। সুতরাং এরূপ অবস্থায় সর্ব্বসমক্ষে তাহার অভিনয়প্রদর্শন কোন অংশেই যুক্তিসঙ্গত নহে। (ত)

গণ। এই কারণেই আমার অতিশয় আগ্রহ। (থ)

দেবী। যখন আপনার এত আগ্রহ তখন আপনারা উভয়েই এই ভগবতী পরিব্রাজিকাকে শিক্ষা প্রদর্শন করুন। (দ)

देवी। (जनान्तिकम्) **मूढ़े ! परिव्वाजिए ! मं जग्गतिं वि सुत्तं विअ करेसि।** ( इति सासूयं परावर्त्तते)। [ मूढ़े परिव्राजिके ! मां जाग्रतीमपि सुप्तामिव करोषि। ] **(न)**

---

(ध) एतत् केवलं मया एव एकया प्रकर्षापकर्षनिर्द्धारणमित्यर्थः। न न्याय्यम् न उचितम्। तत्रैव हेतुमाह—सर्व्वज्ञस्यापि निःशेषेण सकलविषयविज्ञातुरपि जनस्य का कथा मादृश्याः स्त्रिया इति भावः। एकाकिनः एकमात्रस्य असहायस्य जनस्य इत्यर्थः। निर्णयाभ्युपगमः उत्कर्षापकर्षनिश्चयस्वीकारः, दोषाय भवतीति शेषः। अतएव यद् भवती केवलं मया एव श्रुत्वा निर्णयः कर्त्तव्य इति निर्द्धारितं तदहं न स्वीकर्त्तुमर्हामीति भावः। तथाच माघे—"ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्य्यवस्तुनि" इति। एतेन यत् पण्डितकौशिकी अपि मालविकया सह राज्ञः समागमे सुतरामाग्रहान्विता इति व्यज्यते।

(न) "विपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत् स्यात् तज्जनान्ते जनान्तिकम्" इति। मूढ़े सूक्ष्मतत्त्वानभिज्ञे, यथा मालविका राज्ञो दर्शनपथं न गच्छेत् तथा तथा मया यत्नः क्रियते, त्वन्तु मम हिताकाङ्क्षिणी अपि तद्विपरीताचरणेन ममानिष्टमेवानुकूलयसि इति मूढ़े इति सम्बोधनम्। जाग्रतीं सज्ञानां मालविकादर्शनं राज्ञः प्रतिबन्धुं सर्व्वथा सयत्नाम् अपि मां सुप्तामिव बाह्यज्ञानशून्यामिव करोषि। तथाहि अहं सर्व्वथा ममानिष्टफलकं राज्ञः मालविकादर्शनं प्रतिरुद्धं करोमि, त्वन्तु मन्यसे यदहं प्रकृतं विषयं नाधिगच्छामीव। अहो मूढ़ता आश्चर्य्या इति भावः। सासूयं असूयासहकारेण परावर्त्तते पराङ्मुखताम् अवलम्बते।

---

পরি। ইহা কোন রূপেই ন্যায়সঙ্গত নহে। সর্ব্বজ্ঞ হইলেও, একাকী এরূপ বিষয়সকলের নির্ণয় করিতে যাওয়া দোষের বিষয়। (ধ)

দেবী। (জনান্তিকে)। অয়ি মূঢ়ে পরিব্রাজিকে! আমি জাগিয়া আছি, তথাপি আমাকে নিদ্রিতার ন্যায় করিতেছ! ( এই বলিয়া অসূয়াসহকারে মুখ ফিরাইলেন )। (ন)

[ राजा देवीं परिव्राजिकायै दर्शयति ]। (प)

परि। अनिमित्तमिन्दुवदने ! किमत्रभवतः पराङ्मुखीभवसि।
प्रभवन्त्योऽपि हि भर्त्तृषु कारणकोपाः कुटुम्बिन्यः ॥१८॥

[अन्वयः। इन्दुवदने, किम् अनिमित्तम् अत्रभवतः पराङ्मुखीभवसि, भर्त्तृषु प्रभवन्त्योऽपि हि कुटुम्बिन्यः कारणकोपाः (भवन्ति)।१८। ]

---

(प) देवीं महिषीं, परिव्राजिकायै पण्डितकौशिक्यै दर्शयति, क्रियायोगे चतुर्थी। अङ्गुलीसङ्केतेन इति शेषः। एतच्च देव्या भावान्तरदर्शनेन आत्मनो विषयस्य तया सम्यगवधारणसूचनाय इति।

१८। अथ कौशिकी देव्या राजानं प्रति कोपं निवारयितुं वक्ति—अनिमित्तेत्यादिना। अयि इन्दुवदने, चन्द्रमुखि ! त्वं अनिमित्तं अकारणं किं किमर्थं अत्रभवतः माननीयस्य भूपतेः पराङ्मुखीभवसि, अपितु अनिमित्तं तव राज्ञे कोपोऽयं न युज्यते इति भावः हि यतः भर्त्तृषु स्वामिषु विषयेषु प्रभवन्त्यः प्रभुत्वशालिन्यः अपि अधिकारवत्योऽपीत्यर्थः। कुटुम्बिन्यः दाराः कारणकोपाः किञ्चित् निमित्तमुद्दिश्य कोपवत्यः भवन्ति, नतु अकारणं कोपवत्य इति भावः। अतएव तव अकारणकोपः सुतरां अन्याय्य एव प्रतिभातीति भावः। अत्र प्रथमपादोक्तपदार्थप्रतिपाद्येन राज्ञ्याः अनिमित्तकोपेन अधिकारवतीनां कुटुम्बिनीनां कारणजन्यकोपस्य वैधर्म्म्यप्रत्ययात् उत्तरार्द्धस्य च सामान्यस्य पूर्व्वपादार्थसमर्थकविधया उपन्यासात् वैधर्म्म्येण सामान्यविशेषभावेनार्थान्तरन्यासालङ्कारः। उक्तात् कारणकोपात् अकारणकोपस्य अर्थतः प्रतीतस्य प्रत्ययात् आर्थी परिसंख्यापीति सङ्करः। प्रभवन्त्योऽपीत्यपिशब्देन प्रभुत्वयुक्तानां फलत एव कारणकोपत्वप्रत्ययात् अर्थापत्तिः। अनिमित्तमित्यनेन कारणं विना कार्य्यस्य पराङ्मुखत्वस्य वर्णनात् विभावनापीति अलङ्काररसिकाः। इन्दुवदन इत्यत्र उपमा।

---

( রাজা দেবীর ঐরূপ ভাবভঙ্গি পরিব্রাজিকাকে দেখাইতে লাগিলেন )। (প)

विदू। णं सक्कारणं एव्व। अत्तणो पक्खो रक्खिदव्वो। (फ)

(गणदासं विलोक्य)। णं दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवं। सुसिक्खिदोवि सव्वो उवदेसदंसणेण णिसादो होदि।

[ ननु सकारणमेव। आत्मनः पक्षो रक्षितव्यः। ननु दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्व्व उपदेशदर्शनेन निष्णातो भवति। ] (ब)

गण। देवि! श्रूयताम्। एवं जनो गृह्णाति। तदिदानीम्। (भ)

---

(फ) ननु सकारणं सनिमित्तमेव इयं देवी पराङ्मुखीभवतीति शेषः। ननु अकारणमिति भावः। कीदृशं तत् कारणमित्याह—आत्मन इत्यादिना। आत्मनः स्वस्य पक्षः रक्षितव्यः अपमानात् अपसारयितव्यः। तथाहि यथा कथञ्चित् कोपादिप्रदर्शनेन उभयोराचार्य्ययोर्व्विवाद उपशमयितव्यः अन्यथा आत्मना गृहीतो गणदासो यदि विवादे अपकर्षं गच्छेत् तदा आत्मपक्षः हीनः स्यादिति। एतच्च परत एव व्यक्तम् भविष्यति।

(ब) दिष्ट्या भाग्यवशात्। कोपव्याजेन राज्ञे क्रोधव्यपदेशेन परित्रातः रक्षितः, अन्यथा विवादे तव पराभव एव वा स्यादिति भावः। सुशिक्षितः शिक्षाविषये प्राप्तभूयःप्रकर्षः अपि सर्व्वः उपदेशदर्शनेन शिक्षापरीक्षणेन निष्णातः कौशलवत्तया परिचितः भवति, तथाहि यदि त्वं हरदत्तश्च शिक्षां प्रदर्शयितुं शक्नोषि तदा त्वं हरदत्तो वा प्रकर्षं लभेथाः, अन्यथा कथमिव तव नैपुण्यमस्य वा स्वीकुर्य्याम इति भावः। उक्तिरियं समुत्तेजिका। अत्र देवीकोपरूपवस्तुना वस्तुनो विच्छेदे प्राप्ते विदूषकानुष्ठितं आचार्य्यप्रोत्साहनं परीक्षानुकूलतया अविच्छेदकारणत्वात् विन्दुरिति।

---

পরি। অয়ি চন্দ্রমুখি! কি জন্য অকারণে রাজার প্রতি বিমুখতা প্রদর্শন করিতেছ? কুলবতী রমণীরা স্বামীর উপর প্রভুত্বশালিনী হইলেও, সকারণই কোপ প্রকাশ করিয়া থাকে। ১৮

বিদূ। ইহাও সকারণই বটে। আত্মপক্ষ রক্ষা করা বিধের। (ফ)

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥१९॥

[ अन्वयः । (अहं) विवादे आत्मनः क्रियासंक्रान्तिं दर्शयिष्यामि, यदि मां न अनुजानासि, (तदा) अहं त्वया परित्यक्तः अस्मि ।

( आसनादुत्थातुमिच्छति ) ।

---

(भ) श्रूयतां वक्ष्यमाणमिति शेषः । एवं उक्तरूपं उपदेशदर्शने प्रकर्षप्रत्ययेन प्रकर्षः नत्वन्यथा इत्येवं जनः साधारण एव गृह्णाति जानाति, तत् तस्मात् इदानीं अधुना—अस्यांशस्य पदार्थसंसर्गेण अन्वयशेषः कर्त्तव्यः ।

१९। तदिदानीमित्यतः आकाङ्क्षाविषयमपरमाह—विवाद इत्यादिना । विवादे हरदत्तेन सह प्रवृत्ते मम अस्मिन् कलहे, आत्मनः स्वस्य क्रियासंक्रान्तिं शिष्यजने विद्याया संक्रमणं दर्शयिष्यामि प्रत्याययिष्यामि, तथाहि यतः उपदेशदर्शनेनैव लोकाः प्रावीण्यं स्वीकुर्य्युः अतएव अहं उपदेशदर्शनमवश्यमेव कारयिष्यामि इति जानीहि इति भावः । यदि अत्र मां न अनुजानासि अनुमन्यसे, यदि मम उपदेशदर्शनं प्रतिबध्नीया इत्यर्थः । तदा अहं त्वया परित्यक्तः वर्ज्जितः अस्मि, तथाहि यदि मां सन्तमिच्छसि तदा मा तावत् मम प्रतिबन्धं कुर्य्या इति भावः ।

---

(গণদাসের প্রতি দৃষ্টিপাত করিয়া)। দেবীর এই কোপব্যপদেশে তুমি নিশ্চয়ই বাঁচিয়া গেলে। সুশিক্ষিত হইলেও, উপদেশদর্শন দ্বারা ব্যক্তি-মাত্রেরই গুণাগুণ নির্ণীত হইয়া থাকে। ( ব )

গণ। দেবি ! শ্রবণ করুন—লোকে এইরূপে আত্মপক্ষ রক্ষা করে। (ভ)

অতএব এক্ষণে আমি এই উপস্থিত বিবাদক্ষেত্রে শিষ্য দ্বারা নিজের গুণ ব্যক্ত করিব। যদি এ বিষয়ে আমাকে অনুমতি না করেন, তাহা হইলে জানিব,—আপনি আমাকে ত্যাগ করিলেন। ১৯

( আসন হইতে উঠিবার ইচ্ছা করিলেন। )

देवी। (स्वगतं।) का गई ? (प्रकाशम्।) पहवदि आआरिओ सिस्सजणस्स। [का गतिः ? प्रभवत्याचार्य्यकः शिष्यजनस्य।] (म)

गण। चिरमपदेशशङ्कितोऽस्मि। (राजानमवलोक्य।) अनुज्ञातं देव्या, तदाज्ञापयतु देवः। कस्मिन्नभिनयवस्तुन्युपदेशं दर्शयिष्यामि ? (य)

---

अत्र मदनुज्ञानाभावस्त्वया मत्परित्यागसदृश इति क्रियाद्वयस्य विम्बप्रतिविम्बभाव-प्रत्ययात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना। मदनुज्ञानाभावे अहं त्वां परित्यज्य अन्यत्र प्रस्थास्ये इति वस्तुनः प्रत्ययात् वस्तुध्वनिः। अनुजानासीति कर्त्तृप्रत्ययप्रक्रमेण परित्यक्त इति कर्म्मणि प्रत्ययेन पर्य्यवसानात् प्रक्रमभङ्गो दोषः, स च "परित्यजसि मां तदा" इति दिशा समाधेयः।

(म) का गतिः क उपायः, अगत्या एतदनुरोधेनैव स्वानिष्टफलकमपि वस्तु स्वीकरोमीति भावः। एतच्च अप्रकाशमाहेत्यत्र हेतुः यथा साधारणानां देवीमनसि स्थितं मालविकाया अनुपस्थितिप्रयोजनं नोपस्थितं स्यादिति। आचार्य्यः शिक्षकः शिष्यजनस्य शिष्यजनाय इति चतुर्थ्यर्थे षष्ठी, सा च सम्बन्धविवक्षया। प्रभवति, तथाहि शिष्यायां मालविकाया उपरि भवत एव आधिपत्यात् तामुपस्थाप्य शिक्षादर्शन-तद्दर्शनयोः यथा विनियोगं स्वेच्छया एव कर्त्तुमर्हसीति गणदासं प्रत्युक्तिः।

(य) चिरं बहुकालं यावत् अपदेशे प्रकृतात् प्रारब्धव्यविषयात् निषेधः तस्मात् शङ्कितः शङ्कायुक्तः अस्मि। तथाहि देवी मां प्रयोगप्रदर्शनात् निवर्त्तयेत् वा इति महती मे शङ्का आसीत् सा च इदानीं नास्ति देवीवाक्यस्य तद्विपरीतार्थकत्वात्। देव्या राज्ञ्या अनुज्ञातं अनुमतं प्रयोगदर्शनं मे इति शेषः। देवः महाराजः आज्ञापयतु, राज्ञः राजन्याय आदेशम् आधाय कर्म्मणि प्रवर्त्तितव्यम् तत्प्राप्तदेवीसमादेशस्य राजा आज्ञां ददातु यथा प्रवर्त्ते कर्म्मणि इति भावः। कस्मिन् किंस्वरूपे किंनामधेये वा अभिनय-

---

দেবী। এ বিষয়ে আর উপায় কি ? শিষ্যের উপর আচার্য্যের সর্ব্বতোমুখী প্রভুতা আছে। (ম)

রাজা। যদাদিশতি ভগবতী। (র)

পরি। কিমপি দেব্যামনসি বর্ত্ততে, ততঃ শঙ্কিতাস্মি। (ল)

দেবী। ভঅ বীসদ্ধম্। পভবিস্সদি পভূ অত্তণো পরিজণস্স।
[ভগ বিশ্রব্ধং, প্রভবিষ্যতি প্রভুরাত্মনঃ পরিজনস্য।] (ব)

---

বস্তুনি অভিনেয়ে পদার্থে, উপদেশং শিক্ষাং দর্শয়িষ্যামি প্রত্যক্ষং কারয়িত্বা নৈপুণ্যং প্রত্যায়য়েয়মিতি কথয়েতি শেষঃ। কেচিত্তু আজ্ঞাপয়তু ইত্যংশেন অস্যাংশস্য অন্বয়ং স্বীকুর্ব্বতে। তথাত্বে ন পূর্ব্বাংশস্য অস্মাভির্ব্বিবৃতো ভাবঃ সামঞ্জস্যং ভজতে, তত্তদপি অন্যথা কার্য্যম্।

(র) ভগবতী পণ্ডিতপরিব্রাজিকা যৎ বস্তু অভিনয়যোগ্যং আদিশতি অভিনেতুমিতি শেষঃ, তত্রৈব উপদেশং দর্শয়তু ইতি শেষঃ। অত্রাপি কৌশিক্যা এব মুখরতায়াং ব্যবস্থাপনং দেব্যা আত্মনি কস্যচিৎ ভাববিশেষস্য আরোপপ্রতিঘাতার্থং বিচারিকায়াঃ তস্যাঃ অধিকারস্য অক্ষুণ্ণতাপ্রতিপাদনার্থঞ্চ।

(ল) দেব্যাঃ মহিষ্যাঃ মনসি কিমপি দোষময়ং বস্তু বর্ত্ততে, তথাহি দেবী মন্যতে যৎ বয়ং সর্ব্বে একমতা ভূত্বা যথা মালবিকা রাজ্ঞো দর্শনপথং গচ্ছেৎ রাজা চ তত্র অনুরক্তঃ দেব্যাং বীতশ্রদ্ধো ভবেদিতি প্রয়োগমিমং কুর্ম্ম ইতি গূঢ়ার্থঃ। ততঃ তস্মাদেব কারণাৎ শঙ্কিতা বিচারবিষয়ে বিচারমাশ্রিত্য অত্র মালবিকায়া উপস্থাপনানুমতৌ চ শঙ্কিতা জাতশঙ্কা অস্মি।

---

গণ। বহুদিন পর্য্যন্ত শিষ্যশিক্ষাপ্রদর্শনে আমি নিবারিত হইব,—এই যে শঙ্কা ছিল, তাহা রাজ্ঞীর এই বাক্যে নিরাকৃত হইল। (রাজার প্রতি দৃষ্টিপাত করিয়া) দেবী অনুমোদন করিয়াছেন। এক্ষণে মহারাজ আজ্ঞা প্রদান করুন। কোন্ অভিনয়-বস্তু অবলম্বন করিয়া উপদেশ দর্শন করাইব? (য)

রাজা। ভগবতী যাহা আজ্ঞা করিবেন। (র)

পরি। দেবীর মনে যেন কিছু রহিয়াছে। তজ্জন্য আমার শঙ্কা হইতেছে। (ল)

राजा। मम चेति ब्रूहि। (श)

देवी। भअवदि! भण दाणिं। [भगवति! भणेदानीम्।] (ष)

परि। देव! शर्म्मिष्ठायाः कृतिं चतुष्पादोत्थं छलिकं दुष्प्रयोज्यमुदाहरन्ति, तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः। तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम्। (स)

---

(व) विस्रब्धं विश्रम्भसहकारेण निःशङ्कमित्यर्थः। भण कथय, कर्त्तव्यमनयोरुपदिश इत्यर्थः। प्रभुः स्वामी आत्मनः स्वस्य परिजनस्य परिवारस्य प्रभवति, प्रभुः परिजन-सम्बन्धे यथा तथा व्यवहर्त्तुं पारयति, अतएव अत्र के वयमिति भावः। अथवा प्रभुः सम्प्रति आधिपत्यवती भवती आत्मनः परिजनस्य प्रेष्यभूतस्य गणदासस्य हरदत्तस्य च, तदादेशेनैव तयोरिदानीं कर्त्तव्यार्थे प्रवर्त्तिष्यमानत्वात् इति भावः। प्रभवति, त्वं यथा इच्छसि तथैव गणदासं हरदत्तञ्च आज्ञापय, तत्र अस्माकं नास्ति अन्यथा मननमिति भावः।

(श) मम च देवीवागपेक्षया अस्मच्छब्दप्रयोगः। यथा परिजनसामान्यस्य तथा देव्या अपीत्यर्थः। इयं भगवती प्रभवति, तथाहि तवात्र सम्यगभिप्रायस्य असत्त्वेऽपि भगवत्या अभिप्रायरक्षणाय एव त्वया अत्र स्वीकारः कर्त्तव्य इति गूढ़ाभिप्रायः। आपातप्रतीतार्थस्तु तवापि अद्य कौशिक्याः परिजनवत् व्यवहारौचित्यात् कौशिक्या निःशङ्कं अभिप्रायः प्रकाश्यतामिति।

(ष) इदानीं भण कथय वक्तव्यमिति शेषः, अलमस्मत्तो विशेषशङ्कादिभिः, निःशङ्कमेव अभिप्रेतं प्रकाशयेथा इति भावः।

(स) अथ अभिनेयं वस्तु निर्द्दिशति—शर्म्मिष्ठया इत्यादिना। शर्म्मिष्ठायाः ययातिपत्न्याः

---

দেবী। আপনি নিঃশঙ্কে বলুন। আত্মপরিজনের উপর প্রভুর অবশ্য প্রভুত্ব আছে। (ব)

রাজা। আমারও প্রভুত্ব আছে, বল। (শ)

দেবী। ভগবতি! এক্ষণে বলুন, কি উপদেশ দেখাইতে হইবে? (ষ)

आचार्यौ। यदाज्ञापयति भगवती। (छ)

विदू। तेण हि दुवेवि वग्गापेक्खाघरे संगीदरअणं करिअ तत्तभवतो दूदं पेसध। अहवा मुदङ्गसद्दो एव्व णो उत्थावइस्सदि। [तेन हि द्वावपि वर्गाप्रेक्षागृहे सङ्गीतरचनां कृत्वा तत्रभवतो दूतं प्रेषयतम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति।] (ज)

---

तदाख्याया: कृतिं रचनां "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति नियमेन तया कृतं रचितमित्यर्थः। चतुर्णां पदानां उत्था उत्थानं यस्मात् तथाभूतं चतुष्पादोत्थं चतुष्पदीगीतादियुक्तमित्यर्थः, यद्वा चतुर्भ्यः पादेभ्यः उत्तिष्ठति यत् तदित्युत्तरपदद्विगुः, छलिकं तदाख्यं रूपकं दुष्प्रयोज्यं दुःखेन प्रयोगार्हं दुष्कराभिनयमित्यर्थः। उदाहरन्ति कथयन्ति पण्डिता इति शेषः। तत्र तस्मिन् अभिनेयवस्तुनि एकार्थसंश्रयं एकविषयालम्बनं उभयोः गणदासहरदत्तयोः प्रयोगं अभिनयोपदेशं पश्याम:। अन्यथा भिन्नविषयालम्बने उभयोरुत्कर्षापकर्षौ न विचारयितुं शक्यते, यतः एकस्मिन् एकस्य अपरत्र च अन्यस्य उत्कर्षौ प्रायेण सुलभौ, अपकृष्टस्यापि विषयविशेषे उत्कर्षस्य सम्भवात्। तावता एकार्थमाश्रित्य उभयोः प्रयोगदर्शनेन अत्रभवतो माननीययोः आचार्ययोः उपदेशयोः शिक्षयोः अन्तरं प्रभेदं ज्ञायते अचिरमेव ज्ञास्यते इत्यर्थः। अत्र भविष्यत्सामीप्ये वर्त्तमाना। तथाहि एतौ उभावेव स्वशिष्ययोः एकं विषयमधिकृत्य उपदेशविशेषं दर्शयता, तेनैव प्रकर्षनिर्णयो भविष्यत्यन्यतरस्येति भावः। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्यमरः। पश्याम इत्यत्रापि भविष्यत्सामीप्ये वर्त्तमाना। केचित्तु निर्व्विसर्गं पठित्वा प्रार्थनायां लोट्प्रत्ययं ब्रुवते।

(छ) यत आज्ञापयति आदिशति तदेव आश्रित्य उपदेशौ आवां दर्शयितारौ इति भावः।

---

परि। মহারাজ! শর্ম্মিষ্ঠারচিত চতুষ্পদীযুক্ত ছলিকনামক নাটকের অভিনয় প্রদর্শন করা দুঃসাধ্য বলিয়া বিখ্যাত আছে। হরদত্ত ও গণদাস—এই উভয় কর্ত্তৃকই সেই নাটকের অভিনয় দর্শন করিব। তাহা হইলেই ইহাঁদের মধ্যে উপদেশের পার্থক্য জানিতে পারা যাইবে। (স)

हर। तथा। (इत्युत्तिष्ठति।) (क)

[गणदासो धारिणीमवलोकयति।] (ख)

देवी। (गणदासं विलोक्य।) विअई होहि। [विजयी भव]। (ग)

---

(च) तेन भगवत्या आज्ञानुरूपं करणे प्रवृत्तेन इत्यर्थः। वर्णानां क्रमविवेश-सौन्दर्य्यसम्पादनाय गृह्णीयानां वर्णरागाणां अपेक्षा अपेक्षणं उद्देशः इति यावत्। तस्याः गृहं नेपथ्यस्थानमित्यर्थः तस्मिन्, सङ्गीतरचनां गीतवाद्यादीनां प्रवर्त्तनं कृत्वा, तदायोजनं प्रयोज्य इत्यर्थः। तवभवतः राज्ञः समीपे दूतं तत्संवादनिवेदकं कञ्चित् पुरुषं प्रेषयतम्। यथा राजा वयस्य कालोपयोगिनीं सावधानताम् अवलम्बेमहि, अन्यथा अनवधाने प्रयोगवैफल्यात् इति भावः। अथवा दूतप्रेषणाभावेऽपि मृदङ्गस्य आदौ वादनीयस्य तौर्य्यविकाङ्गभूतस्य मृदङ्गवाद्यस्य शब्द एव न अस्मान् उत्थापयिष्यति रङ्गस्थानसमाश्रयणाय प्रवर्त्तयिष्यति।

(क) कथनमात्रेणैव आत्मनः परिग्राहके राजनि दृष्टिमप्यनिपात्य प्रकृतकार्य्याय-मुद्यमेन हरदत्तस्य प्रकर्षगर्व्वो व्यज्यते।

(ख) गणदासस्य स्वपरिग्राहिकां धारिणीं प्रति दृष्टिपातेन सुतरां गुणिजनोचितः नम्रता व्यक्ता, सा च दृष्टिरेवमर्थवादिनी यत् "देवि, गच्छामि प्रतिपक्ष-जयाय, तदाशिषं मे विसर्ज्जय" इति।

(ग) विजयी हरदत्तापेक्षया प्रकर्षवान् भव, अयमेव गणदासेन देवीमवलोक्य

---

উভয় আচার্য্য। ভগবতী যেরূপ আজ্ঞা করেন, তাহাই হইবে। (হ)

বিদূ। অতএব উভয় পক্ষই এক্ষণে নেপথ্যগৃহে গমন করিয়া, সঙ্গীত রচনা-পূর্ব্বক, মহারাজের নিকটে দূত প্রেরণ করুন। অথবা, মৃদঙ্গশব্দই আমাদিগকে যাইবার জন্য উদ্‌বোধিত করিবে। (ক্ষ)

হরদত্ত। আচ্ছা। (এই বলিয়া উত্থান)। (ক)

(গণদাস ধারিণীকে অবলোকন করিতে লাগিলেন।) (খ)

[आचार्य्यौ प्रस्थितौ ।] (घ)

परि । इतस्तावत् । (ङ)

आचार्य्यौ । (परिवृत्य) । इमौ स्वः । (च)

परि । निर्णयाधिकारे ब्रवीमि—सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु । (छ)

---

इष्या प्रार्थित आशार्व्वादः गमनकाले गणदासं प्रति एतदाशीर्व्वाद एव हरदत्ता-दगृहीताशीर्व्वादात् प्रकृष्टत्वं भवितव्यं विनिवेदयति, जातञ्च परतस्तथा तथा ।

(घ) आचार्य्यौ हरदत्तगणदासौ अभिनयशिक्षकौ, प्रस्थितौ रङ्गशोजनाय रङ्गात् निष्क्रामितुमारब्धवन्तौ ।

(ङ) इतः अस्मिन् मम समीपे आगम्यतां युवाभ्यामिति शेषः ।

(च) परिवृत्य प्रतिनिवृत्य । इमौ आवां एतौ स्वः आगताविति शेषः ।

(छ) निर्णयाधिकारे भवतोरुत्कर्षापकर्षनिश्चयाधिकारे ब्रवीमि अहं वक्ष्यमाणमिति शेषः । सर्व्वेषां सर्व्वविधानां अङ्गानां नृत्यगीतादिरूपाङ्गवस्तूनां शरीरसंस्थानानाञ्च इति गम्यते, सौष्ठवस्य सौन्दर्य्यस्य अभिव्यक्तये प्रकाशाय विगतनेपथ्ययोः वेशविन्यास-रहितयोः पात्रयोः भूमिकाधारिणोः शिष्यजनयोः प्रवेशः अस्तु, तथाहि नानाविधवेशैः यदि पात्राणामङ्गानि समाच्छादितानि स्युः, तदा नृत्याद्यवसरे सर्व्वेषामङ्गानां परिस्फुट-भावेन प्रतिभानं न स्यात् । प्रकृते तु मालविकायाः स्वाभाविकसौन्दर्य्यसंलक्षणाय काम-जननहेतुभूतपयोधरशोभादीनामप्रतिरुद्धदर्शनतः सहसा एव मालविकां प्रति राज्ञो मदनावेशसमुत्पादनार्थमेवं निर्द्देशः परिव्राजिकाया इति मन्तव्यम् ।

---

দেবী । ( গণদাসের প্রতি দৃষ্টিপাত করিয়া ) আর্য্য ! আপনি জয়ী হউন । ( গ )

[ উভয় আচার্য্যের প্রস্থান । ( ঘ ) ]

পরি । এদিকে । ( ঙ )

উভয় আচার্য্য । ( প্রতিনিবৃত্য হইয়া ) এই আমরা । ( চ )

পরি । আমি উভয়ের তারতম্যনির্দ্ধারণে নিযুক্ত হইয়াছি । এইজন্য

উভৌ। **নৈদমাবয়োরুপদেশ্যম্।** [ইতি নিষ্ক্রান্তৌ।] (জ)

দেবী। [রাজানমবলোক্য।] **জই রাঅকজ্জেসু বি ঈদিসী ণিউণদা অজ্জউত্তস্স, তদো সোহণং ভোদি।** [যদি রাজকার্য্যেষু অপি ঈদৃশী নিপুণতা আর্য্যপুত্রস্য, ততঃ শোভনং ভবতি।] (ঝ)

---

(জ) ইদং পাত্রস্য বিগতনেপথ্যস্য প্রবেশনং তদভাবে চ সম্যগঙ্গসৌষ্ঠবাদ্যমভিব্যক্তেরিত্যর্থঃ। আবয়োঃ উপদেশদর্শনপ্রবৃত্তয়োঃ হরদত্তগণদাসয়োঃ ন উপদেশ্যং উপদেশযোগ্যম্। তথাহি এতদুপদেশব্যতিরেকেণাপি অস্মাভিরনুসন্ধীয়তে অতঃ অলমেতদাদেশ্য ইতি ভাবঃ। যথাকথিতমেব প্রবর্ত্তিতং ভবিষ্যতীতি তাৎপর্য্যম্।

(ঝ) অথ দেবী মালবিকায়াঃ পূর্ব্বতয়ৈব দৃষ্টায়াঃ সাক্ষাৎকারার্থং রাজ্ঞা এব নিপুণতরমিদং প্রস্তুতমিত্যাশয়েনাহ—যদীত্যাদি। যদি রাজকার্য্যেষু রাজ্ঞঃ কর্ত্তব্যেষু প্রজাবস্থাপর্য্যবেক্ষণাদিষু অপি যথা প্রকৃতব্যাপারে ইতি ভাবঃ। ঈদৃশী এতত্তুল্যা নিপুণতা চাতুর্য্যং আর্য্যপুত্রস্য স্যাৎ, তদা শোভনং উৎকৃষ্টং ভবতি স্যাদিতি সপ্তম্যর্থে বর্ত্তমানা। এতচ্চ রাজানং প্রতি সোল্লুন্ঠনোক্তির্দেব্যাঃ। তথাহি রাজকার্য্যাদিষু সম্যগাস্থাং পরিত্যজ্য যদ্ভবান্ এবং নিকৃষ্টে নারীজনে সমাসক্তঃ কুটিলনীতিং তৎসমাগমায় সমালম্বসে তদতিমাত্রমন্যায্যমেব প্রতিভাতি ভবতো রাজপ্রবরস্য, তদ্বিরম্যতামস্মাৎ দুর্ব্যবসিতাদিতি রাজনিষেধো ব্যজ্যতে।

---

বলিতেছি,—অভিনয়ে সমুদায় অঙ্গের সৌন্দর্য্য বিশেষরূপে প্রকটনার্থ পাত্রদ্বয়কে বেশভূষা পরিত্যাগ করিয়া প্রবেশ করিতে হইবে। (ছ)

উভয়ে। আমাদিগকে এ কথা বলিতে হইবে না। (এই বলিয়া উভয়ের নিষ্ক্রমণ)। (জ)

দেবী। (রাজাকে অবলোকন করিয়া) আর্য্যপুত্রের যদি রাজকার্য্যে এই প্রকার নিপুণতা থাকিত, তাহা হইলে সুখের বিষয় হইত। (ঝ)

राजा। अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदं।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥२०॥

[ अन्वयः। हे मनस्विनि ! अन्यथा गृहीत्वा अलम्, मया इदं न खलु प्रयुक्तम्। समानविद्याः प्रायः परस्परयशःपुरोभागाः ( भवन्ति )। २०। ]

---

२०। अथ राजा स्वं प्रति देव्या अन्यथामननं निराकर्त्तुं प्राह—अलमित्यादि। अयि मनस्विनि ! प्रशस्तहृदये ! अन्यथा दोषयुक्ततया गृहीत्वा एतद्भावं विज्ञाय अलं, तथाहि यत्त्वं मयि मालविकामधिकृत्य अन्यथा शङ्कां कुरुषे तत् न कथमपि उचितमिव प्रतिभाति इति भावः। तत्रैव हेतुमाह—खलु निश्चितं इदं प्रस्तुतं हरदत्तगणदासयोः कलहप्रवर्त्तनादिकं वस्तु मया न प्रयुक्तं प्ररोचितं, तथाहि यदि अहमत्र तत्रानभिमते कर्म्मणि प्रवृत्तो भवेयं तदैव मयि दोषमारोपयितुं शक्नुयाः, तदेव नास्तीति विरम्यतां मयि शङ्काकरणादिति भावः। ननु यदि त्वया एव इदं न प्रयुक्तं तदा किमयमस्थाने आचार्य्ययोरयं महान् विद्याविवादः समुपस्थित इत्याकाङ्क्षायामाह—प्राय इत्यादि। प्रायः वाहुल्येन समाना तुल्या अन्यूनानतिरिक्तेति यावत् विद्या शास्त्रज्ञानं येषां, तथाभूताः शास्त्रज्ञानविषये समसम्पद इत्यर्थः। परस्परस्य अन्योन्यस्य यशसि उत्कर्षविषये पुरोभागः दोषैकदर्शनं येषां तथाभूताः, विद्यया सुसदृशानां जनानां एके अन्येषां प्रशंसामात्मविकत्थनादिकं वा तदुत्कर्षप्रकाशकं वस्तु न क्षमन्ते ; अतएव तेषु परस्परं प्रायेण विद्याविवादाः प्रादुर्भवन्ति, एतन्निमित्तमेव हरदत्तगणदासयोः समानविद्ययोः परस्परविकत्थनमसहमानयोरयं महान् विद्याविवादः प्रादुर्भूतः, नास्ति कस्याप्यपरस्य तत्प्रयोजकत्वमिति भावः। "प्रायो भूम्नी"त्यमरः। "दोषदृष्टिः पुरोभाग"इति च त्रिकाण्डशेषः। अत्र सामान्याद्प्रस्तुतात् समानविद्यानां परस्परयशःपुरोभागत्वरूपात् विशेषस्य प्रस्तुतस्य हरदत्तगणदासयोः विवादस्य प्रतीत्या अप्रस्तुतप्रशंसालङ्कारः। आर्य्या जातिः।

---

রাজা। মনস্বিনি ! তুমি অন্যরূপ ভাবিও না। আমি কখনও এ বিষয়ের প্রয়োজক নই। যাহারা পরস্পর সমানবিদ্যাবিশিষ্ট, তাহারা পরস্পরের কীর্ত্তিতে দোষই দর্শন করিয়া থাকেন ॥২০॥

[नेपथ्ये मृदङ्गध्वनिः। सर्वे कर्णं ददति।] (ञ)

परि। हन्त! प्रवृत्तं सङ्गीतम्। तथा ह्येषा।—(ट)

जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुरसितस्य पुष्करस्य।
निह्लादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि॥ २१॥

[अन्वयः। जीमूतस्तनितविशङ्किभिः उद्ग्रीवैः मयूरैः अनुरसितस्य पुष्करस्य निह्लादिनी उपहितमध्यमस्वरोत्था मायूरी मार्जना मनांसि मदयति। २१।]

---

(ञ) नेपथ्ये वेशरचनास्थाने, मृदङ्गध्वनिः मृदङ्गवाद्यम्। सर्व्वे राजपरिव्राजिका-प्रभृतयः पात्रविशेषाः। कर्णं ददति श्रोत्रेन्द्रियं सङ्क्रमयन्ति मृदङ्गध्वनिदिशि इति शेषः।

(ट) सङ्गीतं सङ्गीतककर्म्म, प्रवृत्तं प्रारब्धं, तथाहि एषा श्रूयमाणा इति श्लोकस्थ-मार्ज्जनाविशेषणम्।

२१। अथ एषा इत्यनेन सूचितायाः तदाकाङ्क्षितायाः मार्ज्जनायाः मनोमादकत्व-माह—जीमूतेत्यादिना। जीमूतस्य मेघस्य स्तनितं गर्ज्जितं तद्विशङ्किभिः तद्वितर्क-कारिभिः मयूरैः शिखिभिः उद्गताः ऊर्द्ध्वमाक्रान्ताः ग्रीवाः कण्ठभागो येषां तथाभूतैः, औत्सुक्यात् उद्गमितकण्ठदेशैरित्यर्थः। मद्भिः अनुरसितस्य अनुशब्दितस्य पुष्करस्य तदाख्यवाद्यभाण्डमुख्यस्य मृदङ्गस्येत्यर्थः, अथच पुष्करस्य पुष्करावर्त्तकस्य मेघस्य, नामैकदेशे नामोपचारात्, अथवा लक्षणया पुष्करपदेन पुष्करपदवाच्यजलवर्षि-मेघबोधनात् अर्थान्तरम्। निह्लादिनी सुदूरव्यापिशब्दशालिनी, उपहितः सम्बद्धः मध्यमस्वरः निषादादिसु शब्दविशेषः तस्मात् उत्तिष्ठति या सा निषादादिस्वरसम्बन्धिनी मायूरी मयूरसम्बन्धिनी, मयूरानुरागजनिका मार्ज्जना वाद्यस्य मधुरलयविशेषः।

---

[ নেপথ্যে মৃদঙ্গশব্দ। সকলের কর্ণপ্রদান। ( ঞ ) ]

পরি। আহা, কি মনোহর সঙ্গীতই আরম্ভ হইয়াছে! দেখুন। (ট)

রাজা। দেবি! তস্যাঃ সামাজিকা ভবামঃ। (ঠ)

দেবী। (স্বগতম্।) অহো! অবিণও অজ্জউত্তস্স।

[ অহো অবিনয় আর্য্যপুত্রস্য। ] (সর্ব্বে উত্তিষ্ঠন্তি।) (ড)

---

মনাংসি অন্তঃকরণানি অস্মাকমিতি শেষঃ। মদয়তি মত্ততাং নয়তি, তব গমনে পরমৌৎসুক্যং সম্পাদয়তি ন ইতি ভাবঃ। মায়ূরী মার্জ্জনা যথা ভরতে—"মায়ূরী চার্দ্ধমায়ূরী তথা কার্ম্মারবীতি চ। তিস্রস্তু মার্জ্জনা জ্ঞেয়াঃ পুষ্করেষু স্বরাশ্রয়াঃ। গান্ধারো বামকে কার্য্যঃ ষড়্জো দক্ষিণপুষ্করে। মধ্যমস্ত্বোর্দ্ধ্বগঃ কার্য্যো মায়ূর্য্যাস্তু স্বরাস্ত্বমী" ইতি। নিষাদাদীনাং সপ্তস্বরাণাং নামানি যথা—"নিষাদর্ষভগান্ধারষড়্জ-মধ্যমধৈবতাঃ। পঞ্চমশ্চেত্যমী সপ্ততন্ত্রীকণ্ঠোত্থিতাঃ স্বরা" ইত্যমরঃ। অত্র মৃদঙ্গধ্বনৌ ময়ূরাণাং মেঘধ্বনিত্বাদ্ভ্রমাৎ অনুরসনপ্রবৃত্ত্যা ভ্রান্তিমানলঙ্কারঃ। পুষ্করশব্দস্য ইতরার্থস্য বাচ্যত্বে স এব শ্লেষানুবিদ্ধঃ। বৃত্তং প্রহর্ষিণী।

(ঠ) তস্যাঃ মায়ূরীনামধেয়ায়াঃ মার্জ্জনায়াঃ সামাজিকাঃ রঙ্গস্থাঃ তদধিগন্তারঃ ইত্যর্থঃ। ভবাম প্রার্থনায়াং লোট্। তথাহি সঙ্গীতক্রমারব্ধমিতি মৃদঙ্গধ্বনিরেব বিজ্ঞাপয়তি, তদেহি সর্ব্বে বয়ং গৃহীতসঙ্কেতাঃ তত্রৈব নাট্যদর্শনায় গচ্ছাম ইতি ভাবঃ।

(ড) অহো আশ্চর্য্যং, আর্য্যপুত্রস্য স্বামিনঃ অবিনয়ঃ বিনয়শূন্যতা ঔদ্ধত্যমিত্যর্থঃ। যতঃ মমৈব সকাশে প্রকারান্তরেণ নায়িকান্তরভূতায়াঃ মালবিকায়াঃ দর্শনাভিলাষং প্রকাশয়তি, অন্যায্যং হি একনায়িকাসকাশে নায়কস্য নায়িকান্তরানুরাগপ্রকাশ ইতি তদ্বিপরীতমেব নায়কস্য সাহসমিতি ভাবঃ। উত্তিষ্ঠন্তি নাট্যাভিনয়স্থানগমনায় ইতি শেষঃ।

---

মুরজবাদ্যের ময়ূরধ্বনিসদৃশী এই মধুর গম্ভীর মধ্যমস্বরসমুদ্ভাবিত মূর্চ্ছনা মনকে নিরতিশয় আমোদিত করিতেছে। ময়ূরেরা মেঘের শব্দ মনে করিয়া উদ্গ্রীব হইয়া প্রতিধ্বনি করিতেছে। তাহাতে ঐ মূর্চ্ছনা আরও বর্দ্ধিত হইয়া উঠিয়াছে ॥২১॥

রাজা। দেবি! এইবার আমরা মৃদঙ্গবাদ্য শুনিতে যাইব। (ঠ)

विदू। (अपवार्य्य) भो! धीरं गच्छ। तत्तभोदी धारिणी विसंवाद्इस्सदि। [भोः! धीरं गच्छ। तत्रभवती धारिणी विसंवादयिष्यति।] (ढ)

राजा। धैर्य्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरावोऽयम्।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥

[अन्वयः। अयं मुरजवाद्यरावः सिद्धिपथम् अवतरतः स्वमनोरथस्य शब्द इव धैर्य्यावलम्बिनमपि मां त्वरयति। २२। ]

---

(ढ) अपवार्य्य परावृत्य अन्यतः प्रच्छाद्य इत्यर्थः। तल्लक्षणं यथा—"तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते" इति दर्पणे। धीरं नातिद्रुतं स्वस्थभावेन इत्यर्थः। अतिद्रुतगमने आग्रहातिशयप्रकाशात् विरुद्धमननसम्भवादिति भावः। तत्रभवती माननीया देवी विसंवादयिष्यति प्रतिकूलतामाचरिष्यति, तथाहि तव द्रुतगमनादिना मालविकायामनुरागो यदि देव्याः सकाशे सुतरां व्यक्तः स्यात् तदा तत्र प्रभवन्ती देवी तस्या अन्यत्र अपसारणादिना तत्साक्षात्कारमेव ते प्रतिरुन्ध्यादिति धैर्य्यं भवता आश्रयणीयमिति भावः।

२२। अथ राजा मृदङ्गशब्दश्रवणेन प्रकृतावस्थायां स्वमनोभावं प्रकाशयति —धैर्य्येत्यादिना। अयं श्रूयमाणः मुरजवाद्यरावः मृदङ्गभाण्डध्वनिः सिद्धिपथं क्रियायाः सफलतासाधनमार्गम् अवतरतः आश्रित्य गच्छतः सिद्धिमभिप्रस्थितस्य इत्यर्थः। स्वमनोरथस्य निजमनोरूपस्यन्दनस्य शब्दः ध्वनिरिव धैर्य्यावलम्बिनं धीरताभाजनमपि धीरतया

---

দেবী। (স্বগত।) অহো, আর্য্যপুত্রের কি অশিষ্ট ব্যবহার! (সকলের উত্থান।) (ড)

বিদূ। (ধারিণীকে না শুনাইয়া) ধীরে ধীরে গমন করুন। মাননীয়া দেবী ধারিণী আপনার অভিপ্রায় সিদ্ধির প্রতিকূলতা করিতে পারেন। (ঢ)

(इति निष्क्रान्ताः सर्व्वे।) (थ)

# इति प्रथमोऽङ्कः। (त)

वर्त्तितुं चेष्टमानमपीति वा मां त्वरयति सत्वरं करोति। तथाहि भवान् मां धीरतया वर्त्तितुमादिशति अहमपि तथा वर्त्तितुं चेष्टे, किन्तु एतन्मृदङ्गशब्दं श्रुत्वा कथमपि नाहं स्थिरतां गन्तुमर्हामीति भावः। अत्र स्वमनसि रथत्वस्य आरोपात् रूपकम् आपाततो धैर्य्यावलम्बनेन सह त्वरितत्वस्य ऐकाधिकरण्यासम्भवात् ऐकाधिकरण्येन निबध्नतो विरोधप्रत्ययात् पर्य्यवसाने च धैर्य्यावलम्बनस्य धैर्य्यावलम्बनारम्भतया समाधानात् विरोधाभासः। पूर्व्वोक्तकेवलनिरङ्गरूपकानुप्राणिता च मुरजशब्द मनोरथशब्दत्वसम्भावनाया इव-शब्दवाच्यायाः प्रत्ययतो वाच्या स्वरूपोत्प्रेक्षा। आर्य्या जातिः। उक्तोत्प्रेक्षालङ्कारेण नाट्यदर्शनावसरे अभिप्रेतमालविकादर्शनरूपाभिलषित लाभोऽवश्यम्भावीति व्यज्यते।

(थ) सर्व्वे नाटकीयभूमिकाधारिणः जनाः, निष्क्रान्ताः रङ्गादिति शेषः। अस्य अङ्कशेषत्वात् "अन्तर्निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तित" इत्यङ्कलक्षणरक्षणार्थं सर्व्वपात्राणां रङ्गात् निष्क्रमणम्। अत्र पुनरावृत्त्या वीजनामकसन्ध्यङ्गस्य समाधानं नाम सन्ध्यङ्गमुक्तम्। सुखागमस्य प्रतीतेश्च प्राप्तिनामकं सन्ध्यङ्गम्। अत्र प्रथमाङ्के आचार्य्ययोरुपदेशदर्शने निश्चिते प्रथमार्थस्य समाप्तौ सत्यामपि तद्विषयमेकान्ततोऽसमाप्य पुनः परवर्त्तिपरिच्छेदे विष्कम्भकादौ प्रतिपाद्यस्य सङ्गीतकस्य अत्रैव निपातनात् अङ्कावतारो नाम अर्थोपक्षेपकः आवेदितः। तद् यथा—"अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्य सूचनात्" इत्यलङ्कारकारा ब्रुवते।

(त) इतिशब्दः समाप्तिवाची, प्रथमाङ्कनिर्व्वाहकवस्तूनां निष्क्रान्ताः सर्व्वे इत्यन्त-

---

রাজা। আমি ধৈর্য্য অবলম্বন করিয়া আছি। তথাপি এই মুরজ-বাদ্যের ধ্বনি, সাক্ষাৎ সিদ্ধির পথে অবতীর্ণ স্বকীয় মনোরথের শব্দের ন্যায় আমাকে ত্বরান্বিত করিতেছে ॥২২॥

नेव समाप्तः। प्रथमः आदिमः अङ्कः नाटकीयपरिच्छेदविशेषः, "प्रत्यक्षनेतृचरित" इत्यादि दर्पणालङ्कारनिबन्धकारानुमतलक्षणलक्ष्य इत्यर्थः। "इति हेतुप्रकरणप्रकर्षादि-समाप्तिषु" इत्यमरः। एतदन्तो मुखसन्धिः अत्रैव बहुलरसार्थसम्भूताया वीजोत्पत्तेः प्रारम्भयोगात् "यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा। प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तित"मिति लक्षणगमनात्।

इति मालविकाग्निमित्र-व्याख्याने विजयाख्याने प्रथमोऽङ्कः।

---

[ সকলের নিষ্ক্রমণ। (ণ) ]

প্রথম অঙ্ক সমাপ্ত। (ত)



# द्वितीयोऽङ्कः ।

( ततः प्रविशति सङ्गीतरचनायां कृतायामासनस्थः सवयस्यो राजा, धारिणी, परिव्राजिका, विभवतश्च परिवारः । ) (क)

राजा । भगवति ! अत्रभवतोराचार्य्ययोः कतरस्य प्रथमं प्रयोगं द्रक्ष्यामः ? (ख)

परि । ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वात् गणदासः पुरस्कारमर्हति । (ग)

---

(क) सङ्गीतरचनायां गीतवाद्यादिप्रारम्भे, तथाहि प्रथमतः सूचितस्य सङ्गीतकस्य प्रारम्भे कृते सतीत्यर्थः, सवयस्यः विदूषकेण सह वर्त्तमानः । विभवतः ऐश्वर्य्यात् परिवारः दासप्रभृतयः परिजनाः । सर्व्वेषामेव प्रविशतीति क्रियाया अन्वयः प्रतिपत्तव्यः । इतःप्रभृति प्रतिमुखसन्धिरारभ्यते, तल्लक्षणं यथा दर्पणे—"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः । लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ।" इति ।

(ख) आचार्य्ययोः अभिनयकलाशिक्षकयोः हरदत्तगणदासयोः कतरस्य हरदत्तस्य गणदासस्य वा प्रथमं आदौ प्रयोगं अभिनयं तच्छिक्षिताभिनयकौशलप्रतिपादनमित्यर्थः । द्रक्ष्यामः आलोकिष्यामहे वयमिति शेषः ।

(ग) ज्ञानेन प्राज्ञतया वृद्धः तस्य भावे ज्ञानवशात् वृद्धत्वे समाने अनूनानतिरिक्तत्वेऽपि उभयोर्ज्ञानस्य न्यूनाधिकभावविरहेऽपीत्यर्थः । वयसा वृद्धत्वात् अधिकवत्वात् गणदासः पुरस्कारं आदौ प्रयोगदर्शने योग्यतां अर्हति । तथाहि

---

(অনন্তর গান রচনা করার পর বয়স্যের সহিত আসনস্থ রাজা, ধারিণী, পরিব্রাজিকা ও রাজার পরিবারবর্গের প্রবেশ। ) ( ক )

রাজা। ভগবতি ! এই মাননীয় আচার্য্যদ্বয়ের মধ্যে প্রথমে কাহার প্রয়োগ দেখা যাইবে ? ( খ )

राजा। तेन हि मौद्गल्य! एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु। (घ)

कञ्चु। यदाज्ञापयति देवः। (इति निष्क्रान्तः।) (ङ)

(प्रविश्य) गणदासः। देव! शर्म्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्यास्तु छलिकप्रयोगमेकमनाः श्रोतुमर्हति देवः। (च)

---

वयोवृद्धत्वात् गणदास एव आदौ प्रयोगं दर्शयतु इति भावः। एतदपि परिव्राजिकया मालविकया सह राज्ञो मेलने उपायतया स्थापितमिति मन्तव्यम्।

(घ) अत्रभवतो माननीययोः आचार्य्ययोः समीपे एवम् उक्तरूपं गणदासस्य आदौ प्रयोगदर्शनाविदकं वस्तु इत्यर्थः। आवेद्य कथयित्वा, अत्रभवतोरित्यत्र कथनार्थधातुयोगे षष्ठी वा। नियोगं आदेशं ममेति शेषः। अशून्यं फलेन युक्तं कुरु। ममादेशात् इदं वस्तु आचार्य्ययोरावेद्य यथा तावपि तथैव व्यवहरेतामिति भावः। एतेन राज्ञोऽपि तत्र आग्रहातिरेको व्यज्यते।

(ङ) यदित्यादि। एष भवन्नियोगं अशून्यं करोमि आचार्य्ययोरेतन्निवेद्य इति भावः।

(च) लीयन्ते संसजन्ति अस्मिन् लोकमनांसि इति लयः गीतवाद्यादीनां अन्तरा क्रियाकालयोः परस्परं तुल्यता। तथाचामरः—"लयः साम्यमथास्त्रिया"मिति। तेन मध्या मध्यमस्थानीया चतुष्पदा चतुष्पदीयुक्ता, शर्म्मिष्ठायाः वृषपर्व्वदुहितुः तदाख्यायाः स्त्रियाः कृतिः रचना "भावे विहितः कृतप्रत्ययो द्रव्यवत् प्रकाशते" इति नियमेन तथा

---

পরি। উভয়ের জ্ঞানগুরুত্ব সমান হইলেও, বয়োধিক্যবশতঃ গণদাসই প্রথম প্রয়োগ দেখাইবার যোগ্য পাত্র। ( গ )

রাজা। মৌদ্গল্য! তবে তুমি মাননীয় আচার্য্যদ্বয়কে এইরূপ বিজ্ঞাপিত করিয়া স্বস্থানে অধিষ্ঠান কর। ( ঘ )

কঞ্চু। যে আজ্ঞা মহারাজ! ( এই বলিয়া তাহার নিষ্ক্রমণ। ) ( ঙ )

राजा। आचार्य्य! बहुमानादवहितोऽस्मि, तत् प्रवेशय पात्रम्। (छ) (निष्क्रान्तो गणदासः।)

राजा। (जनान्तिकम्।) वयस्य! (ज)

नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः।
संहर्त्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥१॥

[अन्वयः। नेपथ्यगृहगतायाः तस्याः दर्शनसमुत्सुकं मे चक्षुः अधीरतया तिरस्करिणीं संहर्त्तुं व्यवसितमिव। १।]

---

कृतमित्यर्थः, अत्र शृङ्गारस्य प्रकृतत्वेन प्रतिपाद्यत्वात् लयमध्येति विशेषणम्, तथाच— "शृङ्गारहास्ययोर्मध्यलयः, करुणे विलम्बित" इत्यादि भारतीये। छलिकप्रयोगम् छलिकनामकमभिनेयं वस्तु। एकमनाः एकाग्रचित्तः सन् देवः महाराजः श्रोतुमर्हति। तथाहि तदारभ्यते, अवधानपूर्व्वकं भवद्भिः श्रूयतामिति भावः।

(छ) बहुमानात् गौरवात्, आचार्य्ययोरिति शेषः। अथवा बहुमानात् श्रवणीयस्य विषयस्य आग्रहकारणत्वात् इत्यर्थः। एतेन प्रकृते मालविकाप्रयोज्यतया सङ्गीतके राज्ञोऽत्यन्तमाग्रहस्य प्रत्ययात् तत्र सुतरामनुरागः व्यक्तः। अवहितः दत्तावधानः। तत् तस्मात् पात्रं अभिनयकारिणं जनं प्रवेशय। आरभ्यतां प्रकृताभिनय इति भावः।

(ज) जनान्तिकमित्यस्यार्थः पूर्व्वमेव व्यक्तः। अत्र धारिण्या वर्त्तमानत्वात् जनान्तिकमभिधानम्। वयस्येति विदूषकसम्बोधनम्। विदूषकस्य शृङ्गारानुकूलतया पूर्व्वमेव एतद्विषयविज्ञानेन च तत्समीपे मालविकासम्बन्धिप्रस्तावः।

---

গণ। (প্রবেশান্তে) মহারাজ! শর্ম্মিষ্ঠার প্রণীত লয়মধ্যা চতুষ্পদী আছে। তাঁহার সেই ছলিকনাটক অবহিতচিত্তে শুনিতে আজ্ঞা হউক। (চ)

রাজা। আচার্য্য! উহাতে আমার বিশেষ আগ্রহবশতঃ অবহিত হইলাম। এখন পাত্র-প্রবেশের ব্যবস্থা করুন। (ছ)

(গণদাসের নিষ্ক্রমণ।)

রাজা। (জনান্তিকে) বয়স্য! (জ)

विदू। (अपवार्य्य।) उवट्ठिदं णअणमहु सण्णिहिदमक्खिअं च, ता अप्पमत्तो दाणिं पेक्ख। [उपस्थितं नयनमधु सन्निहितमक्षिकं च, तदप्रमत्त इदानीं प्रेक्षस्व।] (भ)

---

१। अथ मालविकादर्शने कालक्षेपाक्षमतामात्मनो विदूषकसमीपे निवेदयति—नेपथ्येत्यादिना। नेपथ्यगृहगतायाः वेशरचनास्थानमधितिष्ठन्त्याः तस्या मालविकायाः दर्शनसमुत्सुकं दर्शनार्थं कौतुकयुक्तं मे मम चक्षुः नेत्रम् अधीरतया अधैर्य्यवशेन तिरस्करिणीं यवनिकां संहर्त्तुम् उत्सारयितुम् इव व्यवसितं विचेष्टितम्। तथाहि मम एवम् अस्यां मालविकायाम् अनुरागो यथा नेपथ्यधारणानन्तरं यवनिकापसारणकालमपि सोढुमक्षमः सहसा यवनिकामुत्सार्य्य तदालोकनाय प्रवृत्तिमुद्वहामीति भावः। सत्वरमेव मालविका गृहीतनेपथ्या प्रविशतु किं कालविलम्बेन इति तात्पर्य्यम्। अत्र मालविकादर्शनोत्सुके चक्षुषि तिरस्करिणीसंहरणाध्यवसायसम्भावनायाः इवशब्देन व्यञ्जनात् क्रियोत्प्रेक्षा वाच्या। "प्रतिसीरा यवनिका स्यात्तिरस्करिणी च सा" इत्यमरः। आर्य्याजातिः।

(भ) अपवार्य्य। एतल्लक्षणमपि प्रागेव उक्तम्। नयनस्य नेत्रस्य सम्बन्धे मधु मधुसदृशं, मधु यथा लोकस्य तृप्तिं साधयति तथैव यत् वस्तु नेत्रस्य प्रीतिं साधयति तथाभूतम्। सन्निहिता सन्निकृष्टा मक्षिका मधुग्रहणान्तरायभूता सरघा यत्र तथाभूतं, तत् तस्मात् मक्षिकायाः सन्निहितत्वात् इत्यर्थः। अप्रमत्तः सावधान इत्यर्थः। प्रेक्षस्व, तथाहि मधुचक्रे यदि मक्षिकाः सन्निहिताः तिष्ठन्ति, तदा तस्मात् मधुसंग्रहे सुतरां सावधानता अवलम्बितव्या, अन्यथा मक्षिकाणां दंशनेन आत्मनः अनिष्टसम्भवादिति भावः। प्रकृतार्थस्तु इयमसौ समुपस्थितैव मालविका तव नेत्रप्रीतिसम्पादिका, अन्तिके च तदनुरागान्तरायभूता वर्त्तते महिषी धारिणी, तत् सावधानं

---

নেপথ্যগৃহে প্রবিষ্টা সেই মালবিকার দর্শনার্থ মদীয় নয়ন নিতান্ত উৎসুক ও তজ্জন্য এরূপ অধীর হইয়া উঠিয়াছে যে, যবনিকাকে যেন ছিন্ন করিবার সঙ্কল্প করিয়াছে ॥১॥

[ ततः प्रविशत्याचार्य्यावेक्ष्यमाणाङ्गसौष्ठवा मालविका ]। (ञ)

विदू। (जनान्तिकम्) **पेक्खदु भवं। ण क्खु से पड़िच्छन्दादो परिहीअदि मडुरदा।** [ प्रेक्षतां भवान्। न खल्वस्याः प्रतिच्छन्दात् परिहीयते मधुरता। (ट)

---

धैर्य्येण आलोकतां भवान् मालविकां, यथा तव अनुरागातिशयो न प्रकाशतां याति; अन्यथा धारिणी ज्ञातनत्त्वा प्रतिवघ्नीयात तव समुद्यममिति भावः। एतन्मते मालविकायां मधुत्वारोपो गम्यः, धारिण्याञ्च मक्षिकात्वारोपः, इति उभयोः सापेक्षत्वेन सङ्करः। केचित्तु—सन्निहिता मक्षिका मधुसमास्वादिनी यत्र तथाभूतं, तथाहि मालविका आगता त्वमपि तदुपभोगकारी समुपस्थित एव वर्त्तसे अतः अप्रमत्त एव प्रेक्षस्व इति। एतन्मते मक्षिकात्वस्य राज्ञि आरोपो गम्यः। मक्षिका यथा मधुनि तदास्वादनाय निपतिता पक्षादीनां संलग्नतया नान्यत्र उत्पत्य गन्तुं शक्नोति, तथा त्वमपि मालविकायामेकान्ततः अनुरक्तः अनन्यासक्तो भवेति भावो व्यज्यते।

(ञ) आचार्य्येण गणदासेन मालविकायाः शिक्षकेण अवेक्ष्यमाणं दृश्यमानम् अङ्गानां सङ्गीताङ्गानां देहानाञ्च सौष्ठवं सौन्दर्य्यं यस्याः तथाभूता। मालविका प्रविशति।

(ट) भवान् राजा प्रेक्षताम् इमामुपस्थितां मालविकामिति शेषः, अस्याः प्रत्यक्षदृश्यमानायाः वास्तविकमालविकायाः, प्रतिच्छन्दात् प्रतिकृतेः चित्रितमूर्त्तेरित्यर्थः। मधुरता माधुर्य्यं न परिहीयते न्यूनतामापद्यते, तथाहि इयमस्माभिः यथा चित्रे दृष्टा तथैव वस्तुगत्या मूर्त्तावपि इति महदस्या रूपस्य माधुर्य्यं, प्रायेण प्रतिकृतौ कृत्रिमतया लावण्यमधिकं चित्रकरैः विन्यस्यते इयं चित्रे वास्तवे च समैवेति महदाश्चर्य्यम्। "प्रतिरूपं प्रतिच्छन्द" इति विकाण्डशेषः।

---

বিদূ। (অপবারিত করিয়া) নয়নমধু মালবিকা উপস্থিত হইয়াছে। মক্ষিকাও সম্মুখেই অবস্থিত। সুতরাং সাবধানে অবলোকন করুন। (ঝ)

[ আচার্য্য-পরিদৃষ্টদেহসৌষ্ঠবসম্পন্না মালবিকার প্রবেশ। ] (ঞ)

राजा। (अपवार्य्य)। वयस्य !

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम्।
सम्प्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥२॥

[ अन्वयः। चित्रगतायाम् अस्यां मे हृदयं कान्तिविसंवादशङ्कि (आसीत्), सम्प्रति येन इयम् आलिखिता, ( तं ) शिथिलसमाधिं मन्ये। २। ]

---

२। अथ राजा चित्रितमूर्त्तेः सौन्दर्य्यापेक्षया प्रकृतसत्यभूतमालविकायाः सौन्दर्य्यमधिकं निर्व्वक्ति—चित्रत्यादिना। वयस्येति गद्यभूतं सम्बोधनपदम् अत्रैवानुकर्षणान्वेति ; चित्रगतायां चित्रफलके चित्रितायाम् अस्यां मालविकायां मालविकायाः चित्रितमूर्त्ताविल्यर्थः। मे मम हृदयं चेतः कान्तिविसंवादं शारीरसौन्दर्य्यस्य वैसादृश्यं शङ्कते यत् तत् तथाहि तदानीं मालविकायाः चित्रिताम् आकृतिं दृष्ट्वा मया एवं सन्दिग्धं यथा प्रकृतमालविका चित्रमूर्त्तिमपेक्ष्य न्यूनशोभा वा इति, यतः दृष्टपूर्व्वेभ्यः सर्व्वेभ्य एव रूपेभ्यः तदानीं तस्य सौन्दर्य्यस्य परमोत्कर्षः सम्भावित इति भावः। किन्तु सम्प्रति प्रकृतमालविकायाः दर्शनवेलायामित्यर्थः। येन चित्रकरेण जनेन इयं मालविका आलिखिता चित्रगता कृता चित्रिता इत्यर्थः। तं चित्रकरं शिथिलः अनतिशयः समाधिः मनोयोगः यस्य तथाभूतं स्वीये कर्त्तव्ये मालविकामूर्त्तिलिखनविषये अमनोयोगिनमित्यर्थः। मनेऽ सम्भावयामि, तथाहि यदि सः निपुणश्चित्रकरः सम्यङ्मनोयोगेन तत् मालविकायाः चित्रं चित्रितमकरिष्यत् तदा अस्या आकृतिमहिमा नव सर्व्वथा परिस्फुरितः अभविष्यत् इति चित्रगतमूर्त्तिसौन्दर्य्यापेक्षया प्रकृतमालविकायाः सौन्दर्य्यमधिकमनोहारि इति व्यतिरेको व्यज्यते। चित्रकरे शिथिलसमाधित्वस्य सम्भावनाया 'मन्ये'शब्देन व्यञ्जनात् उत्प्रेक्षालङ्कारः। द्वितीयार्द्धे अवश्यं वाच्यः किन्तुशब्दो नोक्त इति वाच्यानभिधानं दोषः। येनेत्यादिना यच्छब्देन उद्देश्यतया वक्तव्यस्य विधेयादुत्तरं

---

विदू। ( जनान्तिকে ) অবলোকন করুন। চিত্রস্থ মূর্ত্তি অপেক্ষা সজীব মূর্ত্তিতে ইহাঁর মাধুর্য্যের কিছুমাত্র বৈলক্ষণ্য হয় নাই। ( ট )

রাজা। ( অপবারণপূর্ব্বক ) বয়স্য !

गण। वत्से ! मुक्तसाध्वसा सत्त्वस्था भव । (ठ)

राजा । ( स्वगतम् ) अहो ! सर्वस्थानानवद्यता रूपविशेषस्य ।

तथाहि । (ड)

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निविड़ोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।

---

निबन्धात् विधेयाविमर्शदोषः, अत्र तच्छब्दस्य अनुपादानेऽपि यच्छब्दस्य उत्तरवाक्यगतत्वेन तच्छब्दस्यार्थत्वमिति । तथाच दर्पणे—"यच्छब्दस्योत्तरवाक्यगतत्वे नोपादाने सामर्थ्यात् तच्छब्दस्यार्थत्वम्, यथा—"आत्मा जानाति यत् पापम्" इति । आर्य्याजातिः ।

(ठ) मालविकायां गणदासस्य स्नेहातिरेकात् शिष्यसम्पर्काच्च वत्से इति सम्बोधनम् । मुक्तं परित्यक्तं साध्वसं भयं राजप्रभृतीनां गौरवितानां दर्शनसमुत्थं भयमिति यावत्, यया तथाभूता, निःशङ्का सती, सत्त्वस्था स्वभावस्थिता, "सत्त्वं द्रव्ये स्वभावे च व्यवसायप्रभावयोः । पिशाचादौ गुणे प्राणबलजन्तुषु चेतसि" इत्यजयवचनात् राजदर्शनादिना भयजनितविकारसद्भावे सर्व्वथा अभिनयनैपुण्यस्य प्रदर्शनेन प्रकर्षलाभः असम्भव एव, अभिनयनैपुण्यप्रदर्शनस्य लज्जादिपरतन्त्रतया व्याघातस्य भूयोदर्शनादनुभवाच्च ।

(ड) रूपविशेषस्य विलक्षणाकारस्य, सर्व्वेषु सकलेषु स्थानेषु अङ्गविशेषेषु अनवद्यता अनिन्दनीयता, तथाहि सर्वाण्येव अङ्गानि यत् उत्कृष्टानि तत् कस्यचिदेव रूपस्य भवति न तु साधारणस्येव अतएव दुर्लभत्वादीदृशस्य प्रशंसा इति भावः ।

---

চিত্রে ইহার আকৃতি দর্শন করিয়া আমার মনে এই শঙ্কা হইয়াছিল যে—বাস্তবিকই ইহার কান্তি বোধ হয় এরূপ নহে। এক্ষণে মনে হইতেছে—যে ব্যক্তি ইহার চিত্র অঙ্কিত করিয়াছিল, সে মনোযোগপূর্ব্বক ভাল করিয়া চিত্রিত করিতে পারে নাই ॥ ২ ॥

গণ। বৎসে! ভয় ত্যাগ করিয়া প্রকৃতিস্থ হও। (ঠ)

রাজা। (স্বগত) ইহার সর্ব্বাঙ্গের সৌন্দর্য্য অনিন্দনীয়। (ড)

मध्यः पाणिमितोऽमितञ्च जघनं पादावरालाङ्गुली
छन्दो नर्त्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥२॥

[ अन्वयः । (अस्याः) वदनं दीर्घाक्षं शरदिन्दुकान्ति, बाहू अंसयोः नतौ, उरः संक्षिप्तं निविडोन्नतस्तनं, पार्श्वे प्रमृष्टे इव, मध्यः पाणिमितः, जघनम् अमितं, पादौ च अरालाङ्गुली, नर्त्तयितुः मनसि यथा छन्दः, तथैव अस्याः वपुः श्लिष्टम् । २ । ]

---

( २ ) अथ शरीरस्य अनवद्यतां प्रत्यङ्गप्रकर्षोपन्यासेन वक्ति—दीर्घाक्षमित्यादिना। वदनं मुखम् अस्या इति शेषः। शरदिन्दुवत् शारदचन्द्रवत् कान्तिः सौन्दर्य्यं यस्य तथाभूतं, दीर्घाक्षम् आयतलोचनयुक्तम्, एतत् सर्व्वं मुखसौन्दर्य्यमिति भावः। बाहू भुजौ अंसयोः बाहुमूलयोः नतौ नतिमन्तौ, एतदपि बाहुसौन्दर्य्यमिति। उरः वक्षःस्थलं संक्षिप्तं प्राप्तसङ्कोचं निविडौ घनसन्निवेशौ उन्नतौ उच्चौ स्तनौ कुचौ यत्र तथाभूतं घनोन्नतस्तनसम्बाधमित्यर्थः। इदं स्तनसौन्दर्य्यमिति। पार्श्वे उदरपार्श्वद्वयं, प्रमृष्टे परिमार्ज्जिते इव, तथाहि यथा गृहभित्तिप्रभृतिकं केनचित् लेपितं बन्धुरतां परित्यज्य समतामिव समाश्रयति तद्वत् अस्या पार्श्वद्वयं बन्धुरताशून्यं जातमिति भावः। एतत् पार्श्वद्वयसौन्दर्य्यमिति। मध्यः कटिदेशः पाणिना करतलेन मितः परिमितः, अस्याः कटिदेशस्तथा सूक्ष्मः यथा अङ्गुष्ठतर्ज्जन्योरन्तरे परिमातीति भावः। एतत् कटिसौन्दर्य्यमिति। जघनम् अमितम् अपरिमितम् अतिस्थूलमित्यर्थः। एतत् जघनसौन्दर्य्यमिति। पादौ चरणौ अराला वक्राः अङ्गुल्यः ययोः तथाभूतौ, एतत् पादसौन्दर्य्यम्। नर्त्तयितुः नृत्यशिक्षकस्य मनसि चित्ते यथा छन्दः अभिप्रायः नृत्यशिक्षकः यथा यथा अङ्गसंस्थानं नृत्योपयोगितया समुत्प्रेक्षते इत्यर्थः। तथैव तद्रूपमेव नतु अन्यथा इति भावः। अस्याः मालविकायाः वपुः अङ्गं श्लिष्टं सङ्गतं, तथाहि सर्व्वाङ्गेष्वेव अस्यास्तथा सौन्दर्य्यसीमा यथा नृत्यकौशलम् अनुपयुक्तं लेशतोऽपि न स्यादिति भावः। अत्र पूर्व्वपदार्थानां चतुर्थचरणवाक्यार्थं प्रति हेतुतया भानात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। पार्श्वयोः प्रमृष्टत्वसम्भावनायाः इवशब्देन बोधनात् वाच्या क्रियोत्प्रेक्षा। शरदिन्दुकान्तीत्यत्र समासगता उपमा चेति सङ्करः। मध्यस्य पाणिमितत्वमसम्भवादपि सम्भाव्यतया वर्ण्यते इति अतिशयोक्तिरुत्प्रेक्षा वा गम्या। तथाशब्दोत्तरं प्रयोक्तव्यस्य

[ মাল। উপগানং কৃত্বা চতুষ্পদবস্তু গায়তি। ] (ঢ)

দুল্লহো পিঅো তস্সিং ভব হিঅঅ ! ণিরাসং
অহ্মো অপঙ্গঅো মে ফুরই কিং পি বামঅো !
এসো সো চিরদিট্ঠো কহং উণ দট্ঠব্বো
ণাহ ! মং পরাহীণং তুই গণঅ সতিস্হম্ ॥৪॥

[ দুর্ল্লভ: প্রিয়স্তস্মিন্ ভব হৃদয় নিরাশম্
অহো অপাঙ্গকো মে স্ফুরতি কিমপি বামক:।
এষ স চিরদৃষ্ট: কথং পুনর্দ্রষ্টব্যো
নাথ মাং পরাধীনাং ত্বয়ি গণয় সতৃষ্ণাম্ ॥ ৪ ॥ ]

[ অন্বয়:। হৃদয় ! প্রিয়: দুর্লভ: ( অত: ) তস্মিন্ নিরাশং ভব। অহো মে বামক: অপাঙ্গক: কিমপি স্ফুরতি। এষ: স: চিরদৃষ্ট:, পুন: কথং দ্রষ্টব্য:। নাথ ! পরাধীনাং মাং ত্বয়ি সতৃষ্ণাং গণয়। ৪। ]

---

এব-শব্দস্য অস্থানে যথাশব্দোত্তরং নিবেশাৎ অক্রমতা-দোষ:। "অরালং বৃজিনং জিহ্ম" ইত্যমর:। "অভিপ্রায়শ্ছন্দ আশয়" ইতি চামর:। বৃত্তং শার্দ্দূলবিক্রীড়িতম্।

(ঢ) উপগানং গানস্য প্রারম্ভে কৃত্যং স্বরানুশীলনং বসন্তাদিরাগালাপমিতি যাবৎ, কৃত্বা, চতুষ্পদবস্তু পাদচতুষ্টয়যুক্তং গেয়ং পদং গায়তি স্বরসংযোগেন প্রযোজয়তি।

---

ইহার লোচনদ্বয় দীর্ঘ; মুখমণ্ডল শরৎকালীন চন্দ্রসদৃশ-কান্তি-বিশিষ্ট; বাহুযুগল স্কন্ধপ্রদেশে নতভাবাপন্ন। হৃদয়দেশ নিবিড়োন্নত স্তনযুগলের সন্নিবেশবশতঃ অপ্রশস্ত; পার্শ্বদ্বয় যেন মার্জ্জিত; মধ্যদেশ হস্ত দ্বারা পরিমাণ করা যায়; জঘন অতি বিশাল; পদযুগলের অঙ্গুলি সকল কুটিলভাবাপন্ন। ফলতঃ নৃত্যাচার্য্য গণদাসের মনের ইচ্ছানুসারেই যেন ইহার দেহ সংঘঠিত হইয়াছে ॥৩॥

মাল। [ উপগান অর্থাৎ গানের অগ্রে বসন্তাদিরাগসঙ্গত স্বরবিশেষ আলাপ করিয়া, চতুষ্পদ গান করিতে লাগিলেন। ( ঢ ) ]

४। अथ तदेव गेयमाह—दुर्लभ इत्यादिना। हे हृदय ! सम्बोधनमिदम् निरन्तरं प्रियजनोन्मुखम् आत्मनो हृदयं प्रति। प्रियः दयितः अग्निमित्रो नाम राजप्रवरः दुर्लभः कथमपि लब्धुं न शक्यः त्वया दासीपदं गतया इति शेषः। अतः तस्मिन् प्रिये राजनि निराशम् आशारहितं भव, दुर्लभस्य जनस्य आशंसया केवलं मनोरथालाभजन्यं कष्टमेव परिणामे लभ्यं नतु आशापूरणजन्यः सन्तोष इति कथमिव स्वेच्छया कष्टवरणमिति भावः। अह्मो इति शौरसेन्यादिभाषासु विषादसूचकमव्ययम्। तदर्थ एव संस्कृते अहोशब्द इति। वामकः वामः मे मम अपाङ्गकः चक्षुःप्रान्तभागः, किमपि स्वल्पं स्वल्पम् अनिर्व्वचनीयं वा स्फुरति स्पन्दते, तथाहि स्त्रीणां वामाङ्गस्य स्पन्दनेन शुभमेव भावि सूच्यते, अतः ममापि वामनेत्रप्रान्तस्पन्दनेन राजसमागमो नितरामसम्भवोऽपि वा सूच्यते, तत् तद्विषयकाशायाः न सुतरामकर्त्तव्यत्वमिव प्रतिभाति इति पूर्व्वपक्षस्य अन्यथाकरणं गम्यम्। एष सः मम प्रियः चिरं बहुकालानन्तरं बहुपूर्व्वमित्यर्थः। दृष्टः आलोकितः मया इति शेषः। तथाहि प्रियस्य तस्य बहुकालमदर्शनात् दर्शनाशा बलवती जाता इति भावः। अथवा चिरदृष्टः अनुरागबाहुल्यात् सततमेव हृदये दृश्यमानः एषः प्रत्यक्षीभूतः, एतावन्तं कालं यावत् सर्व्वदेव हृदयासने प्रियरूपेण स्थापितः स इदानीं सम्मुखे वर्त्तते। पुनः वारान्तरे कथं केन प्रकारेण द्रष्टव्यः आलोकयितव्यः, केन प्रकारेण तं पुनर्द्द्रक्ष्यामि इति दर्शनाशामतिमात्रवृद्धामुपशमयेयमिति भावः। अथ आत्मनः विरहदुर्गतावस्थाम् उद्देशेन राज्ञो निवेद्य तद्दर्शनप्रार्थनाम् पिशुनयति—नाथेत्यादिना। नाथ ! पराधीनां त्वदेकमात्रवशीभूतां मां त्वयि प्रिये सतृष्णाम् आशावतीं गणय विवेचय। तथाहि त्वयि एकान्ततः वशीभूतायाः मम नास्ति शरणान्तरं, त्वमेव मम शरणमिति मयि अनुग्रहेण देहि वारमेकमपि दृष्टिपातमिति भावः।

एतदनुरूपा आर्य्या रत्नावल्यां यथा—"दुल्लह जनानुराओ लज्जागुरुइ परवसो अप्पा। पिअसहि विसमं पेमं मरणं सरणं णवरि एक्कम्॥" इति। स्त्रीणां वामाङ्गस्पन्दनं पतिलाभसूचकमिति मत्स्यपुराणे—"योषिल्लाभोऽपाङ्गदेशे श्रवणान्ते प्रिया श्रुतिः" इति। अत्र तस्मिन् इत्यादि वाक्यार्थं प्रति दुर्लभ इत्यादि वाक्यार्थस्य हेतुत्व-

---

প্রিয়জন—দুর্ল্লভ, অতএব হৃদয় ! তুমি তাঁহার আশা ছাড়িয়া দাও।

[ ततो यथारसमभिनयति। ] (ण)

विदू। ( अपवार्य्य ) **भो वअस्स ! चउप्पदवत्थुअं दुवारिकरिअ तुह उवत्थाविदो अप्पा तत्तभोदीए।** [ भो वयस्य ! चतुष्पदवस्तुकं द्वारीकृत्य त्वयि उपस्थापित आत्मा तत्रभवत्या। ] (त)

राजा। **सखे ! एवमेव ममापि हृदयम्। अनया खलु—(थ)**

---

प्रत्ययात् काव्यलिङ्गं वाक्यार्थहेतुकम्। अत्र पादचतुष्टये निर्व्वेदः विस्मयः हर्षः चिन्ता दैन्यञ्च इत्येते व्यभिचारिभावाः। मुखरागाद्यनुभावैरुपदर्शिताः क्रमेण।

(ण) यथारसं रसाननतिक्रम्य, यत्र यो रसः तत्र तद्भावाभिनयेन इत्यर्थः। अभिनयति अङ्गभङ्गीप्रभृतिकं करोति। अथवा स्वहृदयगतशृङ्गाररसानुगुणं भावं प्रकाशयति, स च भावः प्रकृतेऽपि उपयुज्यते गेयविषयस्यापि शृङ्गाररसविषयकत्वात्।

(त) चतुष्पदवस्तुकं पादचतुष्टयात्मकमुक्तं वस्तु द्वारीकृत्य व्यापारतया अवलम्ब्य "दुर्लभः प्रियः" इत्यादि छलिकापरनामधेयं वस्तुप्रतिपादनव्यपदेशेन इत्यर्थः। तत्रभवत्या आदरभाजनीभूतया मालविकया त्वदनुरागभाजनतया माननीया वा त्वयि आत्मा शरीरं "आत्मा देहे धृतौ क्लीवे स्वभावे परमात्मनि" इत्यादि कोषः। उपस्थापितः ग्रहणीयतया समर्पितः। तथाहि छलिकप्रयोग एष छलरूपः त्वयि आत्मसमर्पणमेव अनया मुख्यतया प्रतिपाद्यते, गानानन्तरं यथारसमभिनयेन तथैव प्रत्ययात् इति। अपवार्य्य कथनन्तु धारिणीविज्ञानप्रतिहननार्थम् अन्यथा ज्ञाततत्त्वा सा इदानीमेव वा स्वानिष्टफलकं मालविकाया नृत्यादिव्यायामम् उपलक्ष्य प्रतिहन्यादिति भावः।

---

অহো! আমার বাম অপাঙ্গ কিঞ্চিৎ স্পন্দিত হইতেছে। যাঁহাকে বহুকাল যাবৎ দেখিতেছি, তাঁহাকে কিরূপে আবার দেখিব? নাথ! আমি পরাধীন। তোমাতেই আমার একান্ত অনুরাগ জানিবে॥৪॥

[ অনন্তর রসানুসারে অভিনয়। (ণ) ]

বিদূ। ( অপবারিত করিয়া ) বয়স্য! এই চতুষ্পদী আশ্রয় করিয়া আদরণীয়া মালবিকা আপনাতেই যেন আত্মাকে উপহারস্বরূপ ন্যস্ত করিলেন। (ত)

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥५॥

[ अन्वयः । हे नाथ ! इमं जनम् अनुरक्तं विद्धि इति गेये स्वाङ्गनिर्द्देशपूर्व्वं वचनम् अभिनयन्त्या ( अनया ) धारिणीसन्निकर्षात् प्रणयगतिम् अदृष्ट्वा, अहं सुकुमारप्रार्थना-व्याजमुक्त इव । ५ । ]

(थ) ममापि न केवलं तवेत्यपिशब्दार्थः। एवमेव त्वया कथितरूपमेव हृदयं मनोभावः। तथाहि अहमपि चतुष्पदवस्तुगानच्छलेन अस्या मयि आत्मोपस्थापनमनेन निर्द्धारयामि इति भावः। अनया मालविकया खलु निश्चितम् अस्यांशस्य पद्ये अन्वयः प्रतिपत्तव्यः ।

५। अथ स्पष्टं मालविकायाः पूर्व्ववचनोपन्यासतो विज्ञाप्य विशिनष्टि—जनमित्यादिना। हे नाथ! प्राणेश्वर! इमं मल्लक्षणं जनम् अनुरक्तं त्वयि सानुरागं विद्धि जानीहि, इति उक्तरूपं वस्तु गेये गानविषये स्वाङ्गनिर्द्देशः स्वस्याः अङ्गविन्यासेन निर्द्धारणं तत्पूर्व्वं तदाचरणपूर्व्वकमित्यर्थः। वचनम् उक्तार्थप्रकाशकं छलिकवाक्यम् अभिनयन्त्या स्वरसंयोगेन गायन्त्या सत्या धारिण्याः प्रधानमहिष्याः सन्निकर्षात् सान्निध्यात् प्रणयगतिं मम प्रेमवृत्तान्तम् अदृष्ट्वा अनवलोक्य, तथाहि अहमपि एतस्याम् इतोऽधिकतरमनुरक्तस्तथापि नालमस्मि तत्प्रकाशनाय धारिणीभयादिति भावः। अहम् अनया प्रियत्वेन अनुगृहीतः जनः सुकुमारप्रार्थनायाः कोमलयाच्ञायाः व्याजम् उक्तः कथितः। तथाहि मम अस्यामाग्रहमजानाना एव इयम् इत्थं विनीतप्रार्थनया मयि आत्मोपस्थापनं करोति, ज्ञाततत्त्वा यदि तदा नैवं कातर्य्यं विन्देदिति भावः। अथवा सुकुमारप्रार्थना एव व्याजः यत्र तथाभूतं यथा तथा उक्तः। तथाहि छलिकव्यपदेशेन मयि सुकुमारप्रार्थना कृता इति भावः। तादृशसुकुमारप्रार्थनायाः

রাজা। সখে! আমাদের উভয়েরই হৃদয় এইরূপ। এই মালবিকা নিশ্চয়ই—( থ )

[ মালবিকা গীতান্তে নিষ্ক্রমিতুমারব্ধা ]। (দ)

বিদূ। **ভোদি! চিট্ঠ কিঞ্চি। কিম্পি বো বিস্মুমরিদো কম্মভেদো। তং দাব পুচ্ছিস্সম্।** [ ভবতি। তিষ্ঠ কিঞ্চিৎ। কিমপি বো বিস্মৃতঃ কর্ম্মভেদঃ। তং তাবৎ প্রক্ষ্যামি। ] (ধ)

---

প্রকৃতায়াঃ স্বরূপপ্রচ্ছাদনায় ব্যাজশব্দোপন্যাসাৎ তস্য চ ইবশব্দেন সম্ভাবনাপ্রত্যায়নাৎ সাপহ্নবোৎপ্রেক্ষালঙ্কারঃ। বৃত্তং মালিনী নাম।

(দ) গীতস্য প্রস্তুতস্য ছলিকস্য অন্ত অবসানে, নিষ্ক্রমিতুং রঙ্গাৎ বহির্ভবিতুম্ আরব্ধা প্রবৃত্তা, এতেনাস্যা মুগ্ধাজনসুলভঃ লজ্জাতিশয়ো ব্যক্তঃ। আরব্ধেতি "আদিকর্ম্মণি ক্তঃ কর্ত্তরি চ" ইতি আদিকর্ম্মণি ক্তপ্রত্যয়ঃ। এতচ্চ রাজ্ঞঃ ঔৎসুক্য-বর্দ্ধনপ্রশংসনায় কবিনা প্রস্তুতম্।

(ধ) কিঞ্চিৎ অল্পকালং যাবৎ, তিষ্ঠ গতিং নিবর্ত্তয়। বঃ যুষ্মাকং কিমপি স্বল্পঃ কর্ম্মভেদঃ কার্য্যবিশেষঃ বিস্মৃতঃ, তথাহি কলাপ্রদর্শনে যৎ যৎ কর্ম্ম আচরণীয়ং তৎ তৎ সর্ব্বং ন সম্পাদিতম্ অংশবিশেষস্য বিস্মরণাদিতি তৎ করণার্থং ক্ষণং বিলম্বো যুজ্যতে ইতি ভাবঃ। বস্তুতস্তু মালবিকায়ামতিতরামাসক্তস্য রাজ্ঞঃ যথা সম্যগ্ দর্শনং ভবতি তৎসাধনায় এব বিদূষকস্যায়ং মালবিকাবিলম্বনপ্রস্তাবঃ, ইদানীং পরিশ্রান্তায়াস্তস্যাঃ সৌম্যতায়া আধিক্যেন অভিব্যক্তেরিতি। তং তাবৎ কর্ম্মভেদং ত্বয়া বিস্মৃতপূর্ব্বমিত্যর্থঃ। প্রক্ষ্যামি জ্ঞাতুমিচ্ছামি প্রচ্ছ্ধাতোর্জ্ঞানগোচরেচ্ছাবাচিত্বাত্তদর্থঃ।

---

গান করিবার সময়ে 'নাথ! এই ব্যক্তি আপনাতেই অনুরক্ত জানিবেন' এইরূপ কথা অঙ্গভঙ্গী বিন্যাসসহকারে অভিনয়ে প্রবৃত্ত হইয়া, ধারিণীর সান্নিধ্যবশতঃ আমার প্রণয়ের চিহ্ন পাওয়া সম্ভবপর নহে জানিয়া আপনার অঙ্গ নির্দ্দেশপূর্ব্বক সুকুমার প্রার্থনাচ্ছলে আমাকেই যেন ঐ কথা বলিলেন ॥ ৫ ॥

[ গীতান্তে মালবিকার নিষ্ক্রমণ চেষ্টা। (দ) ]

বিদূ। একটু অপেক্ষা করুন। আপনাদের কোন বিশেষ কার্য্য করিতে ভুল হইয়াছে। আমি তাহা জিজ্ঞাসা করিতে চাই। (ধ)

गण। भद्रे ! उपदेशविशुद्धा यातुमर्हसि। (न)

[ मालविका निवृत्य स्थिता ]।

राजा। (स्वगतम्)। अहो ! सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति। तथाहि—(प)

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम्।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्द्धम् ॥६॥

---

(न) उपदेशे शिक्षाविषये विशुद्धा निर्द्दोषा शिक्षाप्रशस्तिं सर्व्वस्वीकृतां प्राप्ता सतीत्यर्थः। यातुम् इतो निर्गन्तुम् अर्हसि, नतु अविशुद्धा। तथाहि विदूषकस्य वचनानुसारेण नैपुण्यान्तरं दर्शय ततो गच्छेति अन्यथा तस्मिन् तव अनभिज्ञतामानिन एते त्वत्तः हरदत्तशिष्यं वा प्रशस्तिं स्वीकुर्य्युः ततो मम महत् कष्टं निकर्षश्च स्यादिति भावः।

(प) सर्व्वासु अवस्थासु सकलास्वेव दशासु चारुता स्वाभाविकलावण्यं शोभान्तरं सौष्ठवातिशयं पुष्यति क्रोड़ीकरोति, तथाहि स्वभावसुभगं वस्तु यदा यमेव भावं प्रतिपद्यतां, तदा तेनैव भावेन रमणीयता तस्य अक्षुण्णा वर्त्तते, यतः स्वभावरमणीय-मिदमस्याः वपुः प्रस्थानवेलायामिव नृत्यानुशीलनवेलायामिव च निवर्त्तनवेलायामपि अधिकं रामणीयकं वहतीति भावः। तथाहि इत्यस्य पद्येनान्वयः।

---

গণ। বৎসে ! ক্ষণমাত্র অবস্থিতি করিয়া, শিক্ষিত বিষয়ের সবিশেষ পরীক্ষাপ্রদানপূর্ব্বক তাহাতে সর্ব্বসম্মতিক্রমে উত্তীর্ণা হইয়া গমন করিবে। (ন)

( মালবিকার অবস্থান। )

রাজা ( স্বগত ) অহো ! ইহাঁর সকল অবস্থাতেই সৌন্দর্য্য শোভান্তর পোষণ করিতেছে। ( প )

[ अन्वयः । सन्धिस्तिमितवलयं वामं हस्तं नितम्बे न्यस्य द्वितीयं ( हस्तं ) श्यामाविटपसदृशं स्रस्तमुक्तं कृत्वा, पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षम् ऋजु आयतार्द्धम् अस्याः स्थितं नृत्यात् अतितरां कान्तं ( विभाति ) । ६ । ]

---

६ । अथ शोभाविशेषं प्रागुक्तं विशेषदर्शनेन प्रतिपादयति—वाममित्यादिना । सन्धौ मणिबन्धे, भुजकरतलयोः सन्धिप्रदेशे वलयधारणयोग्यस्थाने इत्यर्थः । वामं हस्तं नितम्बे श्रोणिपृष्ठे न्यस्य स्थापयित्वा नृत्यप्रयोगकाले नारीणाम् एषा व्यवस्था यत् नितम्बपृष्ठे उत्तानीकृतं करं न्यस्य तद्विवर्त्तनमिति, द्वितीयं दक्षिणं हस्तं श्यामाविटपसदृशं श्यामालताशाखावत् स्रस्तमुक्तं शिथिलभावेन लम्बितं कृत्वा, अस्य हस्तस्य यथेष्टभावेन भङ्गीसाधनाय निरवलम्बनमेव रचणमिति । पादाङ्गुष्ठेन चरणस्य अङ्गुष्ठेन आलुलितानि ईषत् दलितानि कुसुमानि कुट्टिमशोभासम्पादनाय चिप्तानि पुष्पाणि यत्र तथाभूते रूपप्रकर्षार्थं धारितैः पुष्पसमूहैः नृत्यहेतुकगात्रचाञ्चल्यजननतः विस्रस्तैः परिव्याप्ते इति वा । कुट्टिमे गृहप्राङ्गणे, पातितम् अक्षि यस्य तथाभूतम्, एतद्धि मालविकायाः लज्जातिशयं प्रत्याययति, पादाङ्गुष्ठेन भूमिस्थवस्तुप्रसारणादीनां लज्जाजन्यत्वदर्शनात् सहृदयैरनुभवाच्च, स चायं शृङ्गारभाव इति । एवंक्रमेण ऋजु सरलम् अस्याः मालविकायाः आयतार्द्धम् आयतम् दीर्घं अर्द्धं शरीरं स्थितं गतितो निवृत्तम् अचञ्चलं सत् नृत्यात् नर्त्तनापेक्षया नृत्यकालापेक्षया इत्यर्थः । अतितराम् अतिमात्रं कान्तं रमणीयं विभातीति शेषः । अथवा आयतं विस्तृतम् अर्द्धं शरीरार्द्धं कटिमारभ्य चरणपर्य्यन्तभागः यत्र तथाभूतम् अस्याः स्थितम् अवस्थितिः, स्थितमित्यस्य भावप्रत्ययनिष्पन्नत्वात् अस्या इति कर्त्तरि षष्ठी, नृत्यात् नर्त्तनात् तदपेक्षया अतितरां कान्तं विभाति, तथाहि नर्त्तनकाले अस्या यथा सौन्दर्य्यविशेषो दृष्टः तदपेक्षया सम्प्रति सौन्दर्य्यमधिकमेव दृश्यते इति भावः । अत्र मालविकायाः गतिनिवृत्तौ यथायथस्य तदानीं योग्यस्य भावस्य वर्णनात् स्वभावोक्तिरलङ्कारः । श्यामाविटपसदृशमित्यत्र उपमा । चतुर्थपादेन नृत्यापेक्षया स्थितस्य रम्यतातिरेकवर्णनात् व्यतिरेकः । "कुट्टिमः ( पुं क्लीं ) मणिभू"रित्यमरटीकाकारभरतवचनात् कुट्टिमे मणिभूमौ इति अर्थयोग्यतासत्त्वेऽपि रङ्गभूमेस्तथात्वमदृष्टपूर्वमिति साधारणभूमिपर एवासौ, यदि च

देवी। णं गोदमवअणंवि अज्जो हिअए करेदि। [ननु गौतमवचनमप्यार्य्यो हृदये करोति।] (फ)

गण। देवि! मा मैवम्। देवप्रत्ययात् सम्भाव्यते सूक्ष्म-दर्शिता गौतमस्य। पश्य। (ब)

---

राजधानीगतरङ्गगृहस्य चिरन्तनस्य तथात्वं सङ्गतं मन्यते तदा नास्ति विप्रतिपत्तिलेशः अपि। वृत्तं मन्दाक्रान्ता नाम।

(फ) आर्य्यः सदसमद्विवेकपारदर्शी माननीयो भवान् गौतमस्य परिहासमात्रप्रियस्य न्याय्यमिदमन्याय्यमिदमिति विवेकशून्यस्य विदूषकस्य अथच गोतमः श्रेष्ठो गौः स एव गौतमः स्वार्थे ष्णः। तस्य गोसदृशस्य मूर्खस्य इत्यर्थः, वचनं वाक्यमपि मालविकाया-अवस्थानाय प्रयुक्तं 'भवति तिष्ठ किञ्चित्' इत्यादिरूपं हृदये करोति गृह्णाति, तद्वाक्य-ग्रहणेन मालविकां पुनः गतेः निवर्त्तयति, तथाहि नास्ति मालविकायाः पुनरवा-वस्थाने कोऽपि हेतुः तत् अलम् अस्या अवस्थानेनाव, दृष्टोपदेश्या एषा इदानीं गच्छतु इति भावः।

(ब) मा मैवम् गौतमः सुतरामनभिज्ञ इति न कथय, देवस्य राज्ञः विवेकशालिनः प्रत्ययात् विश्वासात् यतो विवेकी राजा अत्र विश्वसिति गुणागुणविचारे अत इत्यर्थः। गौतमस्य तत्साहचर्य्येण स्थितस्य विदूषकस्य सूक्ष्मदर्शिता सूक्ष्मविषयाधिगमक्षमता सम्भाव्यते अनुमीयते, तथाहि अहं निरन्तरं राजसहचरः, विश्वसिति च गुणागुण-

---

ইহার বাম করের বলয় সন্ধিস্থলে নিশ্চল হইয়া রহিয়াছে এবং দক্ষিণ হস্তের মুক্তাদাম স্রস্ত হইয়া পড়িয়াছে। তদবস্থায় ঐ বাম হস্ত নিতম্বে ন্যস্ত এবং দক্ষিণ হস্ত শ্যামালতার বিটপ সদৃশ করিয়া, পদাঙ্গুষ্ঠ দ্বারা কুট্টিমের কুসুম সমস্ত আলুলিত ও তাহাতে দৃষ্টি নিপতিত করত নৃত্য করিতেছে। সেই নৃত্যবশে ইহার শরীরের সরল দীর্ঘ অর্দ্ধভাগ মনোহারী হইয়া শোভা পাইতেছে ॥৬॥

দেবী। গৌতম যাহা বলেন, আর্য্যপুত্রের তাহাও মনে লাগে! (ফ)

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥७॥

[ अन्वयः। मन्दः अपि पङ्कच्छिदः फलस्य निकषेण आविलं पय इव विपश्चितः संसर्गेण अमन्दताम् एति। ७। ]

---

विचारादौ अस्मिन् राजा, तत् कथमगुणतायामस्य तथा सम्भवः ? नूनं राज्ञः साहचर्य्येण अस्य गुणागुणविचारक्षमता जाता इति भावः। पश्य इति क्रियायाः पद्यार्थः कर्म्म।

७। अथ विदूषकस्य राजसाहचर्य्यतः सूक्ष्मदर्शिता-समुत्पादनसमर्थकं सामान्यमाह—मन्द इत्यादिना। मन्दः मूर्खः अपि दोषगुणविचाराक्षमः अपि, पङ्कच्छिदः मलापहारिणः फलस्य "निर्म्मली" इति प्रसिद्धस्य कतकाख्यस्य फलविशेषस्य निकषेण घर्षणेन घृष्ट-तत्फलसम्पर्केण इत्यर्थः। आविलं पङ्कयुक्तं पयः जलमिव, विपश्चितः दोषदर्शिनः दोषगुणविचारक्षमस्य इत्यर्थः। संसर्गेण सम्पर्केण अमन्दताम् अनिन्दनीयतां मौढ्यशून्यां दोषगुणविचारक्षमतामिति यावत् एति प्राप्नोति, तथाहि "संसर्गजा दोषगुणा भवन्ती" ति नियमात् राज्ञः विवेकशालिनः संसर्गेण अस्यापि सा शक्तिः जाता इति अस्य वचनं गुणदोषविचारावसरे अवश्यमपेक्षणीयम् इति नाहमुपालभ्य इति भावः। अत्र गद्यस्थवाक्यं प्रति पूर्व्वार्द्धस्य सामान्यस्य समर्थकतया विन्यासात् अर्थान्तरन्यासः, सामान्य-विशेषभावेन श्लोकमात्रे आलोचिते तु पूर्वार्द्धेन सामान्येन अप्रस्तुतेन गद्योक्तविशेषस्य व्यञ्जनया प्रत्ययात् अप्रस्तुतप्रशंसालङ्कारः। तस्यैव पूर्वार्द्धस्य प्रतिपाद्ये परार्द्धस्य उपमानविधया व्यवस्थापनात् उपमा इत्यनयोरङ्गाङ्गिभावेन सङ्करः। मन्दोऽपि इत्यपि-शब्देन का कथा विचक्षणस्य इति विचक्षणस्य समुच्चयात् दण्डापूपिकया न्यायात् अर्थापत्तिरलङ्कारस्य।

---

গণ। দেবি! এরূপ বলিবেন না। মহারাজের সংসর্গে থাকিয়া তদীয় ভূয়োদর্শিতাপ্রভাবে গৌতমের সূক্ষ্মদর্শিতা সম্ভাবিত হইয়াছে। দেখুন। (ব)

কতক ( নির্ম্মলী ) বৃক্ষের ফলচূর্ণসংশ্রবে পঙ্কিল সলিল যেমন নির্ম্মল হয়, সেইরূপ সুধীজনের সংসর্গে থাকিয়া মূঢ়েরও জ্ঞানসঞ্চার হইয়া থাকে ॥৭॥

(विदूषकं विलोक्य) तच्छृणुमो विवक्षितमार्य्यस्य। (भ)

विदू। (गणदासं विलोक्य) कोसिइं दाव पुच्छ। पच्छा जो मए कम्मभेदो दिट्टो तं भणिस्सम्। [कौशिकीं तावत् पृच्छ। पश्चात् यो मया कर्म्मभेदो दृष्टस्तं भणिष्यामि।] (म)

गण। भगवति! यथादृष्टमभिधीयतां गुणो वा दोषो वेति। (य)

---

(भ) तत् उक्तरूपकारणात्, आर्य्यस्य भवतः विदूषकस्य विवक्षितं वक्तुमभीष्टं वस्तु शृणुमः, यो भवता कर्म्मभेदोऽत्र दृष्टः स कथ्यतामिति भावः।

(म) कौशिकीं पण्डितपरिव्राजिकां तावत् प्रथमं पृच्छ, सैव कर्म्मभेदं कथयिष्यति, अथ सा न कथयितुं पारयति तदा अहं कथयिष्यामि इत्याह पश्चात् इत्यादिना। पश्चात् तस्याः प्रश्नानन्तरम् इत्यर्थः। तं कर्म्मभेदं मया दृष्टं पूर्व्वमित्यर्थः। भणिष्यामि कथयिष्यामि यथा तमपि वः शिष्या मालविका दर्शयित्वा विशुद्धसमुपदेशा स्यादिति भावः।

(य) गुणः प्रशस्तिः दोषः निन्दा वा अस्या उपदेशदर्शने इति शेषः। यथादृष्टं दृष्टम् अनतिक्रम्य, यथादृष्टं तव यदि गुणो दोषः वा जातः तं कथय, तथैव दोषचालनेन अस्या विशुद्धत्वसम्भावना इति नान्यथा इति भावः।

---

(বিদূষকের প্রতি দৃষ্টিপাত করিয়া) আপনার বক্তব্য কি,—শ্রবণ করিতে ইচ্ছা করি। (ভ)

বিদূ। (গণদাসের প্রতি দৃষ্টি নিক্ষেপ করিয়া) আগে এই কৌশিকীকে জিজ্ঞাসা করুন। আমি যে কার্য্যব্যতিক্রম লক্ষ্য করিয়াছি, তাহা পশ্চাৎ বলিব। (ম)।

গণ। ভগবতি! যেরূপ দেখিলেন,—তদনুসারে গুণ বা দোষ নির্দ্দেশ করুন। (য)।

परि। यथाद्दृष्टं सर्वमनवद्यम्। कुतः? (र)

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमुपगतस्तन्मयत्वं रसेषु।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥८॥

[ अन्वयः। अन्तर्निहितवचनैः अङ्गैः सम्यक् अर्थः सूचितः, पादन्यासः लयमुपगतः, रसेषु तन्मयत्वम् ( जातम् )। अभिनयः शाखायोनिः मृदुः। तद्विकल्पानुवृत्तौ स एव रागबन्धः भावः विषयात् भावं नुदति। ८। ]

---

(र) यथा दृष्टम् अस्माभिः यत् तत् वस्तु अवलोकितं तत् तत् सर्व्वम् अनवद्यम् अनिन्दनीयं, सर्व्वमेव प्रस्तुतमनया प्रशंसायोग्यं, न किमपि दुष्टं निन्द्यं तत् सदोषमिति कथयेयमिति भावः। कुतः कस्मात् हेतोः सर्वमनवद्यमित्याकाङ्क्षायाः पद्येन निराकरणं भविष्यति।

८। अथ सर्वाभिनयानाम् अनवद्यताकारणं निर्द्दिशति—अङ्गैरित्यादिना। अन्तः अभ्यन्तरे निहितानि स्थापितानि वचनानि येषां तैः इव वाक्यैरिव सुस्पष्टमर्थम् प्रतिपादयद्भिः अङ्गैः करचरणनयनाद्यङ्गभङ्गीविशेषैः तत्तदवयवैश्च सम्यक् सुव्यक्तभावेन अर्थः अभिप्रायः सूचितः प्रकाशितः, तथाहि गानकाले अङ्गभङ्गीविशेषैः 'दुल्लहो पिओ' इत्यादिवचनार्थः सम्यक्परिव्यञ्जित इति भावः। पादयोः चरणयोः न्यासः नृत्यकाले विन्यासः लयं कालक्रियमाणम् उपगतः प्राप्तः। नृत्यगीतावसरे चरणतालाः सम्यक् समर्पिता इति भावः। रसेषु प्रोक्तद्विपञ्चलिकान्तर्गतशृङ्गारविशेषेषु तन्मयत्वं तत्प्रतिपाद्य नायिकायाः सादृश्यं जातमिति शेषः। तथाहि सन्नायिकाया अवस्थानुकरणेन इयं गायति अनया तस्या अभेद एव सुतरामुपगम्यते प्रकर्षो भूयानयमभिनयस्येति।

---

পরি। যাহা দেখান হইল, তাহার কিছুই নিন্দনীয় হয় নাই। কারণ—( র )

गण । देवः कथं मन्यते ? । (ल)

---

अभिनयः नायकाद्यवस्थानुकरणं, शाखा नृत्यकाले करतालदानं सैव योनिः उत्पत्ति-भूमिः यस्य तथाभूतः सन् मृदुः मार्दवयुक्तः, तस्य अभिनयस्य अभिनेयवस्तुन इत्यर्थः । विकल्पाः विविधाङ्गभङ्ग्यः तेषाम् अनुवृत्तौ अनुकरणे, तस्मिन् अभिनये ये विकल्पाः तदनुवृत्तौ इति वा । भावः चेष्टा अङ्गचालनादिकमित्यर्थः । स एव अभिनेयस्य तुल्य एव तस्मादीषत् अन्यून अतिरिक्त इत्यर्थः । रागबन्धः अनुरागसमूहः, विषयात् एतदन्य-विषयात् भावम् आसक्तिं नुदति निराकरोति । एतद्धि सर्व्वमस्याः प्रशस्यतममिति भावः । अत्र गद्यगतं सर्व्वतोऽनवद्यत्वं प्रति अङ्गैरित्यादिप्रतिपाद्यानां बहूनां वस्तूनां करणत्वात् एककार्य्यं प्रति बहुकारणकत्वरूपः समुच्चयालङ्कारः । अङ्गेषु अन्तर्निहितवचनत्वस्य सम्भावनायाः गम्यत्वात् गम्योत्प्रेचा । तन्मयत्वमित्यत्रापि तन्मयत्वमिव इति सम्भावनाया गम्यत्वात् गम्योत्प्रेचान्तरम् इत्येतेषां सङ्करः । भावो भावमिति व्यञ्जनसङ्घस्य यथा-क्रममावृत्त्या छेकानुप्रास इति संसृष्टिः ।

"शाखा तु नृत्यहस्तानां या मावा चित्तनर्त्तनी" इति कोषविशेषे । "भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु । प्रियालीलापदार्थेषु विभूतिबुधजन्तुषु" इति मेदिनी । शृङ्गारस्य प्रकृतस्य एकत्वेऽपि तदङ्गभावादीनां बहूनां साहचर्य्येण रसेष्वित्यत्र बहुत्व-मुपपन्नम् । वृत्तं मन्दाक्रान्ता नाम ।

(ल) देवः महाराजः कथं कीदृशं मन्यते जानाति मालविकाया अभिनयमिति शेषः । अस्या दोषगुणौ महाराजः निर्व्वक्तु इति भावः ।

---

মুখে কোন কথা না বলিলেও, অঙ্গবিক্ষেপ দ্বারা সম্যক্‌রূপে অর্থ প্রকাশিত হইয়াছে। পাদন্যাস সর্ব্বথা লয়সঙ্গত, রসসকলেও তন্ময়তা লক্ষিত, অভিনয় যেরূপ মৃদু, সেইরূপ হস্তাশ্রিত; তত্তৎ অভিনয়ের নায়কাদির তত্তৎ দেহাদিচেষ্টা সমস্ত ভাবসঙ্গত এবং রাগবন্ধ হৃদয়কে বিষয়ান্তর হইতে আকর্ষণ করিতেও সমর্থ হইয়াছে। ( ৮ )

গণ। মহারাজ কিরূপ মনে করেন ? ( ল )

राजा । वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः । (व)

गण । अद्य नर्त्तयितास्मि । (श)

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न विद्वत्सु यः काञ्चनमिवाग्निषु ॥९॥

[ अन्वयः । अग्निषु काञ्चनम् इव यः ( उपदेशः ) विद्वत्सु श्यामायते, सन्तः उपदेशिनः तम् उपदेशं शुद्धं विदुः । ९ । ]

---

(व) वयम् अहं विदूषकादयो मम परिजनाश्च इत्यर्थः । स्वपक्षे आत्मनः पक्षे हरदत्तविषये इत्यर्थः । शिथिलः शैथिल्यं प्राप्तः, अभिमानः अहङ्कारः येषां तथाभूताः, संवृत्ताः जाताः, तथाहि गणदासशिक्षितायाः मालविकायाः शिक्षानैपुण्यप्रदर्शनेन एवं मन्ये यत् हरदत्तशिक्षितः शिष्यः नैवं नैपुण्यं दर्शयितुमलं तेनैव हरदत्तात् अस्मद्गृहीतात् गणदासस्य राज्ञीपरिगृहीतस्य उत्कर्ष इति वयमात्मपक्षस्य निकर्षमानिन इति भावः । एतद्धि आत्मपक्षनिकर्षप्रतिपादनेन निर्वेदप्रदर्शनमात्मनो मालविकामधिकृत्य राज्ञीसमीपे निर्द्दोषत्वप्रतिसन्धानाय इति मन्तव्यम् ।

(श) अद्य अस्मिन् मालविकाया उपदेशस्य राजसमीपे प्रकर्षप्रतिपत्तिमयि दिवसे इत्यर्थः । नर्त्तयिता प्रशस्तः नर्त्तकः अभिनयकलाशिक्षकः अस्मि । अद्यैव मम शिक्षा-प्रकर्षोदये शिक्षाप्रशस्तिर्जाता इति भावः ।

९ । अथ प्रशस्तनर्त्तयितृत्वस्य समर्थनाय आह—उपदेशमित्यादि । सन्तः सदसद्-विज्ञानपारदर्शिनः जनाः उपदेशिनः शिक्षकस्य तम् उपदेशं शिक्षां शुद्धं निर्द्दोषं प्रशस्तमित्यर्थः, विदुः जानन्ति, साधुसमाजे सैव शिक्षा प्रकर्षाय कल्पते इत्यर्थः । यः उपदेशः अग्निषु अनलेषु काञ्चनं स्वर्णमिव विद्वत्सु सुधीसमाजेषु न श्यामायते मालिन्यं गच्छति । तथाहि अद्य मालविकायां निहितस्य मदुपदेशस्य विदुषां राज-प्रभृतीनां समीपे शुद्धतया परिग्रहस्य उत्पादात् विशुद्धिः जाता तद्द्वारेण च ममापि

---

রাজা। স্বপক্ষে আমাদের অভিমান শিথিল হইয়াছে। ( ব )

গণ। আজ তবে আমি বাস্তবিকই একজন প্রশস্ত নর্ত্তক হইলাম। (শ)

देवी। दिट्ठिआ परिक्खाराहणेण अज्जो वड्ढदु। [ दिष्ट्या परीक्षाराधनेन आर्य्यो वर्द्धताम्। ] (ष)

राजा। देवि! त्वत्परिग्रहोऽपि मे वृद्धिहेतुः। ( विदूषकं विलोक्य। ) गौतम! वदेदानीं यत्ते मनसि वर्त्तते। (स)

---

उपदेशस्य परमोत्कर्ष इति भावः। अत्र उत्तरार्द्धेन अग्निभिः विदुषां काञ्चनेन च उपदेशस्य साम्यप्रत्ययात् उपमा, श्यामत्वाभावः सामान्यधर्म्मः। सर्वांशे च सामान्येन अप्रस्तुतेन विशेषस्य प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। उत्तरार्द्धप्रतिपाद्यस्य अर्थस्य उद्देश्यतया पूर्व्वार्द्ध प्रतिपाद्यस्य च विधेयतया "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत" इति नियमविरोधेनात्र निर्द्देशात् विधेयाविमर्षदोष इति निपुणाः, तत्समाधनञ्च श्लोकार्द्धयोः पौर्व्वापर्य्यव्यतिक्रमेण शक्यम्। उपमानोपमेययोर्लिङ्गवैषम्येऽपि श्यामायमानत्वाभावरूपसामान्यधर्म्मवाचकपदयोर्लिङ्गभेदेन वैरूप्याभावात न भग्नप्रक्रमत्वदोषः, यत्र सामान्यधर्म्मवाचकपदम् उपमानमात्रवाचकपदेन उपमेयमात्रवाचकपदेन वा सरूपलिङ्गं तत्रैव तद्दोषापातात् इति। तदुक्तं काव्यप्रकाशे "लिङ्गसंख्याविभेदेऽपि उपमानोपमेयता। विभक्तिः पुनरेकैव उपमानोपमेययो"रिति।

(ष) दिष्ट्या भाग्येन परीक्षायाः उत्कर्षापकर्षपरिचयदानस्य आराधनेन आश्रयणेन शिक्षया आत्मनः उत्कर्षप्रतिपादनेन इत्यर्थः। आर्य्यः भवान् वर्द्धताम्, एवमार्य्यस्य चिरम् उत्कर्षः जायतां, मम तु नात्र महती प्रीतिरस्ति : अनेनोपक्रमेण मालविकायां राज्ञः प्रणयस्य गाढतायाः जायमानत्वादिति साकूतमिव देव्या वचनमिति निपुणाः।

(स) त्वत्परिग्रहः त्वया आत्मीयतया स्वीकार इत्यर्थः। अपिः समुच्चये, मे मम

---

কেননা, অনলে স্বর্ণ যেমন মলিন হয় না, সেইরূপ সুধী-সমাজে যাহার কোন প্রকার মালিন্য লক্ষিত হয় না, উপদেষ্টার সেই উপদেশই সাধুগণ সর্ব্বথা নির্ম্মল বলিয়া অবগত আছেন। ( ৯ )

দেবী। আর্য্য! সৌভাগ্যবলে পরীক্ষা দ্বারা সভ্যগণের মনোরঞ্জন করিয়া উৎকর্ষ লাভ করুন। (ষ)

विदू । **पढ़मोपदेसदंसणी पढ़मं बह्मणपूजा कादव्वा, सा णं वो विसुमरिदा ।** [ प्रथमोपदेशदर्शने प्रथमं ब्राह्मणपूजा कर्त्तव्या । सा ननु वो विस्मृता । ] (ह)

---

हन्दे : उत्कर्षस्य हेतु: कारणं, तथाहि न केवलं मम गुणा एवात्र प्रकर्षे हेतव:, परं त्वया आत्मीयतया मम स्वीकार: अपि, अन्यथा कथं ईदृशे सङ्गरावसरे राजसमीपमुपेत्य प्रकर्षनिर्द्धारणावकाशोऽपि मे स्यादिति भाव: । अथ सर्वैरेव प्रायेण स्वीकृते गणदासस्य प्रकर्षे विदूषकस्य प्रागुक्तासम्मतिप्रकारमपमार्ज्जयितुकाम: तत्सम्मतिलाभाय तद्वक्तव्यं प्रयोजयति—गौतमेत्यादिना । इदानीं सर्वै: स्वीकृते मालविकाया मम शिष्याया: प्रकर्षे इत्यर्थ: । ते तव मनसि तस्या: गुणागुणविषयकं यद्वस्तु वर्त्तते, तत् सर्वं कथय यथा सा तत्साधनेन विशुद्धोपदेशा भूत्वा निष्क्रामेदिति भाव: ।

(ह) प्रथमोपदेशदर्शने आदिमशिक्षाप्रदर्शनावसरे, तदुपक्रमे इत्यर्थ: । प्रथमम् आदौ ब्राह्मणस्य पूजा मानप्रदर्शनं भोज्यवस्तुप्रभृतिभि: समर्च्चनम् इत्यर्थ: । कर्त्तव्या विधेया । सा ब्राह्मणपूजा व: युष्माकं युष्माभिरित्यर्थ: । विस्मृता विस्मृतिविषयतां नीता इत्यर्थ: । तथाहि यत् प्रथमशिक्षाप्रदर्शनस्य आदौ ब्राह्मणस्य मम भोज्यादिभिरभ्यर्थनं न कृतं तत् एव सुतराम् अन्याय्यं कृतमिति तदिदानीमपि कथञ्चित् तस्य दोषस्य शोधनाय अलं भविष्यसि इति भाव: । एतेन विदूषकस्य औदरिकत्वं स्वलक्षणमुपक्रम्य महापरिहासयुक्तं नैपुण्यं प्रदर्श्य सङ्गीतवचनस्यापि अनुद्भावनेन नितान्तमनभिज्ञत्वं सङ्गीतविषये प्रतीयते इति ज्ञेयम् ।

---

গণ। দেবি! আপনি যে আমাকে আত্মীয়বোধে অনুগ্রহ করিয়া থাকেন, তাহাও আমার উৎকর্ষের কারণ। (বিদূষকের দিকে দৃষ্টিনিক্ষেপ করিয়া।) গৌতম! আপনার অভিপ্রায় কি, এক্ষণে বলুন। (স)

বিদূ। প্রথম উপদেশপ্রদর্শনসময়ে প্রথমে ব্রাহ্মণের অর্চ্চনা করিতে হয়। আপনারা তাহা বিস্মৃত হইয়াছেন। (হ)

परि। अहो! प्रयोगाभ्यन्तरः प्रश्नः! (च)

[ सर्वे प्रहसिताः। ] (क)

[ मालविका स्मितं करोति। ] (ख)

राजा। (स्वगतम्।) उपात्तसारश्चक्षुषा मे स्वविषयः। यदनेन।—(ग)

---

(च) प्रश्नः "तं दाव पुच्छिस्सं" इत्यत्रैव अत्रापि प्रच्छधातोः वचनमर्थः। प्रथमोपदेशेत्यादि—प्रयोगः कस्यचिद्गूढार्थस्य विज्ञापनम् अभ्यन्तरे गर्भे यस्य तथाभूतः, "मह्यं किञ्चित् भोज्यादिकं त्वया दातव्यम्" इत्येवंविधभावार्थप्रतिपादकमिति भावः।

(क) सर्वे तत्रत्याः सकलसामाजिकाः प्रहसिताः हासं कृतवन्तः, प्रहसिता इत्यत्र हसेरकर्म्मकत्वात् आदिकर्म्मणि वा क्तप्रत्ययः। विदूषकस्य मधुरं सङ्गीतरसं विहाय भोज्यवस्तुषु समधिकानुरागात् इति।

(ख) स्मितं "ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम्" इति साहित्यदर्पणोक्तलक्षणकं हास्यविशेषं करोति। एतच्च लज्जायाः विनयस्य माधुर्य्यस्य च लक्षणमभिव्यक्तमिति मन्तव्यम्। अभिनयप्रयोगे विशुद्धिमसुपस्थानेन इदमेव मालविकाया आत्मवृत्तिं महतीं व्यनक्ति।

(ग) अथेदानीं मालविकायाः कौशलेन हृष्टो राजा चक्षुषः सार्थक्यं व्यनक्ति—उपात्तेत्यादिना, मे मम चक्षुषा नेत्रेण स्वविषयः आत्मनो विषयः दृश्यं वस्तु उपात्तः गृहीतः सारः उत्कृष्टः अंशः यस्मात् यस्य वा तथाभूतः, तथाहि दृष्टं मया द्रष्टव्यमिति भावः। यत् यस्मात् अनेन चक्षुषा इति इदं श्लोकार्थं गृहीतान्वयम्।

---

পরি। ইহা প্রয়োগেরই মধ্যগত প্রশ্ন বটে। (ক্ষ)

সকলের হাস্য। (ক)

মালবিকারও মৃদু হাস্য। (খ)

রাজা। (স্বগত) আমার চক্ষু স্বকীয় বিষয়ের সারগ্রহণ করিল; অর্থাৎ যাহা দেখিবার, তাহা দেখিয়া লইল। যেহেতু ইহা। (গ)

स्मयमानमायताक्ष्याः किञ्चिदभिव्यक्तदशनशोभि मुखम्।
असमग्रलक्ष्यकेशरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

[ अन्वयः। उच्छ्वसत् असमग्रलक्ष्यकेशरं पङ्कजमिव स्मयमानं किञ्चिदभिव्यक्तदशनशोभि आयताक्ष्याः मुखं दृष्टम्।१०। ]

गण। महाब्राह्मण! न खलु प्रथमं नेपथ्यदर्शनमिदम्, अन्यथा कथं त्वां दक्षिणीयं नार्च्चयिष्यामः। (घ)

---

१०। अथ उपात्तसारत्वं चक्षुषः प्रतिपादयति—स्मयेत्यादिना। उच्छ्वसत् उच्छ्वासं विकाशं गच्छत् असमग्रम् असम्पूर्णं लक्ष्यं दृश्यतां गतं केशरं किञ्जल्कजालं यस्य तथाभूतम् ईषदभिव्यक्तकिञ्जल्कजालं पङ्कजमिव पद्ममिव स्मयमानं मृदुहास्यसमन्वितं किञ्चित् स्वल्पमात्रम् अभिव्यक्तैः प्रकाशं गतैः दृश्यतां गतैरित्यर्थः। दशनैः दन्तैः शोभते यत् तत् आयताक्ष्याः विशालनेत्रायाः मुखं दृष्टम् अवलोकितम्। अत्र मुखगतस्मितस्य पङ्कजगतविकाशेन दशनानां केशरैः पङ्कजेन सह मुखस्य सादृश्यमिवशब्देन प्रतिपाद्यते इति पूर्णोपमालङ्कारः। उच्छ्वासपदार्थस्य असमग्रलक्ष्यकेशरत्वं प्रति स्मयमानत्वस्य च अभिव्यक्तदशनशोभित्वं प्रति हेतुत्वप्रत्ययात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्चेति उभयोरङ्गाङ्गिभावात् सङ्करः। पङ्कात् जायते यत् तत् पङ्कजमिति व्युत्पत्त्या निकृष्टपदोद्भूतत्वं प्रतीतं पद्मस्य, तेनैव मालविकायाः परिचारिकापदमध्यासीनाया मुखस्य सादृश्यं सुसमञ्जसं, तदानीमपि तस्या राजकुलजननाविज्ञानादिति।

(घ) महाब्राह्मण, परिहासोक्तिरियं, सा च परिहासोक्तिः गणदासस्यापि आचार्य्यतया माननीयत्वात् विदूषकं प्रति नायौक्तिकी। "शङ्ख तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति नियमात्

---

আমার নয়ন আয়তলোচনা মালবিকার মৃদুলহাস্যযুক্ত মুখমণ্ডল দেখিয়া সর্ব্বথা তৃপ্ত হইয়াছে। ঐরূপ ঈষৎ হাস্যবশে দশনপংক্তি কিঞ্চিৎ বিকসিত হওয়াতে মনে হয়, যেন অসমগ্রলক্ষিত কেশরযুক্ত বিকসিত পদ্ম শোভা পাইতেছে ॥১০॥

विदू। **मए णाम सुक्खघणगज्जिदे अन्तरिक्खे जलपाणेण चादआइदम्।** [मया नाम शुष्कघनगर्जिते अन्तरीक्षे जलपानेन चातकायितम्।](ङ)

---

द्विजशब्दलभ्यब्राह्मणरूपार्थप्रतिपादकब्राह्मणशब्दात् पूर्व्वं महच्छब्ददानात् निकृष्टजातीय-ब्राह्मणप्रतीतिः, द्विजादीनामर्थपरनिर्द्देशस्य तत्र अभिप्रेतत्वात्। तथाच—"पुण्यो महाब्रह्मसमूहजुष्ट" इत्यत्र भरतटीकायां "शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे" इत्यादि निषेधान्महता ब्रह्मसमूहेन जुष्ट इति वा विग्रह्यते" इति। केचित्तु शूद्रादिपदं न तत्तदर्थकशब्दान्तरपरमपि स्वरूपतस्तेषामेव उपदानादिति न प्रकृते परिहासः परं विदूषकस्य ब्राह्मणगतमहत्त्वप्रतिपादक एव इति वदन्ति।

इदं दृश्यमानं नेपथ्यदर्शनं रङ्गभूमिलाभयोग्यवेशपरिग्रहः तद्वेशपरिधानेन रङ्ग-भूमौ अवतरणमिति भावः। प्रथमं न स्वध्वंसानधिकरणकालवृत्ति आदिममित्यर्थः। "आकल्पवेशौ नेपथ्यं प्रतिकर्म्मप्रसाधन" मित्यमरः। तथाहि यदीदं प्रथमनेपथ्य-दर्शनमभविष्यत् तदैव अग्रे ब्राह्मणपूजादिरूपसद्विधानस्य अवश्यकर्त्तव्यता अभविष्यत्, यत इदं न प्रथमनेपथ्यदर्शनम् अतएव ब्राह्मणपूजामकृत्वा प्रयोगप्रदर्शनं न तथा दोषाय, प्रथमप्रयोगदर्शन एव तदकरणे प्रत्यवायादिति भावः।

एतदेव स्पष्टमाह—अन्यथेत्यादिना। अन्यथा अस्य नेपथ्यदर्शनस्य प्राथमिकत्वे कथं केन हेतुना दक्षिणीयं दक्षिणार्हम् अतिशयसम्मानभाजनं त्वां न अर्च्चयिष्यामः, अत्र लृट्प्रयोगश्चिन्त्यः, केचित्तु विसर्गहीनं पठित्वा क्रियातिपत्तौ लृट्प्रत्ययं ब्रुवते। अन्यथे-त्यादि वाक्यमपि परिहासव्यञ्जकमिति रसिकाः, पूर्व्वापरपर्य्यालोचनया दक्षिणीयमिति विशेषणस्य तन्निर्वाहकत्वात्।

(ङ) अथ स्वप्रार्थितभोज्यलाभाभावेन दुःखमात्मनो निवेदयति—मयेत्यादिना। शुष्कैः जलशून्यैः घनैः मेघैः गर्ज्जिते शब्दिते अन्तरीक्षे आकाशे जलपानेन जलपानेच्छया, चातकेन इव आचरितम् आचारार्थे आयिः क्यङ् वा ततः अप्रत्ययः। तथाहि यथा

---

गण। ওহে মহাব্রাহ্মণ! ইহাই প্রথম নেপথ্য-প্রদর্শন নহে। প্রথম হইলে, সর্ব্বথা দক্ষিণার উপযুক্ত আপনার পূজা কেন না করিব? (ঘ)

परि। एवमेव। (च)

विदू। तेण हि पण्डिदपरितोसपच्चआ णं मूढ़ा जादी। जदि अत्तभोदीए सोहणं भणिदं, तदो इमं से पारितोसिअं पअच्छामि। (इति राज्ञो हस्तात् कटकमाकर्षति।) [तेन हि पण्डितपरितोष-प्रत्यया ननु मूढ़ा जातिः। यद्यत्रभवत्या शोभनं भणितं तत इदमस्यै पारितोषिकं प्रयच्छामि।] (छ)

---

अन्तरीक्षे शरदि निर्ज्जलानामपि मेघानां गभीरं गर्ज्जनं श्रुत्वा तोयोन्मुखः सन् चातकः जलमाकाङ्क्षति किन्तु तत् नोपलभते तथैव अहम् अपि अतिक्रूपणस्य गणदासस्य समीपे भोज्यं प्रार्थयमानः भोज्यं नाप्तवान् परं तदभावेन दुःखातिशयमेव इति भावः। अत्र चातकायितमिति आयिप्रत्ययगतोपमालङ्कारः।

(च) एवमेव गणदासोऽतिकृपणः त्वञ्च तथा चातक इव व्यवहारी जात इति भावः। एतच्च सकौतुकमेव वचनमस्या इति।

(छ) तेन सर्व्वेषामेव पण्डितसभ्यानां मालविकाया अभिनयचातुर्य्यसन्दर्शनतः परितोषातिशयेन। मूढ़ा विज्ञानरहिता आत्मना सदसज्ज्ञानशून्या इत्यर्थः। जातिः अस्माद्दृशसम्प्रदाय इत्यर्थः। पण्डितानां परितोषे एव प्रत्ययः विश्वासः यस्याः तथा-भूता, तथाहि मूढ़ाः स्वयं किमपि सद्वा असद्वा न निर्व्वाचयितुं क्षमन्ते परं पण्डितानां यत्र सन्तोषः तदेव सत् पण्डितानां यत्र अपरितोषः तदेव च असत् इति निर्द्धारयन्तः सदसद्वा निर्व्वाचयन्ति अतएव युष्माकं प्रत्ययेन इदं सदेव निर्द्धारयामीति भावः। यदि अत्रभवत्या अभिनयकौशलेन माननीयया मालविकया शोभनं साधु भणितं कथितं गीतमित्यर्थः। अथवा अत्रभवत्या ग्राम्यवाचा मान्यया कौशिक्या शोभनं साधु यथार्थमित्यर्थः। भणितं "मालविका विशुद्धोपदेशा" इति कौशिक्युक्तं यदि

---

विदू। আমাকে নিশ্চয়ই শুষ্কমেঘগর্জ্জিত অন্তরীক্ষে জলপান বাসনা করিয়া চাতকবৃত্তি অবলম্বন করিতে হইল। (ঙ)

পরি। তাহাই বটে। (চ)

देवी। **चिट्ठ दाव। गुणान्तरं अआणन्तो किंणिमित्तं तुमं आहरणं देसि?** [ तिष्ठ तावत्। गुणान्तरमजानन् किंनिमित्तं त्वमाभरणं ददासि? ] (ज)

विदू। **परकेरंत्ति करिअ।** [ परकीयमिति कृत्वा। ] (झ)

---

यथार्थमित्यर्थः। ततः तस्मात् इदम् आकृष्यमाणं राज्ञः कटकरूपं वस्तु पारितोषिकं परितोषविज्ञापकमुपहारं प्रयच्छामि, गुणवत्या मालविकायाः प्रकृष्टोपहारार्हत्वात्। इति उक्त्वा इति शेषः। राज्ञः अग्निमित्रस्य, कटकं वलयम् आकर्षति मोचयितुं व्याप्रियते।

(ज) अथ धारिणी एतावत् सहमाना राज्ञः कटकस्य मालविकायै अर्पणं परिणामे सुतरामात्मानिष्टफलकमवधार्य्य विदूषकं तदर्पणाद् वारयति—तिष्ठेत्यादिना, तिष्ठ प्रक्रान्तकार्य्यात् विरम, गुणान्तरम् उत्कर्षाधायकगुणविशेषं अजानन् अननुभवन् किंनिमित्तं केन हेतुना आभरणं राज्ञः कटकरूपमलङ्कारं ददासि मालविकायाः उपहारतया उपनयसि, गुणमधिकृत्य प्रकर्षाभिज्ञैर्नैव उपहारो दीयते त्वं स्वयमनभीज्ञस्तत्र प्रवृत्तो नूनमन्याय्यकारी गर्ह्योऽसीति प्रक्रान्तनिवृत्तौ हेतुरुक्तः।

(झ) धारिण्या "किंनिमित्त"मिति कृतस्य हेतुप्रश्नस्य उत्तरमाह—विदूषकः परेत्यादिना। परकीयं परस्वामिकमिति कृत्वा अनेन निमित्तेन इदम् आभरणं ददामीति भावः। तथाहि यदीदम् आत्मीयं वस्तु अभविष्यत् तदा स्वचतिसम्भावनया नेदमदास्यं

---

বিদূ। যাহারা আমার ন্যায় মূর্খশ্রেণীর অন্তর্নিবিষ্ট, পণ্ডিতদিগের-পরিতোষেই তাহাদের প্রত্যয় জন্মিয়া থাকে—অর্থাৎ তাহারা নিজে কোনরূপ মীমাংসা করিতে পারে না, পণ্ডিতদিগকে সন্তুষ্ট দেখিলেই, তত্তৎ বিষয়ে তাহাদের সন্তোষ জন্মে। যেহেতু, আপনি ইতঃ পূর্ব্বে মালবিকার নৃত্যগীত সর্ব্বথা প্রশংসাযোগ্য এই কথা বলিয়াছেন, সুতরাং আমি ইহাকে এই পারিতোষিক দিতেছি। (ছ)

[ এই বলিয়া রাজার হস্ত হইতে বলয় আকর্ষণ। (জ) ]

देवी। (आचार्य्यं विलोक्य।) अज्ज गणदास! णं दंसिदोवदेसा दे सिस्सा? [आर्य्य गणदास! ननु दर्शितोपदेशा ते शिष्या?] (ञ)

गण। वत्से! एहि, गच्छाव इदानीम्।

[मालविका सहाचार्य्येण निष्क्रान्ता।] (ट)

---

किन्तु परकीयवस्तुदाने नास्ति मम कापि क्षतिरिति ददामीति भावः। अनेन कथञ्चित् राज्ञ्या मानसमपि रचितं भवति गुणपारवश्यादनात्मवस्तूनामपि स्वतएव दाने प्रवृत्तिसम्भवात् इति।

(ञ) आचार्य्यं गणदासम्। ते तव शिष्या मालविका, दर्शितः अभिनयेन दृश्यतां नीतः उपदेशः शिक्षाविषयो यया यथाभूता, ननुः प्रश्ने, तथाहि किमेतदन्तं भवतः शिष्याया उपदेशदर्शनम् उत अन्यदपि अस्ति अथवा नास्त्येव एतावतैव राज्ञोऽभिलषितसिद्धेरिति भावः व्यज्यते, अनेन विषयेण आत्मनोऽनिष्टोत्पत्तेर्गणदासस्य तद्विषयप्रवर्त्तकस्य उपरि कोपो धारिण्याः प्रतीयते। अथ इदानीमपि प्रस्थीयतां ते शिष्यया इति गूढार्थः। अत्र मालविकाया निष्क्रमणसाधकेन देवीवचसा राज्ञो हितस्य प्रतिबन्धात् निरोधाख्यं सन्ध्यङ्गम्।

(ट) इदानीम् उपदेशस्य विशुद्धतायां जातायाम् इत्यर्थः। गच्छावः त्वम् अहञ्चेति शेषः। आचार्य्येण उपदेशकेन गणदासेन सह निष्क्रान्ता रङ्गात् वहिर्गता।

---

দেবী। অপেক্ষা করুন। কিরূপ গুণ পুরস্কার লাভ করিতে পারে তাহা আপনি না জানিয়াই, কি নিমিত্ত আভরণ দান করিতেছেন? (জ)

বিদূ। পরের জিনিষ বলিয়াই দিতেছি। (ঝ)

দেবী। (আচার্য্যের দিকে দৃষ্টিপাত করিয়া) আর্য্য গণদাস! আপনার শিষ্যার উপদেশ দেখান হইয়াছে ত? (ঞ)

গণ। বৎসে! এস, আমরা এক্ষণে যাই। [আচার্য্যের সহিত মালবিকার নিষ্ক্রমণ। (ট)]

विदू। (जनान्तिकम्।) एत्तिओ मे मदिविहवो भवन्तं सेविदुम्।
[ एतावान् मे मतिविभवो भवन्तं सेवितुम्। ] (ढ)

राजा। अलमलं परिच्छेदेन ? अहं हि।—(ड)

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणम् ॥११॥

[ अन्वयः। तस्याः तिरस्करणम् अक्ष्णोः भाग्यास्तमयमिव हृदयस्य महोत्सवावसानमिव धृतेः द्वारपिधानमिव मन्ये।११। ]

---

(ढ) जनान्तिकं, वक्त्र्यादितरेण अनधिगम्यरूपेण इत्यर्थः। पारिभाषिकं तल्लक्षणञ्च उक्तपूर्वम्, भवन्तं प्रियवयस्यं सेवितुं रसवदुपायेन उपचरितुं, मे मम एतावान् इयन्मात्रः मतेः बुद्धेः विभवः शक्तिः, बुद्धिप्रभावेण मालविकाया दर्शनं मया उपपादितम् इतःपरं त्वमेव प्रभवसि नातः किमपि सम्पादयितुं शक्तिरस्ति मे इति भावः। अनेन विपरीतलक्षणया विदूषकस्य शक्तिगर्वोऽपि व्यज्यते।

(ड) परिच्छेदेन एतावानिति अवधिकरणेन मतिविभवस्येति शेषः। अलमलम्, एकान्तत एव प्रयोजनाभावः। तथाहि त्वं बुद्धिप्रभावेण यथा देवीसविधेऽपि मालविकाया मया सह दर्शनं सम्पादितं तथा मन्ये यत् त्वम् अपरिमितमेव मतिविभवं विन्दसे, अतः किमिदानीं मतिविभवस्य स्वल्पं परिमाणं वदसीति भावः। आत्मनः साम्प्रतिकीमवस्थामवगमयितुमुपक्रमते—अहं हीत्यादिना वक्ष्यमाणश्लोकान्तेन। अहमिति पदार्थः श्लोकान्तर्गतया मन्ये इति क्रियया कर्त्तृत्वेनान्वेति।

११। मालविकाया अन्तर्धाने सम्प्रति महानवसादो मे जात इत्याह—भाग्येत्यादिना। तस्याः मालविकायाः तिरस्करणं यवनिकान्तराले अन्तर्धानं अक्ष्णोः चक्षुषोः

---

বিদূ। (জনান্তিকে) আপনাকে সন্তুষ্ট করিবার পক্ষে এই পর্য্যন্তই আমার বুদ্ধির প্রভাব। (ঢ)

রাজা। বয়স্য! নিজ বুদ্ধি শক্তির ইয়ত্তা করিবার আবশ্যকতা নাই। (ড)

विदू। (जनान्तिकम्।) साहु, दरिद्दो विअ आदुरो वेज्जेण ओसहं दीअमाणं इच्छसि। [साधु, दरिद्र इवातुरो वैद्येन औषधं दीयमान मिच्छसि।] (ढ)

---

ममेति शेषः। भाग्यस्य सौभाग्यस्य अस्तमयम् अवसानमिव, तथाहि मालविकायाः सन्दर्शनं मम सुमहतो भाग्यस्य एव चणमासीत् इदानीं तदन्तर्धानं भाग्यस्य अवसान-मूलकमेव मे जातमिति भावः। हृदयस्य मनसः महोत्सवस्य प्रशस्तस्य आनन्दजनक-व्यापारस्य अवसानं शेषम् इव। तथाहि तदानीं महान् मे उत्सव आसीत् स चेदानीं सुतरां विपर्य्यस्त इति भावः। धृतेः धैर्य्यस्य द्वारपिधानं प्रवेशद्वारनिरोधम् इव मन्ये सम्भावयामि, तस्या अदर्शनेन नाहमिदानीं कथमपि हृदयं स्वस्थमवस्थाप-यितुं चमे इति भावः। अत्र मालविकाया अन्तर्धाने भाग्यास्तमयत्वादीनां त्रयाणां वस्तूनां सम्भावनाया इवशब्देण प्रतिपादनात् उत्प्रेक्षात्रयी वाच्या। एतेन मालविकाया विरहजनितोऽवसादो राज्ञि व्यज्यते। तिरस्करणमित्यत्र तिरस्करिणीमिति पाठे यवनिकामित्यर्थः। तत्पक्षे तिरस्करिण्यामेव तत्तद्वस्तुसम्भावनम्। जातिरार्य्या।

(ढ) दरिद्रः निर्धनः वैद्याय औषधादिमूल्यविधया किमपि दातुमसमर्थ इत्यर्थः। आतुरः रोगी इव वैद्येन रोगचिकित्सकेन कामव्याधिनिराकरणानुकूलमालविका-सङ्गमसाधकेन मया इत्यर्थः। दीयमानं निर्व्वर्त्त्यमानम् औषधं कामव्याधिरसायनं मालविकारूपम् इच्छसि अभिकाङ्क्षसि, तथाहि आदौ मालविकासङ्गमनमूल्यभूतं किमपि मह्यं दातव्यं तत एव मालविकाया आकाङ्क्षा त्वया कर्त्तव्या नतु आदावपि इति भावः। अथवा दरिद्रः आतुरः वैद्येन दीयमानम् औषधमिव इच्छसि मालविकाम् इति अन्वय आहृत्य कर्त्तव्यः। केचित्तु इच्छसीवेति क्रियया इवार्थान्वयं कुर्व्वते, तन्मतन्तु

---

মালবিকা এখান হইতে অন্তর্দ্ধান করিয়াছেন। তাহাতে আমার মনে হইতেছে,—আমার নয়নদ্বয়ের সৌভাগ্য যেন অন্তর্হিত হইয়াছে; হৃদয়ের মহোৎসব যেন পর্য্যবসিত হইয়াছে, এবং সন্তোষের (বা ধৈর্য্যের) দ্বার যেন অবরুদ্ধ হইয়াছে ॥১১॥

(प्रविश्य) हरदत्तः। देव! मदीयमिदानीं प्रयोगमवलोकयितुं प्रसादः क्रियताम्। (ण)

राजा। (स्वगतम्।) अवसितो मे दर्शनार्थः। (दाक्षिण्यमवलम्ब्य प्रकाशम्।) ननु पर्य्युत्सुका एव वयम्। (त)

---

अक्रमतादोषप्रसङ्गादेव शक्यते परिहर्त्तुम्। उपमालङ्कारः। "लतेव राजसे तन्वि" इतिवत् उपमानोपमेययोः पुरुषभेदेन भग्नप्रक्रमत्वदोषस्य परिहाराय केचित् तन्मतमपि समीचीनं मन्यन्ते। पूर्व्वमते तद्दोषस्य अपरिहार्य्यता। वाच्यव्यत्ययेन पाठे कथञ्चित् शक्यः स दोषः समतिक्रमितुमिति मन्तव्यम्।

(ण) इदानीं गणदासशिष्यायाः प्रयोगप्रदर्शने अवसिते सतीत्यर्थः। मदीयं मया उपनीतं प्रयोगम् अभिनयशिक्षाम् अवलोकयितुं प्रसादः अनुग्रहः क्रियताम्, राजप्रसादस्य अवलोकनफलकत्वात्, क्रियार्थायां क्रियायां तुम् प्रतिपत्तव्यः। उभयोः प्रयोगस्य क्रमेण दर्शनीयतया आदौ व्यवस्थापनात् गणदासस्य प्रयोगदर्शने अवसिते ममेदानी-मवसरः तद्दृश्यतामनुग्रहेण मया उपनीतः प्रयोग इति भावः।

(त) मे मम दर्शनार्थः दर्शनस्य विषयः प्रकृते मालविकया कृतः अभिनयरूप इत्यर्थः। अवसितः शेषं गतः, तथाहि मालविकायाः अभिनय एव मम आग्रहविषय आसीत् जातं तद्दर्शनमिति नातः परं किमपि दर्शनीयतया सम्भावयितुमर्हामि, तदलं पुनरपरस्य विषयस्य दर्शनेनेति राजमनोगतम्। दाक्षिण्यं बहुषु समानुरागः तत् अवलम्ब्य कृत्रिम-भावेण आश्रित्य वाह्यं दाक्षिण्यं प्रकाशयन् इत्यर्थः। वयं पर्य्युत्सुकाः आग्रहातिशययुक्ता एव नतु औत्सुक्यशून्या इति व्यवच्छेद्यम्। प्रयोगमवलोकयितुमिति शेषः। एव-शब्देन इतरव्यवच्छेदकत्वप्रत्यायनं कथमपि औत्सुक्याभावाशङ्कानिराकरणाय।

---

বিদূ। (জনান্তিকে।) আপনি দরিদ্র রোগীর ন্যায়, বিনামূল্যে বৈদ্যের ঔষধ পাইতে অভিলাষ করিতেছেন? সাধু! (ঢ)

[হরদত্তের প্রবেশ।]

হর। দেব! অনুগ্রহপূর্ব্বক এক্ষণে আমার প্রয়োগদর্শনে অনুমতি হউক। (ণ)

हर। अनुगृहीतोऽस्मि। (थ)

(नेपथ्ये।) जयतु जयतु देवः। उपारूढ़ो मध्याह्नः। तथा हि। (द)

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि।
विन्दूत्क्षेपात् पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृप गुणैर्दीप्यते सप्तसप्तिः॥१२॥

[अन्वयः। हंसाः दीर्घिकापद्मिनीनां पत्रच्छायासु मुकुलितनयनाः (तिष्ठन्ति) सौधानि अत्यर्थतापात् वलभिपरिचयद्वेषिपारावतानि (सन्ति), शिखी पिपासुः (सन्) विन्दूत्क्षेपात् भ्रान्तिमत् वारियन्त्रं परिसरति, हे नृप! (सर्व्वैः) गुणैः (समग्रः) त्वमिव सर्वैः उस्रैः समग्रः सप्तसप्तिः दीप्यते। १२।]

---

(थ) अनुगृहीतः कृतप्रसादः अस्मि, मम अभिनयदर्शनाय अपि अभिप्राय-प्रकाशनात् इति भावः।

(द) अथ सम्प्रति मध्याह्नवेलायां उपस्थितौ वैतालिकास्तद्दर्शनेन राजानं स्नान-विध्यादौ उन्मुखीकरोति जयतु जयत्वित्याद्यारभ्य। मध्याह्नः दिवसस्य मध्यभागः, उपा-रूढ़ः उपस्थितः, तत्रैव विज्ञापकमुपन्यस्यति—तथाहीत्यारभ्य श्लोकान्तेन।

१२। किं किं तज्ज्ञापकमित्याह—पत्रच्छायास्वित्यादि। हंसाः दीर्घिकावासिनः

---

রাজা। (স্বগত) যেজন্য আমার প্রয়োগদর্শন, তাহা ত নিষ্পন্নই হইয়াছে। (উদারতা দেখাইয়া প্রকাশ্যে) আমরা আপনার প্রয়োগ-দর্শনার্থ নিতান্ত উৎসুক হইয়া আছি। (ত)

হর। অনুগৃহীত হইলাম। (থ)

(নেপথ্যে।) মহারাজের জয় হউক, জয় হউক। মধ্যাহ্ন বেলা উপস্থিত। (দ)

मराला: दीर्घिकापद्मिनीनां वापीप्ररूढ़ानां कमलिनीनां पत्रच्छायासु पत्रैः सम्पादिते अनातपमण्डले मुकुलितानि निमीलितप्रायाणि मुकुलाकारतां प्राप्तानीति यावत् नयनानि चक्षूंषि येषां तथाभूताः ईषन्निमीलितनेत्राः तिष्ठन्तीति शेषः। सौधानि राजभवनानि अत्यर्थतापात् अतिमात्रात् उष्णभावात् वलभिपरिचयाय गोपानसी संश्रयणाय छदिषो निम्नवर्त्तिने दारुविशेषाय इति यावत्। द्वेषिणः द्वेषवन्तः पारावताः कपोताः यत्र तथाभूतानि, तथाहि इदानीम् एवं तापः प्रवृद्धः यथा पारावता अपि सौधशिखरवर्त्तिनि द्रव्यविशेषे नाश्रयं मृगयन्ते इति भावः। शिखी मयूरः पिपासुः पानीयं पातुमिच्छुः सन् विन्दूनां शीकराणां वारिकणानामित्यर्थः। उत्क्षेपात् ऊर्द्ध्वप्रसरणात् समन्ततः ऊर्द्ध्वदिशि प्रकीर्णत्वादित्यर्थः। भ्रान्तिमत् घूर्णमाणं वारियन्त्रं जलयन्त्रं (फोयारा इति प्रसिद्धम्) परिसरति उपसर्पति जलाशया तदन्तिकमुपगच्छति इत्यर्थः। हे नृप! लोकपाल! अनेन वक्ष्यमाणानां गुणानां लोकहितसाधकत्वं व्यक्तम्। सर्व्वैः समग्रैः गुणैः शौर्य्यगाम्भीर्य्यादिभिः राजोचितधर्म्मैः समग्रः सम्पूर्णः त्वम् इव सर्व्वैः समस्तैः सहस्रसंख्यकैरित्यर्थः। सूर्य्यस्य सहस्रकिरणत्वश्रुतेः सर्वसिद्धत्वात्। उस्रैः किरणैः सप्त सप्तयः अश्वाः यस्य तथाभूतः सप्ताश्वः सूर्य्यः दीप्यते तपति। मध्यगगनमारूढ़ः सहस्ररश्मिः तापयति समस्तां महीम्, उपस्थिता स्नानाहारवेला तत् स्नानाहाराभ्याम् उद्युक्तो भवेति तात्पर्य्यम्। "शिखायां वड़भी चूड़े"ति रुद्रः। डलयोरभेदात् वड़भि स्थाने वलभि इति। "गोपानसी तु वलभी छादने वक्रदारुणी"त्यस्य दीर्घैकारान्तत्वात् न तदुपादानम्। "किरणोऽस्रमयूखांशुगभस्तिघृणिघृष्णय"इत्यमरः। "सौधोऽस्त्री राजसदन"मिति। अत्र हंसादीनां मध्याह्नवेलायां स्वतो जातभाववर्णनात् स्वभावोक्तिरलङ्कारः, चतुर्थ पादे उपमानतायोग्यस्य सूर्य्यस्य उपमेयत्वकल्पनया प्रतीपालङ्कारस्य उभयोरपेक्ष्यापेक्षिभावविरहात् संसृष्टिः। स्रग्धरावृत्तम्।

---

হংসসকল দীর্ঘিকাস্থ পদ্মিনীদলের পত্রচ্ছায়াতে মুদ্রিত নয়নে অবস্থিতি করিতেছে; পারাবত সকল সন্তাপের আতিশয্যপ্রযুক্ত সৌধসমূহের বলভীর উপরি আর বিচরণ করিতেছে না; সলিলবিন্দু উর্দ্ধে বিকীর্ণ হওয়ায় তৃষ্ণার্ত্ত ময়ূর ঘূর্ণমাণ বারিযন্ত্রের (ফোয়ারার) দিকে ধাবিত

विदू। अविहा अविहा! अह्माणं भोअणवेला। अत्तभअदो उइदवेलादिक्कमेण चिइच्छआ दोसं उदाहरन्ति। हरदत्त! किं भणासि? [अविधा अविधा! अस्माकं भोजनवेला। अत्रभवत उचितवेलातिक्रमेण चिकित्सका दोषमुदाहरन्ति। हरदत्त! किं भणसि]। (ध)

हर। नास्ति वचनस्यान्यस्यावकाशोऽत्र?। (न)

---

(ध) अविधेति शौरसेनीभाषायां सम्भ्रमातिशये व्यवह्रियते। भोजनवेला भोजनस्य वेला उपस्थिता इति शेषः। अत्रभवतः मान्यस्य भवतः उचितायाः स्नानाहारयोग्यायाः वेलायाः अतिक्रमेण अतिवाहनेन स्नानयोग्यमध्याह्नवेलादौ स्नानाभावेन आहारयोग्ये च काले आहाराभावेन इत्यर्थः। दोषं पित्तादिजन्यं दोषम् उदाहरन्ति कथयन्ति। तथाहि भोजनवेलामतिक्रम्य भोजनेन पित्तदोषः प्रादुर्भवति, तेन च ज्वरादयो रोगाः जायन्ते इति भरतः। इयं भोजनवेला नातिक्रमणीया, तदिदानीं भोजनाय प्रतिष्ठस्व इति भावः। भोजनवेलामाह दक्षः—"पञ्चमे च तथाभागे संविभागो यथार्हतः। पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते" इति। तदतिक्रमे दोषमाह भावमिश्रः—"कालेऽतीतेऽश्नतो जन्तोर्वायुनापहतेऽनले। कृच्छ्राद्धिपच्यते भुक्तं न स्याद् भोक्तुं पुनःस्पृहा" इति। हरदत्तस्य प्रस्तुतप्रायमभिनयप्रदर्शनमतिक्रम्य भोजनार्थं प्रस्थाने तस्य महन्मानसवैशसं स्यादित्याशङ्क्य हरदत्तस्य अभिमतिं प्रार्थयते—हरदत्तेत्यादिना। किं भणसि त्वमिदानीं भोजनार्थं गमनविषये कीदृशं मन्यसे। इदानीं भोजनम् अभिनयदर्शनं वा उचितमिति प्रश्नविषय इति भावः।

---

হইতেছে। মহারাজ যেমন সমুদায় গুণে পরিপূর্ণ, দিবাকর তেমন সম্পূর্ণ কিরণপূর্ণ হইয়া দেদীপ্যমান হইতেছেন॥১২॥

বিদূ। আহা কি সৌভাগ্য! কি সৌভাগ্য! আমাদের ভোজনবেলা উপস্থিত হইয়াছে। চিকিৎসকগণ মহারাজের ভোজনের নিয়মিত সময় অতিক্রান্ত হইলে দোষের কথা বলিয়া থাকেন। হরদত্ত কি বলেন? (ধ)

राजा। (हरदत्तमवलोक्य।) तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः। विश्राम्यतु भवान्। (प)

हर। यदाज्ञापयति देवः। [इति निष्क्रान्तः।] (फ)

देवी। णिव्वत्तेदु अज्जउत्तो मज्झण्हविहिम्। [निर्वर्त्तयतु आर्य्यपुत्त्रो मध्याह्नविधिम्]। (ब)

विदू। भोदी विसेसेण पाणभोअणं तुवरावेदु। [भवती विशेषेण पानभोजनं त्वरयतु]। (भ)

---

(न) अन्यस्य भोजनवृत्तान्तादन्यस्य वचनस्य अत्र अस्मिन् विषये ईदृशावस्थाया-मुत्पन्नायाम् अवकाशः अवसरः नास्ति। तथाहि इदानीं भोजनमतिक्रम्य अन्यस्य विषयस्य प्रस्ताव एव न युज्यते किमुत प्रवर्त्तनमिति भोजनार्थमेव गन्तव्यम् इति भावः।

(प) तेन इदानीं भोजनस्य अवश्यंकर्त्तव्यत्वेन त्वदीयं त्वतसम्बन्धिनम् उपदेशम् अभिनयशिक्षाम्। तव शिष्यायाः प्रयोगमित्यर्थः।

(फ) यत् वस्तु विश्रामरूपम् आज्ञापयति तदेवाहं करोमीति भावः।

(ब) मध्याह्नविधिं मध्याह्नकाले कर्त्तव्यं स्नानाहारादिकं निर्व्वर्त्तयतु सम्पादयतु भवानिति शेषः। गूढार्थस्तु इदानीं मध्याह्नकाले गणदासशिष्याया मालविकाया अभिनयदर्शनं तव सम्मतम् आसीत्, किन्तु हरदत्तस्य शिष्याभिनयदर्शनमेवासम्मतम्; अथातःपरमपि तस्याश्चिन्तनमेव ते मध्याह्नकृत्यं, तदवसरश्च सम्पादनीय इति।

(भ) विशेषेण देवत्वरयेन आयोजनातिशयेन इत्यर्थः। पानं भोजनञ्च त्वरयतु शीघ्रं शीघ्रं उद्योजयतु। तथाहि भवत्या राज्ञश्च सुखयोग्यस्वभावत्वात् वेलातिक्रमेण

---

হর। এতে আর কি অন্যের কথা বলিবার যো আছে? (ন)

রাজা। (হরদত্তের প্রতি দৃষ্টিপাত করিয়া) অতএব আপনার প্রয়োগ আগামী কল্য দেখা যাইবে। এক্ষণে আপনি বিশ্রাম করুন। (প)

হর। মহারাজের যেমন আজ্ঞা। (এই বলিয়া নিষ্ক্রমণ।) (ফ)

দেবী। আর্য্যপুত্র! আপনি মধ্যাহ্নবিধি নির্ব্বাহ করুন। (ব)

परि। (उत्थाय।) स्वस्ति भवते।

[इति सपरिजनया देव्या सह निष्क्रान्ता।]

विदू। भो वअस्स! ण केवलं रूवे, सिप्पे वि अदुदीआ मालविआ। [भो वयस्य! न केवलं रूपे, शिल्पेऽपि अद्वितीया मालविका।] (य)

राजा। वयस्य!

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता।
उपकल्पितो विधात्रा वाणः कामस्य विषदिग्धः॥१३॥

[अन्वयः। विधात्रा अव्याजसुन्दरीं तां ललितेन विज्ञानेन योजयता कामस्य विषदिग्धः वाणः उपकल्पितः। १३।]

---

भोजनादिकं न मन्थरतां गच्छति अतः यथा सत्वरं भोजनेन स्वास्थ्यं रचितुं चमेयास्तथा कुरु इति भावः। एतेन विदूषकस्य राज्ञीप्रस्थानानन्तरं राज्ञा सह निभृतालापी भावीति व्यज्यते।

(म) भवते तुभ्यं महाराजाय इति शेषः। स्वस्ति मङ्गलं भवतु।

(य) मालविका रूपे सौन्दर्य्ये अद्वितीया निरुपमा अपितु शिल्पेऽपि कलाविद्यायामपि अद्वितीया, तयाहि अस्या रूपानुरूपं शिल्पकौशलमिति भावः। "शिल्पं वात्स्यायनोक्तनृत्यगीतादिचतुःषष्टि"रित्यमरटीकायां भरतमतम्।

१३। अथ ललितलावण्याया मालविकाया नृत्यगीतनैपुण्यं राज्ञः स्वान्तसमुद्दीपनकारि इति स्वयमेव राजा प्राह—अव्याजेत्यादिना। वयस्येति गद्यमवानुकर्षणीयम्। हे

---

বিদূ। আপনিও বিশিষ্টবিধানে পান-ভোজনের জন্য ত্বরান্বিত হউন। (ভ)

পরি। (উত্থানপূর্ব্বক) মহারাজের মঙ্গল হউক। (ম)

(এই বলিয়া সপরিজন দেবীর সহিত নিষ্ক্রমণ)

বিদূ। মহারাজ! মালবিকা কেবল রূপে অতুলনীয়া নহেন; শিল্পেও তিনি অদ্বিতীয়া। (য)

किं बहुना ? सखे ! चिन्तयितव्योऽस्मि ते। (र)

विदू। भवदा वि अहं। दिढ़ं विपणिकन्दू विअ मे उअरब्भन्तरं दज्झइ। [भवतापि अहम्। दृढं विपणिकन्दुरिव मे उदराभ्यन्तरं दह्यते।] (ल)

---

वयस्य ! अव्याजसुन्दरीम् अकृत्रिमलावण्यसमन्वितां स्वभावसुन्दरीमित्यर्थः। तां मालविकां ललितेन सुरुचिरेण अतिमनोज्ञेन इति यावत् विज्ञानेन कलाकौशलेन नृत्यगीतादिनैपुण्येन इत्यर्थः। योजयता सङ्घटयता इमां कलाविद्यायां पारदर्शिनीं कुर्वता इत्यर्थः। विधात्रा विधिना कामस्य मदनस्य विषदिग्धः विषदूषितः बाणः सायकः उपकल्पितः विरचितः, अतएव तस्याः सम्पर्कात् ईदृशीं पीडामनुभवामि इति भावः। अत्र मालविकाया ललितशिल्पकलया सह योजनकर्त्तरि विधातरि विषदिग्धकामबाणकल्पनसम्भावनाया गम्यतया गम्योत्प्रेक्षा। स्वभावसुन्दर्य्याः सुखहेतुभूतायास्तस्याः कामिजनपीड़ाजनकत्वस्य विरुद्धस्य गम्यमानत्वात् विषमो व्यङ्ग्यः। पूर्वार्द्धगतयोजनाविशेषस्य परार्द्धगतोपकल्पनक्रियया विम्बप्रतिविम्बभावप्रत्ययतः निदर्शनापि व्यज्यते। जातिरार्य्या।

(र) बहुना वक्ष्यमाणसंक्षिप्तविषयादितरेण अतिरिक्तेन किं न किमपीति संक्षेपत इदमेव वाच्यमिति तात्पर्य्यम्। ते तव त्वया इत्यर्थः। चिन्तयितव्यः चिन्तनार्हः अस्मि, मद्विषयिणीं चिन्तां कुरु यथा मया सह मालविकाया मेलनमापादयितुमर्हसीति अन्यथा महती विपत् मे भाविनीति भावः।

(ल) भवता राज्ञा अपि अहं विदूषकः चिन्तयितव्य इति शेषः। तथाहि मम इदानीं क्षुधा प्रबला जाता तत् तत्प्रतीकाराय भवान् काञ्चित् व्यवस्थां करोतु इति, अन्यथा क्षुधापीड़ितः अहं मरिष्यामीति भावः। तमेवार्थं स्पष्टयति—विपणिकन्दुः मोदकादिविपणिस्थित भर्ज्जनपात्र (चाटु इत्यादि यस्य प्रसिद्धिः) उदरस्य अभ्यन्तरं

---

রাজা। বয়স্য ! তাঁহার সৌন্দর্য্যে কোনরূপ কাপট্য নাই। তাহার উপর আবার বিধাতা সর্ব্বলোকমনোহর শিল্পশক্তি প্রদান করিয়া, তাঁহাকে কামের বিষলিপ্ত বাণরূপে কল্পনা করিয়াছেন ॥১০॥

राजा। एवमेव भवान् सुहृदर्थेऽपि त्वरताम्। (व)

विदू। गहीदो खणो। किन्तु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तभोदी मालविआ। भवं वि सूणापरिसरचरो विअ विहङ्गो आमिसलोलुवो भीरुओ अ। ता अणादुरो भविअ कज्जसिद्धिं पत्थन्तो मे रोअसि। [गृहीतः क्षणः। किन्तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका। भवानपि सूनापरिसरचर इव विहङ्ग आमिषलोलुपः भीरुकश्च। तदनातुरो भूत्वा कार्य्यसिद्धिं प्रार्थयमानो मे रोचसे।] (श)

---

मध्यदेशः दह्यते, क्षुधाज्वाला सुतरां मे प्रवृद्धा अस्या निर्वापणं भवता कर्त्तव्यमिति भावः। "विपणिः पण्यवीथिका" इत्यमरः। "कन्दुर्वा स्वेदनी स्त्रियाम्" इत्यमरः।

(व) एवमेव यथा भवान् स्वीयभोजनाय त्वरते तथा इत्यर्थः। सुहृदः बन्धोः अर्थे कर्त्तव्यविषये मालविकया सह सम्मेलनसाधनरूपे इत्यर्थः। त्वरतां सत्वरतामवलम्बताम्। यथा सत्वरं मालविकासाक्षात्कारेण शान्तिमाप्नुयां तथा कुरु इति भावः।

(श) क्षणः अवसरः गृहीतः आश्रितः मयेति शेषः। तथाहि न सहसा एव एतत् कर्म्म साधयितुं शक्यं किन्तु कियत्कालानन्तरमेव, अतः कियान् कालः अपेक्षितव्य इति भावः। गृहीतदक्षिण इति पाठे त्वया मम भोजनदानस्य फलतः अङ्गीकारेण आदावेव दक्षिणां मह्यं दत्तवान्, तत्र च अवश्यमेव कार्य्यस्य साधनीयता आयाति, एतदर्थं परवाक्यस्य उत्थानं सुसमञ्जसं भवति, 'किन्तु' इत्यनेन प्रतिबन्धकपक्षस्य एव न्यासयोग्यत्वात्। मेघावल्या जलदजालेन निरुद्धा आच्छादिता ज्योत्स्ना चन्द्रिका इव पराधीनं परायत्तं दर्शनं साक्षात्कारः यस्याः तथाभूता, परायत्तसम्मेलना। तथाहि

---

যাহা হউক, আর অধিক বলিবার প্রয়োজন নাই। এক্ষণে আমার বিষয় চিন্তা কর। (র)

বিদূ। আপনিও আমার জন্য চিন্তা করুন। ক্ষুধায় আমার হৃদয়াভ্যন্তর বিপণিস্থ কন্দুর (কড়া, তাওয়া) ন্যায় দহমান হইতেছে। (ল)

राजा। कथमनातुरो भविष्यामि ? (ष)

---

मालविकाया दर्शनम् इच्छामात्रेणैव न सम्पत्स्यते किन्तु देव्या गणदासस्य च अनुमोदनेन, अतएव कठोर-कठोर इव तया सह साक्षात्कारः, तेन भवतः पीड़ां सहसा विनाशयेयमिति भावः। अत्र मेघाच्छादिताया ज्योत्स्नाया दर्शनं यथा मेघापसारणमपेक्षते तथैव मालविकासाक्षात्कारप्रतिबन्धकीभूताया देव्या अनुपस्थितौ एव तत्साक्षात्कारसम्भावना इति सादृश्यप्रत्ययात् उपमा। सूनायाः वधस्थानस्य परिसरे प्रान्तदेशे परिचरति यः तथाभूतः वधस्थानसमीपचरः, "सूना पुत्र्यां वधस्थाने गलशुण्डिकयोः स्त्रिया"मिति मेदिनीकोषः। विहङ्गः हिंस्रः श्येनादिपक्षी इव आमिषस्य भोग्यवस्तुनः मांसस्य च लोलुपः लोभवान् भीरुकः अतिभीतश्च, "उत्कोचे पलले न स्त्री आमिषं भोग्यवस्तुनि" इति कोषान्तरम्। तथाहि श्येनादिपक्षी यथा मांसमभिकाङ्क्षन् अपि वधस्थानोपान्तचारी भीत्या सहसा तत्र मांसार्थं नावतरीतुं क्षमते तथैव त्वमपि देवीभयात् मालविकायाः अदूरे तिष्ठन्नपि तत्साक्षात्कारे न क्षमसे इति भावः। अत्र विहङ्गेन आमिषलोलुपत्वभीरुत्वरूपधर्म्मद्वयेन राज्ञः साधर्म्म्यात् उपमा पूर्णा। सा च आमिषपदे श्लेषात् श्लेषोत्थापिता। तत् तस्मात् अनातुरः अविकलः भूत्वा कार्य्यसिद्धिं मालविकाप्राप्तिरूपकर्म्मफलं प्रार्थयमानः याचमानः मे मह्यं रोचसे ननु आतुरः सन्, यतः स्वयं कार्य्यकरणाक्षमः परमपि त्वरयति इति सह्यं भवति, स्वयमशक्तः त्वं यावता कालेन अहं कार्य्यं कर्त्तुं शक्नोमि तावत्कालमेव नीरवो भूत्वा तिष्ठ अन्यथा स्वयमेव कर्म्मणि प्रवृत्तो भव इति राजानं प्रति विदूषकस्य प्रौढ़ोक्तिः। अथवा त्वम् इदानीं सुतरां विपन्न इव यत् माम् अनुरुणत्सि तदहं सोढ़ुं न क्षमे, शान्तो भव सत्वरमेवाहं तव कार्य्योद्धारं कर्त्तुं शक्ष्यामि अलं पुनःपुनरुद्वेगातिशयेन, अन्यथा तव वैकल्यदर्शनेन ममापि वैकल्यं सम्भाव्यते इति वयस्यजनोचिता उक्तिः।

---

রাজা। হাঁ, তাহাই বটে। এইরূপ এক্ষণে আমার জন্যও ত্বরান্বিত হও। (ব)

বিদূ। আচ্ছা, সময় নিলাম। কিন্তু মেঘাবলীরুদ্ধ জ্যোৎস্নার ন্যায়,

सर्वान्तःपुरवनिताव्यापार-प्रतिनिवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥१४॥

[ अन्वयः । सा वामलोचना सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य मे स्नेहस्य एकायनीभूता । १४ । ]

---

(ष) कथं केन प्रकारेण अनातुरः वैक्लव्यवर्ज्जितः भविष्यामि, नास्ति स्थैर्य्यसम्पादनक्षमता साम्प्रतं मे इति भावः ।

१४ । गद्यानन्तरं श्लोकोत्थानाय यत इत्यध्याहार्य्यं, हेतुश्चायम् अनातुरतायोग्यताविरहं प्रति । सर्व्वासां समस्तानाम् अन्तःपुरवनितानाम् अन्तःपुरस्थितानां कामिनीनां मद्दारभूतानामित्यर्थः । यो व्यापारः प्रेमसम्भाषणादिक्रियाकलापः तस्मात् प्रतिनिवृत्तम् अपहृतं विरतमित्यर्थः, हृदयं चित्तं यस्य तथाभूतस्य, सर्व्वास्वन्तःपुरिकासु विरक्तस्य इत्यर्थः । मे मम स्नेहस्य प्रणयस्य सा वामलोचना सुनयना मालविका एकायनीभूता केवलाश्रयभूमिर्ज्जाता, मम चित्तं केवलं तस्यामेव उपसर्पति न तु अन्तःपुरिकास्वपरासु अतएव तदलाभेन अन्यत्रापि संक्रान्तचित्तस्य यत्सुखसम्भावना सापि नास्ति इति भावः । अनेन श्लोकेन सर्व्वाभ्यः अन्तःपुरिकाभ्यः मालविकायाः सौन्दर्य्याद्यतिशयस्य गम्यतया व्यतिरेको व्यज्यते । सा वामलोचना इत्यत्र एवशब्दस्य अन्यव्यवच्छेदपरस्य अध्याहारादर्थप्रतिपत्त्या परिसंख्यापि आर्थी । एवशब्दस्य अनादानात् न्यूनपदता । आर्य्या जातिः ।

---

মালবিকা পরায়ত্তদর্শনা, আপনাকেও বধ্যভূমিতে বিচরমাণ আমিষলোলুপ ভীরুস্বভাব গৃধ্রের ন্যায় দেখিতেছি। যদি অনাতুর হইয়া কার্য্যসিদ্ধির প্রার্থনা করেন, তবে আমি বড় তৃপ্ত হইব। শ।

রাজা। কিরূপে অনাতুর হইতে পারি? (ষ)

যেহেতু আমার হৃদয় যাবতীয় অন্তঃপুরচারিণী বনিতাদিগকে পরিহার করিয়া, একমাত্র সেই বামলোচনাতেই সংসক্ত হইয়াছে, তজ্জন্য তিনিই আমার স্নেহের অদ্বিতীয় আধার-স্থানীয় হইয়াছেন। ॥১৪॥

[ इति निष्क्रान्ताः सर्वे । ] (स)

## इति द्वितीयोऽङ्कः ॥२

---

(स) ननु रङ्गे तदानीं राजा विदूषकश्च इति द्वावेव आस्तां तत् कथं निष्क्रान्ता इति बहुत्वमिति चेदत्र केचित् राजसहचराणां शरीररचकादीनां राज्ञा सह अविनाभावसम्बन्धात् तेषां तत्र वर्त्तमानता, अतो बहुत्वं तेषामपि तदानीं राज्ञा सहैव निष्क्रमणात्। परे तु अत्र निष्क्रान्तानां पूर्व्वपात्राणामपेक्षया बहुत्वं सर्व्वशब्दप्रयोगश्च, क्रमेण सर्व्वेषां पात्राणां निष्क्रमणमभूदिति भावः। एतच्च "अङ्कनिष्क्रान्तनिखिलपात्रोऽङ्क" इति अङ्कलक्षणसमन्वयाय विन्यस्तं कविनेति समाधेयम्। मालविकानिष्क्रमणात् विच्छिन्नाया: कथायाः सर्वान्तःपुरेत्यादिना राजाभिलाषः पराङ्ककथाहेतुत्वाद्विन्दुरिति ज्ञेयम्। इति मालविकाग्निमित्र-व्याख्याने विजयाख्याने द्वितीयोऽङ्कः।

---

[সকলের নিষ্ক্রমণ]। (স)

দ্বিতীয় অঙ্ক সমাপ্ত ॥২

---



# तृतीयोऽङ्कः ।

( ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका । ) (क)

समा । आणत्तह्मि भअवदीए—'समाहिदिए ! देवीए उवाअणत्थं वीअपूरअं गेण्हिअ आअच्छ'त्ति । ता जाव पमदवणपालिअं महुअरिअं अण्णेसामि । ( परिक्रम्यावलोक्य च । ) एसा तवणीआसोअं आलोअन्ती महुअरिआ चिट्ठदि । जाव णं उवसप्पामि । [आज्ञप्तास्मि भगवत्या—'समाहितिके ! देव्या उपायनार्थं बीजपूरकं गृहीत्वा आगच्छे'ति । तत् यावत् प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमालोकमाना मधुकरिका तिष्ठति । यावदेनामुपसर्पामि । ] (ख)

---

(क) महाकविः सम्प्रति अङ्कान्तरप्रारम्भे कथासङ्घटनार्थं प्रथमं प्रवेशकाभिधानमर्थोपक्षेपकं प्रस्तौति—ततः इत्यादि । परिव्राजिकायाः कौशिक्याः । समाहितिका इति परिचारिकाया नाम ।

(ख) भगवत्या कौशिक्या परिव्राजिकया आज्ञप्ता आदिष्टा अस्मि अहमिति शेषः । देव्या धारिण्या उपायनार्थम् उपहारार्थं बीजपूरकं तदाख्यं फलं तद्वृक्षकुसुमं वा उभयोरेव उपहारयोग्यत्वात् । 'देवीए उवाअणत्थ'' इत्यत्र 'देवस्स उववणत्थ'' इति क्वचित् पाठः, तत्र देवस्य महाराजस्य उपवनस्थमित्यर्थः । यद्यपि "फलपूरो बीजपूर" इत्यमरः,—तथापि पुष्पार्थे फलार्थे वा विहीनं प्रसवे सर्व्वम्" इत्याद्यमरवचनात् क्लीवलिङ्गता सिद्धा । इति आज्ञप्ताह्मीत्यन्वयः । तत् तस्मात् । प्रमदवनपालिकाम् उद्यानरक्षिकां मधुकरिकां तदाख्यां रमणीम् । एषा दृश्यमाना तपनीयाशोकं स्वर्णवर्णाशोकपुष्पवृन्तं पीताशोकतरुमित्यर्थः । "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकं तपनीय"मित्यमरः । आलोकयन्ती पश्यन्ती एनां मधुकरिकाम् उपसर्पामि ।

---

( অনন্তর পরিব্রাজিকার পরিচারিকা সমাহিতিকার প্রবেশ । ) ( ক )

সমা । ভগবতী আজ্ঞা করিয়াছেন—"সমাহিতিকে ! রাজ্ঞীকে

( ततः प्रविशत्युद्यानपालिका । )

समा। ( उपसृत्य । ) आलि! अवि सुहो दे उज्जाणवावारो?। [ आलि! अपि सुखस्ते उद्यानव्यापारः? ] (ग)

मधु। अह्मो समाहिदिआ! सहि! सागदं दे? [ अहो समाहितिका? सखि! स्वागतं ते? ] (घ)

समा। हला, भअवदो आसुवेदि—'अरित्तपाणिणो अह्मा-रिसजणेण तत्तहोदी देवी देक्खिदव्वा। ता बीअपूरएण

---

(ग) उपसृत्य मधुकरिकायाः समीपं गत्वा। आलि! सखि! "आली सखी वयस्या च" इत्यमरः। अपिः प्रश्ने। ते तव उद्यानव्यापारः उद्यानसम्बन्धिक्रियाकलापः वृक्षादीनां सेकप्रभृतीनि कर्म्माणीत्यर्थः। सुखः न अतिमात्रायासकरः, तथाहि उद्यानस्थितानां वृक्षलतादीनां शोभनावस्थायां वर्त्तमानायां तेषां न विशेषेण उपचरणं कर्त्तव्यं भवति तथैव च उद्यानव्यापारः सुखं सम्पद्यते तत् उद्यानस्थितवृक्षलतादयो निर्व्विघ्नाः कच्चिदिति प्रश्नतात्पर्य्यम् इति।

(घ) अहो समाहितिका इत्याश्चर्य्ये अहोशब्दः। तच्च आश्चर्य्यं समाहितिकाया इदानीमसम्भावितागमनेन। ते तव स्वागतं शुभागमनम् किमु? स्वागतमिति भावे क्तप्रत्ययः, तद्योगे च कर्त्तरि षष्ठी। अपि आगमनपथे तव न कश्चित् विघ्नो जात इति भावः।

---

উপহার দিবার জন্য বীজপূরক ( টেবা নেবু ) লইয়া আইস।" অতএব প্রমদবনরক্ষয়িত্রী মধুকরিকার অন্বেষণ করি। ( পরিক্রমণপূর্ব্বক অবলোকন করিয়া ) এই যে মধুকরিকা দাঁড়াইয়া স্বর্ণবর্ণ অশোক অবলোকন করিতেছে। অতএব ইহার সহিত সাক্ষাৎ করি। ( খ )

[ উদ্যানপালিকার প্রবেশ। ]

সমা। ( নিকটে যাইয়া ) সখি! তোমার বাগানের কার্য্য বেশ চলিতেছে ত? ( গ )

মধু। এই যে সমাহিতিকা! সখি! তোমার স্বাগত ত? ( ঘ )

पेक्खिदुं इच्छामि' त्ति। [हला! भगवती आज्ञापयति—'अरिक्तपाणिना अस्मादृगजनेन तत्रभवती देवी द्रष्टव्या। तत् बीजपूरकेण प्रेक्षितुमिच्छामी'ति।] (ङ)

मधु। णं सण्णिहिदं ज्जेव बीअपूरअं। कहेहि दाव अण्णोण्णसंघस्सिदाणं णट्टाआरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो? [ननु सन्निहितमेव बीजपूरकम्। कथय तावत् अन्योन्य-संघर्षितयोर्नाट्याचार्य्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः?] (च)

समा। दुवे वि किल आअमिणा पओअणिउणा अ। किन्तु

(ङ) भगवती पण्डितकौशिकी आज्ञापयति वक्ष्यमाणमिति शेषः। अस्मादृशजनेन परिचारिकाजनेन अरिक्तपाणिना अशून्यहस्तेन यत्किञ्चिदुपहारयुक्तकरेण इत्यर्थः। अत्रभवती माननीया देवी राज्ञी द्रष्टव्या आलोकयितव्या नतु रिक्तपाणिना, तथा सति देव्याः सम्मानातिक्रमः कृतः स्यादिति भावः। अत्र 'तत्तहोदी देवी'इत्यत्र 'तत्तभवं' इति क्वचित् पाठः। तत्रभवान् महाराजः इत्यर्थः। तत् तस्मात् बीजपूरकेण तदाख्यफल-विशेषेण युक्ता इति शेषः प्रेक्षितुं द्रष्टुं देवीमिति शेषः। इच्छामि तत् उपदिश बीजपूरकनिर्द्देशमिति भावः।

(च) बीजपूरकं सन्निहितं समीपवर्त्ति एव, तत् अहंमि तद्ग्रहीतुमनायासमेव इति भावः। अन्योन्य परस्परं सङ्घर्षितयोः विवादवतोः तारकादित्वात् इतच्प्रत्ययः। परस्परम् आत्मप्रकर्षमवलम्ब्य विवादकारिणोः नाट्याचार्य्ययोः अभिनयशिक्षकयोः उपदेशम् अभिनयशिक्षां शिष्योपहिताम्। भगवत्या परिव्राजिकया कतरः हरदत्तः गणदासो वा प्रशंसितः प्रकृष्टपदे स्थापितः।

समा। সখি! ভগবতী আজ্ঞা করিয়াছেন,—মাদৃশ ব্যক্তির শূন্যহস্তে মহারাণীর সহিত সাক্ষাৎ করা কর্ত্তব্য নহে। অতএব বীজপূরক প্রদান করিয়া, সাক্ষাৎ করিতে অভিলাষ করি। (ঙ)

মধু। বীজপূরক ত নিকটেই রহিয়াছে। আচ্ছা বলত—উভয় নাট্যাচার্য্য পরস্পর বিবাদে প্রবৃত্ত হইয়াছিলেন। তাঁহাদের উপদেশ দর্শন করিয়া, ভগবতী কৌশিকী কাহার প্রশংসা করিলেন? (চ)

सिस्साग्गुणविसेसेण उण्णमिदो गणदासो। [ द्वावपि किल आगमिनौ प्रयोगनिपुणौ च। किन्तु शिष्यगुणविशेषेण उन्नमितो गणदासः। ] (छ)

मधु। अह मालविआगअं कोलीणं किं सुणीअदि ? [ अथ मालविकागतं कौलीनं किं श्रूयते ? ] (ज)

समा। बाढ़ं किल तस्सिं साहिलासो भट्टा। केवलं देवीए धारिणीए चित्तं रक्खन्तो अत्तणो पहुत्तणं ण दंसेदि। मालविआवि इमेसु दिअसेसु अणुहूदमूच्छा विअ मालदीमाला मिलाअमाणा लक्खीअदि। अदो अवरं ण जाणे। विसज्जेहि मं। [ बाढ़ं किल तस्यां साभिलाषो भर्त्ता। केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं न दर्शयति। मालविकापि एषु दिवसेषु अनुभूतमूर्च्छेव मालतीमाला म्लायन्ती लक्ष्यते। अतोऽपरं न जाने। विसृज माम्। ] (झ)

---

(छ) द्वावपि हरदत्तो गणदासश्चेति उभावेव आगमिनौ शास्त्रज्ञानसम्पन्नौ, प्रयोगे शिक्षाप्रयोगविषये निपुणौ सुचतुरौ, भवत इति शेषः। तथाहि उभयोरेव शास्त्रज्ञान-प्रकर्ष इव प्रयोगप्रकर्षोऽपीति भावः। किन्तु तथापि शिष्यायाः मालविकायाः गुणः प्रकर्षः तद्विशेषेण तस्याः प्रयोगनैपुण्येन गणदासः उन्नमितः प्रशंसितः। तथाहि शास्त्रज्ञानस्य प्रयोगनैपुण्यस्य च उभयत्र तुल्यत्वेऽपि शिष्योपहितशिक्षाप्रदर्शनेन प्रकर्षनिर्णयाद् गणदास एव उत्कर्षभाग्जात इति भावः।

(ज) अथ प्रश्ने मालविकागतं मालविकासम्बन्धि कौलीनं जनश्रुतिः लोकवाद इति यावत्। "स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणा"मित्यमरः। किं श्रूयते, तत्सम्बन्धे भवती किं जानाति इति ज्ञातुमिच्छामीति भावः।

(झ) बाढं निश्चितं तस्यां मालविकायां भर्त्ता स्वामी अग्निमित्रः साभिलाषः

---

समा। উভয়েই শাস্ত্রবিৎ ও প্রয়োগনিপুণ। কিন্তু শিষ্যার নৃত্যগীত-নৈপুণ্যবাহুল্যে গণদাসকে অপেক্ষাকৃত প্রশংসা করা হইয়াছে। (ছ)

মধু। মালবিকাসংক্রান্ত লোকপ্রবাদ শুনিয়াছ কি ? (জ)

मधु। एदं साहावलम्बि बीअपूरअं गेण्ह। [एतत् शाखावलम्बि बीजपूरकं गृहाण।] ञ

समा। (नाट्येन बीजपूरकं गृहीत्वा।) हला, तुमं वि इदो पेसलदरं साहुजणस्सुस्सूसाए फलं पावेहि। [हला, त्वमपि इतः पेशलतरं साधुजनशुश्रूषया फलं प्राप्नुहि।] इति प्रस्थिता। (ट)

---

सानुरागः राजा मालविकायामनुरक्त इति यो लोकवादः श्रूयते स सत्य एवेति भावः। ननु यदि राजा मालविकायामनुरक्तस्तत्किमिति तां न सहसा गृह्णाति इत्याह— किन्तु इत्यादि। देव्या महिष्याः। चित्तं मानसं रक्षन् तव दाक्षिण्यभङ्गभयादित्यर्थः। आत्मनः प्रभुतां प्रभावं मालविकाया ग्रहणरूपं परविलक्षणशक्तिकार्य्यमित्यर्थः। न दर्शयति, मालविकापि न केवलं राजा इत्यपिशब्दार्थः। एषु दिवसेषु राजसाक्षात्कार-कालादनन्तरकालेषु, अनुभूता आसादिता मूर्च्छा मदनजन्यमोहः रविकिरणतापजन्य-ग्लानिश्च यया तथाभूता मालतीमाला मालतीकुसुमस्रक् इव म्लायमाना म्लानिपुक्ता लक्ष्यते दृश्यते, तथाहि मालविकादर्शनेन राजेव राजदर्शनेन मालविकापि सुतरां कामवेदनया म्लायति इति भावः। अतः अस्मात् अपरं न जाने, एतन्मात्रमेव जानामि इति भावः। मां विसर्ज्जय गन्तुम् आदिश, भगवत्या आदेशस्य कालविलम्बेन कर्त्तुमशक्यत्वादिति भावः।

(ञ) एतत् दृश्यमानं शाखावलम्बितं बीजपूरकं तदाख्यं फलं गृहाण आदत्स्व। अत्र नास्ति कापि बाधा इति भावः।

---

সমা। শুনিয়াছি, মহারাজ মালবিকার প্রতি অতিমাত্র অভিলাষ-পরবশ হইয়াছেন। কেবল মহারাণী ধারিণীর মনোরক্ষার জন্য আত্মপ্রভুতা-প্রদর্শনে বিরত আছেন। মালবিকাও যেন দিন দিন মূর্চ্ছার অনুভববশে মালতীমালার ন্যায় ম্লান হইয়া পড়িতেছেন বলিয়া দেখিতে পাওয়া যাইতেছে। ইহার পর আর কিছু জানি না। এক্ষণে আমায় ছাড়িয়া দাও। (ঝ)

মধু। এই শাখাবলম্বী বীজপূরক গ্রহণ কর। (ঞ)

মধু। সহি! সমং জ্জেব গচ্ছহ্ম। অহং বি ইমস্স চিরাঅমাণকুসুমোগ্গমস্স তবণীআসোঅস্স দোহলণিমিত্তং দেবীএ ণিবেদেমি। [সখি! সমমেব গচ্ছাবঃ। অহমপ্যস্য চিরায়মাণকুসুমোদ্গমস্য তপনীয়াশোকস্য দোহদনিমিত্তং দেব্যৈ নিবেদয়ামি।] (ঠ)।

---

(ট) ইতঃ অস্মাৎ বীজপূরকফলাৎ পেশলতরং কোমলতরম্ উৎকৃষ্টতরমিত্যর্থঃ। ফলম্ অভীষ্টার্থং সাধুজনশুশ্রূষয়া সজ্জনানাং সেবয়া প্রাপ্নুহি লভস্ব। এতেন পূর্ব্বত্রাপি বীজপূরকপদস্য ফলপরতাপক্ষ এব শ্রেয়ান্ ন পুষ্পপরতাপক্ষ ইতি মন্তব্যম্, পুষ্পপরতাবাদিনস্তু ইতঃ বীজপূরকবৃক্ষাৎ পেশলতরম্—অয়ং বৃক্ষঃ যথা ফলং লেভে তদপেক্ষয়া উৎকৃষ্টং ফলমিত্যর্থঃ।

(ঠ) সমম্ যুগপদেব, গচ্ছাবঃ ত্বমহঞ্চ একদৈব গচ্ছাবঃ দেবীসমীপমিতি শেষঃ। চিরায়মাণঃ বিলম্বমানঃ কুসুমোদ্গমঃ পুষ্পসম্ভবঃ যস্য তথাভূতঃ, পুষ্পপ্রকাশে বিলম্বমানস্য ইত্যর্থঃ। তপনীয়াশোকস্য সুবর্ণাশোকবৃক্ষস্য দোহদনিমিত্তম্ অচিরেণকুসুমোৎপত্তিকারণসম্বলনহেতবে ইত্যর্থঃ। দেব্যৈ রাজ্ঞ্যৈ ধারিণ্যৈ নিবেদয়ামি, তথাহি অয়মশোকং বহুকালাত্যয়েনাপি ন পুষ্পং প্রসূতে, তৎ কাচিৎ বরাঙ্গনা অত্র আগত্য সালঙ্কারস্য চরণস্য আঘাতরূপং দোহদং নির্ব্বর্ত্তয়তু তত এব অচিরাদস্য বৃক্ষস্য ফলোদ্গমো ভাবীতি দেব্যৈ কথয়ামীতি ভাবঃ।

রমণীপাদাঘাতে অশোকপুষ্পোৎপত্তিদোহদত্বে কবিপ্রসিদ্ধির্যথা—"পাদাঘাতাদশোকং বিকসতি বকুলং যোষিতামাস্যমদ্যৈ"রিত্যাদি, এতদ্ধি বক্ষ্যমাণস্য মালবিকায়া দোহদাধিকারস্য বিজ্ঞাপকম্ ইতি।

---

সখী। (নাট্যে গ্রহণ করিয়া) সখি! তুমিও সাধুজনের সেবা দ্বারা ইহা অপেক্ষা উৎকৃষ্ট ফল লাভ কর। (এই বলিয়া প্রস্থান) (ট)

মধু। সখি! এক সঙ্গেই যাইব। এই কনক অশোকের ফুল হইতে বিলম্ব হইতেছে। তজ্জন্য আমাকে মহারাণীর নিকট ইহার সাদ দিবার (ফুল ধরিবার ঔষধের) জন্য আবেদন করিতে হইবে। (ঠ)

समा। जुज्जदि, अहिआरो क्खु तुह। [ युज्यते, अधिकारः खलु तव। ] (ड)

( इति निष्क्रान्ते। )

## प्रवेशकः। (ढ)

[ ततः प्रविशति कामयमानावस्थो राजा वि्दूषकश्च। ] (ण)

राजा। ( आत्मानं विलोक्य। ) (त)

---

(ड) युज्यते देव्यै उक्तवृत्तान्तनिवेदनं युक्तमेव। यतः तव अधिकारः कर्त्तव्यं कर्म्म एतत्, यत् त्वं काननाधिकारे नियुक्तासीति भावः।

(ढ) प्रवेशकः, नाटकीयसन्दर्भभेदः, तल्लक्षणं यथा—"प्रवेशकोऽनुदात्तोक्त्या नीच-पात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" विष्कम्भके यथा वृत्तानां केषाञ्चित् अंशानां वर्त्तिष्यमाणानाञ्च केषाञ्चित् अंशानां निदर्शनं तथा अत्रापि इति "शेषं विष्कम्भके यथा" इत्यस्य अभिप्रायः। एतदन्तः प्रतिमुखसन्धिर्ज्ञेयः— तल्लक्षणं यथा—"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः। लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥" इति।

(ण) ततः समाहितिकाया मधुकरिकायाश्च निष्क्रमानन्तरम्। कामयमानस्य सकामस्य इव अवस्था यस्य तथाभूतः, कार्श्यपाण्डुताप्रभृतिलक्षणयुक्तः। एतत् केवलम् राज्ञो विशेषणम्।

(त) आत्मानं स्वशरीरं विलोक्य दृष्ट्वा, निजशरीरगतकार्श्यप्रभृतिकमुन्नीय इत्यर्थः। कथयतीति शेषः।

---

সমা। তা বটে, সখি! ইহা তোমারই কার্য্য। (ড)

[ এই বলিয়া উভয়ের নিষ্ক্রমণ ]

প্রবেশক। (ঢ)

( অনন্তর কামাকুলিতাবস্থ রাজা ও বিদূষক উভয়ের প্রবেশ। ) (ণ)

রাজা। ( নিজের দিকে দৃষ্টিপাত করিয়া। ) (ত)

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत् सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम् ॥१॥

[ अन्वयः। दयितालिङ्गनसुखे असति शरीरं क्षामं स्यात्, सा क्षणमपि न दृश्यते इति चक्षुः सास्रं भवेत्, हृदय! त्वं तया सारङ्गाक्ष्या कदाचित् विरहितं न असि, निर्वाणे प्रसक्ते किं परितापं व्रजसि।१। ]

---

१। तदेव वक्तव्यमाह—शरीरमित्यादिना। दयितायाः प्रियतमायाः आलिङ्गनसुखे आश्लेषजन्ये आनन्दे असति अवर्त्तमाने प्रियायाः समागमविरहे सति इत्यर्थः। शरीरं देहः क्षामं क्षयप्राप्तं कृशमिति यावत् स्यात्। तदभावे प्रियाचिन्तनमात्रपरायणस्य भोजनादिवैमुख्येन वर्त्तमानत्वात् शरीरक्षामताया अवश्यम्भावात् ममापि प्रियाविरहवतः तथा शरीरक्षामता इति प्रस्तुतार्थः। सा दयिता क्षणम् अत्यल्पकालमपि व्याप्य न दृश्यते चाक्षुषप्रत्यक्षविषयीभवति इति हेतोः चक्षुः सास्रं अश्रुपूर्णं भवेत्, ममापि तद्दर्शनाभावेन निरन्तरं चक्षुः सास्रं तिष्ठतीति भावः। एतेन प्रियाजनविरह एव विकारोपस्थिति-कारणं नतु प्रियासङ्गतिरिति स्थितम्। शरीरस्य क्षये नेत्रस्य च अश्रुपूर्णत्वे कारणमस्ति, किन्तु हृदयस्य परितापे किमपि कारणं नास्ति तथापि कथं स इत्येव प्रश्नार्थमाह—तयेत्यादिना। हे हृदय! त्वं तया सारङ्गाक्ष्या हरिणलोचनया प्रियया मालविकया कदाचित् कस्मिन्नपि काले, तद्दर्शनादारभ्य इदानीं यावत् न विरहितं त्यक्तमसि, सर्वदा एव त्वया तस्याश्चिन्तनात् मानसी तद्रूपस्य जागरूकत्वात् सन्ततमेव तत्समागम इति भावः। अतः निर्वाणे शान्तौ प्रसक्ते योग्ये सति निर्वृतिलाभयोग्यतायां सत्यामित्यर्थः। किं कथं परितापं व्रजसि लभसे, न युज्यते तव निरन्तरं प्रियासङ्गतस्य परिताप-लेशोऽपीति भावः। अत्र अप्रस्तुतात् सामान्यात् साधारणजनस्य दयितालिङ्गनासत्तायां शरीरकार्श्यात् तद्दर्शनाभावेन चक्षुषः स्रासत्वाच्च प्रस्तुतस्य विशेषस्य राजगततत्तत्पदार्थस्य व्यञ्जनात् अप्रस्तुतप्रशंसालङ्कार इति। सारङ्गाक्ष्या इत्यत्र समासगता उपमा। क्षणमपि इत्यपिशब्देन बहुकालदर्शनस्य फलत एव व्यावर्त्तनप्रत्ययात् अर्थापत्तिः। प्रियाविरह-

বিদূ। অলং ভবদো ধীরদং উজ্‌ঝিঅ পরিদেবিদেণ। দিট্ঠা মএ মালবিআএ পিঅসহী বউলাবলিয়া, সুণাবিদা অ অত্থং জো ভবদা সংদিট্ঠো। [অলং ভবতো ধীরতামুজ্‌ঝিত্বা পরিদেবিতেন? দৃষ্টা ময়া মালবিকায়াঃ প্রিয়সখী বকুলাবলিকা, শ্রাবিতা চার্থং যো ভবতা সন্দিষ্টঃ।] (থ)

রাজা। ততঃ কিমুক্তবতী? (দ)

---

রূপস্য পরিতাপকারণস্য অসত্ত্বেঽপি পরিতাপস্য নিবন্ধাত্ বিভাবনা, নির্ব্বৃতিকারণে প্রিয়াবিরহাভাবে সত্যপি তদভাবাত্ বিশেষোক্তির্ব্বা ইতি সন্দেহবশাত্ সন্দেহসঙ্করঃ। "নির্বাণমস্তগমনং নির্ব্বৃতির্গজমজ্জনম্। সঙ্গমশ্চাপবর্গশ্চ" ইতি মেদিনীবচনবশাত্ নির্বাণশব্দস্য নির্ব্বৃতিরূপার্থতায়াঃ সত্ত্বেঽপি অপ্রসিদ্ধত্বাত্ নিহতার্থত্বং দোষঃ। বৃত্তং শিখরিণী নাম।

(থ) ধীরতাং ধৈর্য্যম্ উজ্‌ঝিত্বা বিহায় পরিদেবিতেন ক্রন্দনেন অলম্, ধৈর্য্যং ধারয়তু ভবান্ ইতি ভাবঃ। বকুলাবলিকা তদাখ্যা, ভবতা যঃ অর্থঃ সন্দিষ্টঃ বাচিকতয়া প্রেরিতঃ, তম্ অর্থং বিষয়ং শ্রাবিতা বিজ্ঞাপিতা।

(দ) ততঃ তচ্ছ্রাবণানন্তরং, কিম্ উক্তবতী কথিতবতী সা বকুলাবলিকেতি শেষঃ।

---

সেই দয়িতা মালবিকার আলিঙ্গনসুখের অসদ্ভাববশতঃ, শরীর কৃশ হইয়া গিয়াছে। ক্ষণকালও তাঁহাকে দেখিতে পাইতেছে না বলিয়া, চক্ষুও অশ্রুপূর্ণ হইয়াছে। কিন্তু হে হৃদয়! তোমার ত সেই হরিণনয়নার সহিত কোন কালেই বিচ্ছেদ নাই। সুতরাং তোমার পক্ষে শান্তিসুখ সর্ব্বথা সঙ্ঘটিত হইলেও, তুমি কি জন্য পরিতাপপ্রাপ্ত হইতেছ? ॥১॥

বিদূ। ধৈর্য্য ত্যাগপূর্ব্বক আপনার বিলাপ করিবার প্রয়োজন নাই। মালবিকার প্রিয়সখী বকুলাবলিকার সহিত আমার দেখা হইয়াছিল। তাহাকে আপনার সন্দিষ্ট বিষয় শুনাইয়াছি। (থ)

विदू। विसवेहि भट्टारअं। अणुगिह्वीदह्मि इमिणा णिओएण। किन्तु सा तवस्सिणी देवीए अहिअं रक्खन्तीए णाअरक्खिदो विअ णिही ण सुहं समासादइदव्वा। तहवि घड़इस्सं त्ति। [विज्ञापय भट्टारकम्। अनुगृहीतास्मि अनेन नियोगेन। किन्तु सा तपस्विनी देव्या अधिकं रचन्त्या नागरचित इव निधिः न सुखं समासादयितव्या। तथापि घटयिष्यामीति।] (ध)

राजा। भगवन्! सङ्कल्पयोने! प्रतिबन्धवत्स्वपि विषयेष्वभिनिवेशकारी किं तथा प्रहरसि, यथा जनोऽयं न कालान्तरच्चमो भवति? (सविस्मयम्)। (न)

---

(ध) भट्टारकं राजानं "राजा भट्टारको देव" इत्यमरः। अनेन नियोगेन आदेशेन अनुगृहीता प्रसादितास्मि, सा तपस्विनी वराकी मालविका देव्या धारिण्या अधिकम् अत्यर्थं रचन्त्या सावधानं स्थापयन्त्या इत्यर्थः। नागेन सर्पेण रचितः निधिः धनभाण्डमिव सुखम् अनायासेन न समासादयितव्या लब्धव्या। दृश्यते अनेकेषु स्थलेषु श्रूयते च—धनकलसादिकं बहोः कालात् भूमिक्षिप्तं भुजङ्गादिभिर्वेष्टनेन रच्यते, तदुपद्रवादेव तद्धनपार्श्वं साधारणा नाधिगन्तुं चमन्ते, तद्धि धनं यचाधिष्ठितमिति व्यवह्रियते। तथापि देव्या निपुणतरं रचणेन आयासेन लाभयोग्यतायामपीत्यर्थः। घटयिष्यामि मेलयिष्यामि राज्ञा सह मालविकामिति शेषः। इति सा वकुलावलिका उक्तवतीति पूर्व्वेणान्वयः समाप्यः। अतस्त्वं धैर्य्यमवलम्बस्व, अवश्यमचिरादेव मालविकया काम्यमानया सह सम्मेलनस्य सम्भवादिति विदूषकाभिप्रायः।

---

রাজা। তাহাতে সে কি বলিল? (দ)

বিদূ। "প্রভুকে বিজ্ঞাপিত করুন, আমি এবংবিধ নিয়োগ দ্বারা অনুগৃহীত হইয়াছি। কিন্তু দেবী ধারিণী সেই সরলা মালবিকাকে ফণিবেষ্টিত নিধির ন্যায় অতি সাবধানে রক্ষা করিতেছেন। যাহাই হউক, মালবিকা অনায়াস-লব্ধ না হইলেও আমি তাহার সহিত মিলন ঘটাইব।(ধ)

क्व रुजा हृदयप्रमाथिनी
क्व च ते विश्वसनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते
तदिदं मन्मथ दृश्यते त्वयि ॥२॥

[ अन्वयः । हृदयप्रमाथिनी रुजा क्व ? विश्वसनीयं ते आयुधञ्च क्व ? मन्मथ ! मृदु तीक्ष्णतरं यत् उच्यते, तत् इदं त्वयि दृश्यते ।२। ]

---

(न) भगवन् ! ऐश्वर्य्यसम्पन्न ! अलौकिककर्म्मसाधनक्षमत्वात् सम्बोधनमिदम् । सङ्कल्पः नायकानां नायिकानाञ्च परस्परं प्रति कामनाविशेषः स एव योनिः कारणं यस्य तथाभूतः, कामदेवस्य कामनाविशेषादेव सम्भव इति तथात्वम् । प्रतिबन्धवत्सु विरोधियुक्तेषु वर्त्तमानप्रतिबन्धकेषु अपि विषयेषु कार्य्येषु अभिनिवेशकारी आग्रहातिशय-सम्पादकः सन् किं कथं तथा तेन प्रकारेण अतिशयेन इत्यर्थः । प्रहरसि पीड़यसि, तथाहि सत्प्रतिबन्धकस्य विषयस्य लाभासम्भवात् न युक्तं तव ईदृशमनर्थकं पीड़नमिति भावः । यथा येन प्रकारेण पीड़ने अयं मल्लक्षणः जनः कालान्तरक्षमः कालविलम्बसहः न भवति, तथाहि यदि इतःपरमपि ईदृशं मां पीड़येस्तदा नूनं मे जीवनमेव न तिष्ठेत् अतः करुणां कृत्वा मम पीड़नात् विरमेति भावः । सविस्मयं विस्मयसहकारेण, विस्मयकारणञ्च परतो व्यक्तीभविष्यति ।

२ । अथ पुष्पायुधस्य पुष्पमयेनायुधेन कठोरपीड़ाया असम्भवेऽपि सातिशय-पीड़ाजननम् विस्मयकारणमाह—क्वेत्यादिना । हृदयं चित्तं प्रमथ्नाति पीड़यति या सा हृदयप्रमाथिनी चित्तस्य सुतरां पीड़ादायिनी, रुजा उपतापः क्व कुत्र । विश्वसनीयं विश्वासयोग्यम् अतिकोमलमित्यर्थः । ते तव आयुधं पुष्पमयमस्त्रञ्च क्व कुत्र अनयोरत्यन्तः प्रभेदः, नहि कोमलाद्वस्तुनः तथा कठोरा पीड़ा सम्भवति तद्विपर्य्यय एव विस्मयकरः,

---

রাজা। ভগবন্ কাম! যাহাতে পদে পদেই বিঘ্ন, তাদৃশ বিষয়ে অভিনিবিষ্ট হইয়া, আমাকে এরূপে প্রহার করিতেছেন, যাহাতে আর কালবিলম্ব সহ্য করিতে পারিতেছি না। ( সবিস্ময়ে )। (ন)

विदू। णं भणामि, तस्सिं साहणिज्जे कज्जे किदो मए उवाश्रोवक्खेवोत्ति। ता पज्जवत्थावेदु भवं अत्ताणम्। [ननु भणामि, तस्मिन् साधनीये कार्य्ये कृतो मया उपायोपक्षेप इति। तत् पर्य्यवस्थापयतु भवानात्मानम्।] (प)

---

हे मन्मथ! मनोवेदनाहेतुभूत काम! मृदु कोमलं वस्तु तीक्ष्णतरम् अतिसूक्ष्माग्रं प्रखरञ्च इति यत् उच्यते प्रवादवाक्येषु व्यवह्रियते लोकैरिति शेषः। तत् प्रवादवाक्यार्थ-सामञ्जस्यं त्वयि पुष्पायुधे मन्मथे दृश्यते अनुभूयते, तथाहि तव पुष्पं कोमलमपि मयि कठोरां वेदनां निर्व्वर्त्तयति, अतएव तव आयुधे एव तस्य वाक्यस्य सत्यता उपलभ्यते नान्यत्र इति भावः। अत्र हृदयप्रमाथिन्या रुजायाः विश्वसनीयस्य आयुधस्य च क्वयेन प्रभेदातिशयकथनात् मृदुलतीक्ष्णतरत्वयोश्च विरूपयोः सङ्घटनात् विषमालङ्कारद्वयी तयोश्च परस्परम् अपेक्ष्यापेक्षिभावविरहात् संसृष्टिः। विपूर्व्वस्य असेः सकर्म्मकत्वस्यापि दर्शनात् कर्म्मण्यनीयप्रत्ययः। सुन्दरीवृत्तम्।

(प) अथ पुनरपि विदूषकः राजानं प्रमोदयति—नन्वित्यादिना। तस्मिन् साधनीये सम्पाद्ये कार्य्ये मालविकया सह तव समागमरूपे कर्म्मणि, उपायस्य तत्साधनयोग्यस्य हेतोः उपक्षेपः उपन्यासः मया कृतः विहितः, वकुलावलिका मया नियुक्ता सैव यथायथं तव कार्य्यं साधयिष्यति इति भावः। तत् तस्मात् भवान् आत्मानं स्वं पर्य्यवस्थापयतु स्वस्थीकरोतु, अलम् उत्कण्ठया, उत्कण्ठा हि कार्य्यसाफल्याशाया असत्त्वे युज्यते ननु अचिरमेव कार्य्यफललाभाशायाः सत्त्वे इति कथमिदानीं सत्वरं भाविनि कार्य्ये उत्कण्ठां व्रजसि इति भावः।

---

মর্ম্মান্তিক দুঃখজনক রোগই বা কোথায়, আর তোমার বিশ্বস্ত আয়ুধই বা কোথায়? হে মন্মথ! লোকে যাহাকে মৃদু হইলেও, অতিমাত্র তীক্ষ্ণ বলিয়া থাকে, তোমাতে তাহাই দৃষ্ট হইতেছে ॥২॥

বিদূ। নিশ্চয়ই আমি বলিতেছি, সেই কর্ত্তব্য কর্ম্ম সাধন করিবার

राजा। अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क्व नु खलु यापयामि ?। (फ)

विदू। अज्ज एव्व पढ़मावदारसुहआणि रत्तकुरबआणि उवाअणं पेसिअ णववसन्तावदारव्ववदेसेण इरावदीए णिउणिआमुहेण पत्थिदो भवं,—इच्छेमि अज्जउत्तेण सह दोलाहिरोहणं अणुभविदुं त्ति। भवदा वि से पड़िस्सादं। ता पमदवणं एव्व गच्छम्ह। [अद्यैव प्रथमावतारसुभगानि रक्तकुरुवकाणि उपायनं प्रेष्य नववसन्तावतारव्यपदेशेन इरावत्या निपुणिकामुखेन प्रार्थितो भवान्—इच्छाम्यार्य्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति। भवताप्यस्याः प्रतिज्ञातम्। तत् प्रमदवनमेव गच्छावः।] (ब)

---

(फ) अथ-शब्दः प्रश्ने। इमं वर्त्तमानं दिवसशेषं दिनस्य अवशिष्टभागम् उचितव्यापारः कर्त्तव्यकर्म्म तस्मात् विमुखेन चेतसा चित्तेन उपलक्षित इत्यर्थः। क्व कस्मिन् प्रदेशे यापयामि अतिवाहयामि, तथाहि मम इदानीं यादृशी अवस्था उपस्थिता तया अवस्थया अवशिष्टं दिवसभागमेव यापयितुमतितराम् अशक्तोऽस्मि कुत्रापि चित्तस्थैर्य्यस्य अलाभादिति भावः।

(ब) अद्यैव अस्मिन्नेव दिवसे, प्रथमावतारेण प्रथमसमुद्गमेन सुभगानि सुन्दराणि रक्तकुरुवकाणि रक्तवर्णानि कुरुवककुसुमानि उपायनम् उपहारं प्रेष्य नववसन्तावतारव्यपदेशेन अभिनववसन्तकालोदयच्छलेन इरावत्या तदाख्यया राज्ञ्या निपुणिकायाः तदाख्यायाः कस्याश्चित् मुखेन भवान् प्रार्थितः याचितः। किं प्रार्थित इत्याह—इच्छामी-

---

জন্য আমি উপায় করিয়া রাখিয়াছি। অতএব আপনি আত্মাকে প্রকৃতিস্থ করুন। (প)

রাজা। এক্ষণে কর্ত্তব্য-কার্য্যপরাঙ্মুখ হৃদয় লইয়া এই দিবসের অবশিষ্ট সময় কোথায় যাপন করিব ? ( ফ )

राजा। न क्षममिदम्। (भ)

विदू। कहं विअ? [कथमिव?] (म)

राजा। वयस्य! निसर्गनिपुणाः स्त्रियः। कथमन्यसंक्रान्त-हृदयमुपलालयन्तमपि ते सखी न मां लक्षयिष्यति? अतः पश्यामि। (य)—

---

त्यादिना। आर्य्यपुत्रेण स्वामिना भवता सह दोलाधिरोहणं दोलारोहणमहोत्सवम् अनुभवितुम् इच्छामीति, एतत् इरावत्या वचनानुकरणेनोक्तम्। अस्याः इरावत्याः प्रतिज्ञातं प्रतिज्ञा कृता, इरावत्या सह दोलामधिरुह्य विलासमनुभविष्यामि इति प्रतिज्ञा-प्रकारः। तत् प्रमदवनं विलासोपवनम् एव गच्छावः, तत्र गत्वा दिवसशेषमतिवाहयितुं क्षमेथा इति भावः।

(भ) इदम् इरावत्या सह दोलारोहणेन दिवसशेषातिवाहनरूपं कर्म्म न क्षमं न योग्यं, तथाहि मनसि मालविकाया अनुरागमाधाय वहिर्यत् इरावत्यां प्रणयप्रकाशनेन कालक्षेपणं तदतिमात्रमशक्यमिव मया वहिःप्रकाशं गते च मालविकानुरागे महती विपत्तिरिति, एतदेव परतो व्यक्तं भविष्यति।

(म) कथमिव केन हेतुना इदं न क्षममिति शेषः।

(य) निसर्गनिपुणाः स्वभावतः सुचतुराः, अन्यस्यां तद्भिन्नायां संक्रान्तं लग्नं हृदयं यस्य तम् अन्यानुरक्तं माम् उपलालयन्तं स्नेहं प्रदर्शयन्तमपि ते तव सखी इरावती कथं

---

विदू। অদ্যই প্রথম প্রস্ফুটিত বলিয়া পরমসুন্দর রক্ত কুরুবক সকল উপঢৌকন স্বরূপ প্রেরণ করিয়া; নূতনবসন্তাবতারচ্ছলে ইরাবতী নিপুণিকার মুখে বলিয়া পাঠাইয়াছেন, "আর্য্যপুত্রের সহিত দোলাধিরোহণ করিতে আমার অভিলাষ হইয়াছে।" আপনিও তাহাতে প্রতিশ্রুত হইয়াছেন। অতএব প্রমদবনেই গমন করি, চলুন। (ব)

রাজা। ইহা হইতেই পারে না। (ভ)

বিদূ। কি নিমিত্ত? (ম)

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां
न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥२॥

[ अन्वयः । प्रणयः विहन्तुम् उचितः वरम्, हि बहवः खण्डनहेतवः दृष्टाः । पूर्वाभ्यधिकः अपि भावशून्यः उपचारविधिः मनस्विनीनां न वरम् (भवति) । २ । ]

---

न लचयिष्यति ज्ञास्यति, मम अन्यस्यामनुरागं न विभावयिष्यतीत्यर्थः । अपितु निश्चितमेव सा सुचतुरा मालविकायां ममानुरागं विभावयिष्यत्येव इति तत्र इदानीं गमनं न योग्यं मन्ये इति भावः । अतः अस्मात् हेतोः पश्यामि जानामि वक्ष्यमाणमिति शेषः ।

२ । अथ द्रष्टव्यमुपायमेवाह—उचित इत्यादि । प्रणयः प्रीतिः प्रार्थनाविशेषो वा विहन्तुं प्रत्याख्यातुम् उचितः युक्त इति वरम्, तथाहि इरावत्या दोलाधिरोहणप्रार्थना अद्य वरं विहन्तव्या इति भावः । ननु प्रणयभङ्गोऽपि निष्कारणं कथं क्रियतामित्याकाङ्क्षायामाह—बहव इत्यादि । खण्डनस्य प्रणयभङ्गस्य हेतवः कारणानि बहवः एव दृष्टाः, तथाहि यत्किञ्चित् व्यपदिश्य प्रणयभङ्गः कर्त्तुं शक्यते अतः संप्रति राजकार्य्यादीनामपरिहार्य्यत्वं निवेद्य प्रणयखण्डनं कर्त्तव्यं मयेति विवेचितमिति भावः । ननु किमिदानीं अकाण्डे इरावत्या दृढं प्रणयं प्रत्याख्यातुम् इच्छसि, क्रियताम् अन्ततः वहिरपि प्रणयप्रकाश इत्याकाङ्क्षायामाह—उपचारेत्यादि । पूर्वस्मात् अनुष्ठितपूर्वात् अभ्यधिकः अतिशयितः अपि का कथा पूर्वतः स्वल्पतरस्य इति भावः । भावशून्यः अनुरागरहितः उपचारविधिः उपलालनक्रिया मनस्विनीनां प्रशस्तचेतसां स्त्रीणां सम्बन्धे न वरं प्रीतिकरः भवतीति शेषः । तथाहि अहं मालविकायामासक्तचित्तः, इरावत्यां वहिःप्रीतिं प्रदर्शयन्नपि नूनं तया प्रवञ्चनापूर्ण एव विभावितः स्यां, तेन च महदनिष्टमेव

---

রাজা। বয়স্য! স্ত্রীজাতি স্বভাবতই চতুরা; সুতরাং আমি অনুকূল ব্যবহার করিলেও, তোমার সখী কি জানিতে পারিবে না যে, আমার হৃদয় অন্যের প্রতি আসক্ত হইয়াছে? অতএব দেখিতেছি।—(য)

विदू। णारिहदि भवं अन्तेउरपड़िट्ठिदं दक्खिणं एक्कपदे पिट्ठदो कादुम्। [ नार्हति भवानन्तःपुरप्रतिष्ठितं दाक्षिण्यमेकपदे पृष्ठतः कर्त्तुम् (र)। ]

राजा। (विचिन्त्य)। तेन हि प्रमदवनमार्गमादेशय। (ल)

---

सम्भवेत्, अतएव तं पन्थानमपहाय प्रणयस्यास्य दूरावतीकृतस्य खण्डनमेव प्रशस्यतरमिति भावः। अत्र मनस्विनीनामिति सामान्यादप्रस्तुतात् प्रस्तुतायाः विशेषभूताया इरावत्याः प्रत्ययेन अप्रस्तुतप्रशंसालङ्कारः। पूर्वाभ्यधिकोऽपीत्यपिशब्देन दण्डापूपिकन्यायात् स्वल्पतरस्य उपचारविधेरनुषङ्गत एव अप्रियत्वप्रतीतेरर्थापत्तिः। भावशून्यत्वरूपपदार्थस्य न वरमिति पदार्थहेतुत्वात् काव्यलिङ्गमपीति। वृत्तं मालभारिणी नाम।

(र) भवान् अन्तःपुरेषु शुद्धान्तवनितासु प्रतिष्ठितं दृढ़भावेन निहितं दाक्षिण्यम् औदार्य्यम् एकपदे अकस्मादेव पृष्ठतः कर्त्तुं पश्चात्कृत्य अवस्थातुं न अर्हति, तथाहि पूर्वतनस्य गाढ़प्रणयस्य रक्षणे एव यत्नः कर्त्तव्यः, नतु प्रणयभङ्गेन तद्विपर्य्यये इति त्वदुक्तं न युक्तं मन्ये इति भावः। एतेन क्रमशः मालविकाया गुणग्रामेण तवानुरागस्य भविष्यत्त्वेऽपि न सहसा तद्भङ्गः श्रेयान् इति विदूषकाभिलाषो व्यज्यते।

(ल) तेन एकपदे एव प्रणयभङ्गस्य अकर्त्तव्यतया इत्यर्थः। प्रमदवनमार्गम् उपवन-पथम् आदिशय निर्द्दिश यथा तेन मार्गेण गत्वा प्रतिज्ञां पालयेयमिति भावः।

---

প্রণয় খণ্ডন করা বরং প্রশস্ত কল্প, কেননা খণ্ডন করিবার অনেক কারণও লক্ষিত হইয়া থাকে। তথাপি, প্রথমে অধিক প্রণয় প্রদর্শন করিয়া অধুনা ভাবশূন্য প্রণয়প্রদর্শন কোন মতেই উচিত কল্প নহে। উহাতে ছলনামাত্র করা হয়, অথবা মাত্র মন রক্ষা করা হইয়া থাকে ॥৩॥

বিদূ। দেখিতেছি—আপনি অন্তঃপুররমণীগণের প্রতি নিহিত বদ্ধমূল অনুরাগ পরিত্যাগ করিতে সহসা সমর্থ হইতেছেন না। (র)

রাজা। ( বিশেষ চিন্তা করিয়া ) তবে প্রমোদবনেরই পথ প্রদর্শন কর। (ল)

विदू। इदो इदो भवं। [ इत इतो भवान्। ]

[ उभौ परिक्रामतः। ] (व)

विदू। णं एदं पमदवणं पवणदरचलाहिं पल्लवाङ्गुलीहिं तुवरेदि विअ भवन्तं पवेसिदुं। [ नन्वेतत् प्रमदवनं पवनदरचलाभिः पल्लवाङ्गुलीभिः त्वरयतीव भवन्तं प्रवेष्टुम्। ] (श)।

राजा। ( स्पर्शं रूपयित्वा। ) अभिजातः खलु वसन्तः। सखे! पश्य।—(ष)

---

(व) इतः इतः भवान् आगच्छतु इति शेषः, अनेन पथा प्रमदवनमेहीति भावः। सर्वनामशब्दोत्तरं सार्वविभक्तिकस्तसिल् इति तृतीयार्थे तसिल् अथवा सप्तम्याः स्थाने। उभौ राजा विदूषकश्च, परिक्रामतः प्रमदवनमुद्दिश्य चरणचारणां कुरुत इत्यर्थः।

(श) एतत् दृश्यमानम् प्रमदवनं उपवनम्, पवनेन वायुना दरम् ईषत् चलाभिः चञ्चलाभिः पल्लवाङ्गुलीभिः किशलयमयीभिः अङ्गुलीभिः, भवन्तं प्रवेष्टुं प्रवेशकर्म्मणि त्वरयति सत्वरं करोतीव प्रवेष्टुमित्यत्र क्रियार्थक्रियायामुपपदीभूतायां भिन्नकर्तृक-स्थलेऽपि तुम्प्रत्ययस्य नियमात् तुम्, परे तु एककर्तृकतावादिनः प्रवेष्टुमित्यत्र अन्तर्भूत-ण्यर्थतास्वीकारात् प्रकृते एककर्तृकतां निर्वाह्य तुम्प्रत्ययं समादधते। अत्र पल्लवेषु अङ्गुलीत्वारोपात् रूपकम्, तदुत्थापिता च प्रमदवने राज्ञः सत्वरतासम्पादनोत्प्रेक्षा इवशब्देन वाच्या इति सङ्करः।

(ष) स्पर्शं रूपयित्वा वायोरिति शेषः, वर्णयिष्यमाणपदार्थेषु अपरेषां स्पर्शेन ग्रहस्य असामञ्जस्यात्। वसन्तः पुष्पसमयः अभिजातः समुद्भूतः खलु निश्चितं, यतः मलया-निलस्य संसर्गमनुभवामीति भावः। सखे! वयस्य! विदूषकस्य सम्बोधनमिदम्। पश्य अवधारय वक्ष्यमाणश्लोकार्थमिति शेषः।

---

বিদূ। এদিকে এদিকে। ( উভয়ের পরিক্রমণ। ) (ব)

বিদূ। এই প্রমদবন পবনবলে প্রচলিত পল্লবরূপ অঙ্গুলি-সঙ্কেতে আপনাকে প্রবেশ করিবার জন্যই যেন ত্বরান্বিত করিতেছে। (শ)

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
　सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
　सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥

[ अन्वयः । माधवेन उन्मत्तानां कोकिलानां श्रवणसुभगैः कूजितैः सानुक्रोशं मनसिजरुजः सह्यतां पृच्छता इव चूतप्रसवसुरभिः दक्षिणो मारुतः सान्द्रस्पर्शः करतल इव मे अङ्गे व्यापृतः । ४ । ]

---

४ । अथ मलयानिलस्य अनुभूतस्य अवस्थां विवृणोति—उन्मत्तानामित्यादिना । माधवेन वसन्तेन उन्मत्तानां सहकाररसकषायितकण्ठानां वसन्तोदयादुन्माद्यतामित्यर्थः । कोकिलानां कलकण्ठानां श्रवणसुभगैः श्रुतिसन्तर्पणैः कूजितैः निस्वनैः सानुक्रोशं सकरुणं यथा तथा मनसिजरुजः कामजनितायाः पीड़ायाः सह्यतां सहनीयतां "अपि सह्या भवतां कामवेदना" इत्येवंरूपेण पृच्छता जिज्ञासमानेन इव मे मम अङ्गे कामसन्तापतीव्रे शरीरे सान्द्रस्पर्शः सुकोमलस्पर्शः करतल इव चूतप्रसवैः रसालमुकुलैः सुरभिः सुगन्धः दक्षिणः दक्षिणशैलादागतः मलयशैलीय इत्यर्थः मारुतः वायुः व्यापृतः आमृष्टः । तथाहि यथा कश्चित् सदयहृदयः कस्यचित् कष्टमभिवीक्ष्य सुदुःखितः करतलं तद्देहे परामृश्य वेदनायाः सह्यतां पृच्छति, तथैव वसन्तः दक्षिणानिलरूपं करतलं मम शरीरे आमृश्य "अपि सह्या कामवेदना भवता"मिति कोकिलकूजनैः पृच्छतीव इति भावः । कोकिलशब्दः चूतप्रसवाः मलयानिलश्च इत्येते सर्व्वे एव वसन्ताविर्भावविज्ञापका इति ।

अत्र मनसिजपीड़ायाः सह्यताप्रश्नस्य माधवे सम्भावनाया इवशब्देन प्रतीतेः क्रियोत्प्रेक्षालङ्कारः, तेन च कोकिलकूजितेषु प्रश्नकरणोपयोगिवाक्यत्वारोपो गम्यः । दक्षिणे मारुते करतलत्वस्य सम्भावनाया इवशब्देन प्रतीतेश्च द्वितीया उत्प्रेक्षा । "कृपा

---

রাজা। ( নাট্যে স্পর্শ অনুভব করিয়া ) নিশ্চয়ই বসন্তের আবির্ভাব হইয়াছে। সখে! দেখ, কোকিলকুল উন্মত্ত হইয়া শ্রুতিমধুর শব্দ

विदू। पविस णिव्वुदिलाहाअ। [प्रविश निर्वृतिलाभाय।] (ख)

[उभौ प्रविशतः।] (छ)

विदू। अवहाणेण दिट्ठिं देहि। एदं क्खु भवन्तं विअ लोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावइदिअं वसन्तकुसुमणेवत्थं गहीदम्। [अवधानेन दृष्टिं देहि। एतत् खलु भवन्तमिव लोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेशलज्जापयितृकं वसन्तकुसुमनेपथ्यं गृहीतम्।] (ज)

---

दयानुकम्पा स्यादनुक्रोश" "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इति चामरः। "सान्द्रः स्निग्धस्तु मेदुर"इत्यमरः। वृत्तं मन्दाक्रान्ता नाम। योग्यश्चेदं वृत्तं विरहावस्थायां विरहिण उक्तौ, यथा मेघदूते।

(ख) निर्वृतेः सन्तोषस्य लाभाय अधिगमाय प्रविश प्रमदवने इति शेषः।

(छ) उभौ राजा विदूषकश्च प्रविशतः प्रमदवने इति शेषः।

(ज) अवधानेन अभिनिवेशसहकारिणा, दृष्टिं देहि दृष्टिपातं कुरु प्रमदवनस्थितवृक्षलतादौ इति शेषः।

एतत् दृश्यमानं भवन्तं लोभयितुकामया आसक्तं कर्त्तुकामया इव प्रमदवनलक्ष्म्या उद्यानशोभया युवतिवेशस्य तरुणीजनयोग्यपरिच्छेदस्य लज्जापयितृकं त्रपासम्पादकं तद्वेशादुत्कर्षातिशयेन लज्जासम्पादकमित्यर्थः। वसन्तकुसुमानि वासन्तपुष्पाणि

---

করিতেছে। বোধ হইতেছে বসন্ত যেন সদয় হইয়া, আমাকে জিজ্ঞাসা করিতেছে,—'আপনার ত কামকৃত বেদনা সহ্য হইয়াছে?' সহকারকুসুমগন্ধে আমোদিত দক্ষিণানিল আমার অঙ্গ স্পর্শ করিতেছে। বোধ হইতেছে, বসন্ত যেন আপনার অতিমাত্র স্পর্শসুখবিশিষ্ট করতল আমার দেহে ন্যস্ত করিতেছে ॥১॥

বিদূ। শান্তিলাভের জন্য প্রবেশ করুন। (খ)

[উভয়ের প্রবেশ। (ছ)]

राजा। ननु विस्मयादेतदवलोकयामि। (क)

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः

प्रत्याख्यातविशेषकं कुरुवकं श्यामावदातारुणम्।

आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः

सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥५॥

[अन्वयः। रक्ताशोकरुचा बिम्बाधरालक्तकः विशेषितगुणः, श्यामावदातारुणं कुरुवकं प्रत्याख्यातविशेषकम्। लग्नद्विरेफाञ्जनैः तिलकैश्च तिलकक्रिया आक्रान्ता, माधवी श्रीः योषितां मुखप्रसाधनविधौ सावज्ञा इव (राजते)। ५। ]

---

तान्येव नेपथ्यं वेशरचनं तैः सम्पादितं नेपथ्यं वा गृहीतं धृतम्। अत्र लोभयितु-कामया इव इत्यनेन कुसुमनेपथ्यग्रहणफलस्य लोभनस्य उत्प्रेक्षणात् फलोत्प्रेक्षा। युवतीत्यादिविशेषणेन कुसुमनेपथ्यस्य युवतिवेशापेक्षया उत्कर्षप्रत्ययात् व्यतिरेकः। राजनि नायकत्वस्य वनलक्ष्म्याञ्च नायिकायाः व्यवहारसमारोपात् समासोक्तिश्चेति सङ्करः। परवाक्यार्थस्य पूर्व्ववाक्यार्थं प्रति हेतुताप्रत्ययात् काव्यलिङ्गमपीति वदन्ति केचित्। "लज्जापयितृक"मित्यत्र लज्जाशब्दात् करोत्यर्थे इनन्तात् कारादित्वादीप् ततस्तृजन्तात् कप्रत्ययः।

(क) विस्मयात् विस्मयमाश्रित्य ल्यब्लोपे पञ्चमी। एतत् वनं वनलक्ष्म्या गृहीतं कुसुमनेपथ्यं वा अवलोकयामि पश्यामि, विस्मयकारणन्तु परत एव व्यक्तीभविष्यति।

५। अथ वासन्तवनलक्ष्म्याः विस्मयहेतुत्वं निर्व्वक्ति—रक्तेत्यादिना। रक्ताशोकस्य रक्तवर्णपुष्पोद्गमेन रक्तवर्णस्य अशोकवृक्षस्य रुचा कान्त्या, तपनीयाशोकवृक्षात् अन्येषाम् अशोकवृक्षाणां पुष्पोद्गमस्य तदानीमविरुद्धत्वात् न दोषः। तपनीयाशोकमुद्दिश्य

---

বিদূ। মনোযোগপূর্ব্বক অবলোকন করুন। প্রমদবনশোভা আপনাকে যেন প্রলোভিত করিবার আশয়ে, যুবতীজনবেশের লজ্জা-সম্পাদক এই কুসুমবেশ পরিধান করিয়াছে। (ক)

রাজা। আমি বিস্ময়ে অবলোকন করিতেছি। (ক)

एतद्वाक्यप्रस्तावे रक्ताशोकपदं रक्तवर्णनवपल्लवोद्गमेन रक्तवर्णाशोकवृक्षपरं, विम्बमिव विम्बफलतुल्यः अधरः निम्नौष्ठः तस्य अलक्तकः तद्रञ्जनाय निहितो लाचारसः, विलासिनीनाम् अधररञ्जनाय अलक्तकव्यवहारस्य दृष्टचरत्वात्, विशेषितः कलङ्कितः तिरस्कृत इति यावत्, गुणः उत्कर्षः यस्य तथाभूतः, अथवा विशेषितः उपमितः गुणः रक्तिमा यस्य तथाभूतः, योषितामधरविम्बविन्यस्तलाचारसापेचया अधिकरक्तवर्णो रक्ताशोकः रमणीयश्च इति भावः। अपि च श्यामं श्यामवर्णं कृष्णिमयुक्तमिति यावत्, अवदातं श्वेतगुणयुक्तम्, अरुणं रक्तवर्णञ्च कुरुवकं झिण्टीपुष्पं, प्रत्याख्यातम् अधःकृतं विशेषकं पत्रावलीचिह्नं येन तथाभूतं, तथाहि कुरुवकेषु चित्रकापेचया अधिकतरः शोभासमुत्कर्षः प्रतिभातीति भावः। विशेषकाण्यपि योषितां नानावर्णैरङ्कितानि भवन्ति, केचित्तु विशेषकपदं तिलकवाचकमेव, यदि तथा कथं परतोऽपि तिलक-क्रियेत्यादि सङ्गच्छते, अनेनैव गतार्थत्वात् इति ललाटादिषु नानावर्णरचिताः पत्रभङ्गा बोध्यन्ते परतस्तिलकपदेन भ्रूयुगमध्यवर्त्तितिलकमेव, अतो न पौनरुक्त्यभयप्रसक्तिरपि। लग्नाः संसक्ताः द्विरेफाः भ्रमरा अञ्जनानि कज्जलानि इव यत्र तैः तिलकैः तिलपुष्पैः तिलकस्य भ्रूमध्यवर्त्तिनः तिलकविन्दोः क्रिया कर्म्म आक्रान्ता आश्रिता, तथाहि तिलकुसुमोद्गमेन तिलकशोभितेव इयं माधवी श्रीः प्रतिभातीति भावः। अतएव माधवी वसन्तकालसम्बन्धिनी श्रीः शोभा योषितां रमणीनां मुखम् अनाघ्रामं प्रीतिप्रदो वा यः प्रसाधनविधिः अलङ्करणक्रिया तस्मिन् सावज्ञा जुगुप्सावतीव राजत इति शेषः। तथाहि अनया पूर्व्वोक्तप्रकारेण ये ये अलङ्काराः लब्धाः तेषां तुलनया योषितामलङ्कारा अपकृष्टा एवेति तव नास्या आग्रहः परं घृणा एव युक्ता इति, यतः योषितां विम्बाधरे अलक्तकरसस्थानीया रक्ताशोकशोभा ललाट-कपोलादौ चित्रकस्थानीयानि नाना-वर्णानि कुरुवककुसुमानि, अञ्जनतिलकस्थानीयानि कृष्णवर्णभ्रमरयुक्ततिलकुसुमानि जातानि इति योषितामलङ्कारविधौ दुर्लभताज्ञानशून्यतया कथमिव तव गौरवज्ञानं जायताम् परन्तु आत्मशोभाया नवीनतया सरसतया प्राकृतिकतया च युवतिवेशेषु युज्यते घृणा। सर्व्वमिदं विस्मयकारणमिति भावः। अत्र योषितां वेशात् वनलक्ष्म्या वेशस्य आधिक्यविज्ञापनात् व्यतिरेकः, तदुत्थापितैव माधव्यां श्रियां सावज्ञभाव-सम्भावनया इवशब्देन बोधनात् उत्प्रेक्षा वाच्या। रक्ताशोकशोभापेचया विम्बाधर-

[ उभौ नाट्येनोद्यानशोभां निर्वर्णयतः। ] (ख)

[ ततः प्रविशति पर्य्युत्सुका मालविका। ] (ग)

माल। अविज्ञादहिअअं भट्टारअं अहिलसन्ती अत्तणो वि दाव लज्जेमि। कुदो विहवो सिणिद्धस्स सहीअणस्स वुत्तन्तं आचक्खिदुम्। ण आणे अप्पडिआरगुरुअं वेदणं केत्तिअं कालं मदणो मं णइस्सदित्ति! (कतिचित् पदानि गत्वा।) कहिं णु पत्थिदह्मि? (स्मृतिमभिनीय।) आदिट्ठह्मि देवीए— "मालविए! गोदमचावलादो दोलापरिब्भट्टाए सरुजो मह

---

गतालक्तकस्य अपकर्षप्रत्ययात् व्यतिरेकान्तरम्। द्वितीयपादेऽपि तथा। द्विरेफे अञ्जनत्वसादृश्यस्य समासगतत्वेन समासगता उपमा। चतुर्थपादार्थं प्रति पूर्व्वपादत्रयार्थस्य कारणत्वप्रत्ययात् काव्यलिङ्गमलङ्कारः। तृतीयपादेऽपि व्यतिरेकः। तेषाञ्च मध्ये केषाञ्चिदङ्गाङ्गिभावेन सङ्करः।

(ख) नाट्येन अभिनयेन उद्यानशोभां प्रमदवनसौन्दर्य्यं निर्व्वर्णयतः निरूपयतः।

(ग) ततः तस्मिन्नेव अवसरे यदा तौ समन्ततः उद्यानशोभां विलोकयतस्तदा इत्यर्थः। पर्य्युत्सुका विरहोत्कण्ठायुक्ता।

---

এই রক্তাশোকলতা রমণীজনের বিম্বাধরস্থ অলক্তকগুণকে যেন তিরস্কৃত করিয়াছে। এই কৃষ্ণ-শ্বেত-রক্তবর্ণ কুরুবকের নিকট ললনাগণের পত্রাবল্যাদিরচনা যেন নিন্দিতা হইয়াছে। এই ভ্রমররূপ অঞ্জনরঞ্জিত তিলকপুষ্প রমণীদের তিলকক্রিয়াকে যেন লজ্জিত করিয়াছে। দেখিলে বোধ হয়, বসন্তলক্ষ্মী প্রমদাগণের সুখময় সজ্জাবিধিতে যেন অবজ্ঞা প্রদর্শন করিতেছে ॥৫॥

( এই বলিয়া উভয়ের উদ্যানশোভা নিরূপণ )। (খ)

( অতঃপর অতীব উৎকণ্ঠিত ভাবে মালবিকার প্রবেশ )। (গ)

चलणा। ण सक्कणोमि। तुमं दाव गदुअ तवणीआसोअस्स दोहलं णिवट्टेहि त्ति। जइ सो पञ्चरत्तब्भन्तरे कुसुमं दंसेदि, तदो तुह—(इत्यन्तरा निश्वस्य।) अहिलासपूरइदिअं पसादं दाइस्सं त्ति।" ता जाव णिओअभूमिं पढमं गदा होमि, दाव अणुपदं मम चलणालंकारहत्थाए बउलावलिआए आअन्तव्वम्। ता दाव परिदेविस्सं वीसद्धं मुहुत्तअं। (इति परिक्रामति।) [अविज्ञातहृदयं भट्टारकमभिलषन्ती आत्मनोऽपि तावत् लज्जे। कुतो विभवः स्निग्धस्य सखीजनस्य वृत्तान्तमाख्यातुम्। न जाने अप्रतिकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति! कस्मिन् नु प्रस्थितास्मि? आदिष्टास्मि देव्या—"मालविके! गौतमचापलात् दोलापरिभ्रष्टाया: सरुजौ मम चरणौ। न शक्नोमि त्वं तावत् गत्वा तपनीयाशोकस्य दोहदं निर्वर्त्तय। यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततस्तुभ्यमभिलाषपूरयितृकं प्रसादं दास्यामि" इति। तत् यावत् नियोगभूमिं प्रथमं गता भवामि, तावदनुपदं मम चरणालङ्कारहस्तया वकुलावलिकया आगन्तव्यम्। तत् तावत् परिदेविष्यामि विस्रब्धं मुहूर्त्तकम्।] (घ)

---

(घ) न विज्ञातं विशेषेण निश्चितं हृदयं मानसं यस्य तथाभूतम् अनिश्चितानुरागं तस्य हृदयं मयि अनुरक्तं नवा इति विशेषेण निश्चयाभावेऽपि इति भावः। भट्टारकं राजानम् अभिलषन्ती कामयमाना, आत्मनोऽपि स्वसकाशादपि का कथा परस्मादित्यपि-शब्दार्थः। लज्जे लज्जिता भवामि, अननुरक्ते जने चित्तस्य नियोगः सुतरामात्मानम् कामपरवशतां हीनताञ्च प्रत्याययति अतएव लज्जा इति भावः। स्निग्धस्य मयि सुतरां प्रणयशालिनः सखीजनस्य वृत्तान्तं "अहं राजनि समनुरक्तास्मी"त्येतां वार्त्तामित्यर्थः। आख्यातुं कथयितुं कुतः कस्मात् मे मम विभवः सामर्थ्यम् अस्तु इति शेषः। यस्मिन् विषये आत्मसमीपतोऽपि लज्जा तस्मिन् विषये परसमीपतो लज्जेति न वहुवादः। न जाने निर्द्धारयितुमर्हामि, मदनः कामः, कियन्तं कालं कति समयान् व्याप्य अप्रतिकारेण प्रतीकारविरहेण गुरुकां गुर्व्वीं वेदनां यातनां

नेष्यति प्रापयिष्यति इति न जाने इति पूर्व्वेणान्वयः। कथं कदा वा एतस्या वेदनाया अवसानं भवेदिति नैव निश्चेतुं शक्नोमि अतएव वेदना द्विगुणतामिव गच्छतीति भावः। कुव कस्मिन् स्थाने, नुः प्रश्ने। प्रस्थिता गन्तुं प्रवृत्ता अस्मि, अनेन विस्मृतिः कामावस्था उक्ता भवति। स्मृतिं स्मरणम् अभिनीय विस्मृतेः परं स्मृतौ यादृशावस्था जायते तादृशावस्थां नाटयित्वा। गौतमस्य विदूषकस्य चापलात् चाञ्चल्यात् दोलापरिभ्रष्टायाः दोलायाः पतितायाः मम चरणौ सरुजौ रोगयुक्तौ व्यथितौ इत्यर्थः। न शक्नोमि अहम् अशोकस्य दोहदं निर्व्वर्त्तयितुमिति शेषः। गत्वा प्रमदवनमिति शेषः। तपनीयाशोकस्य. सुवर्णवर्णाशोकवृक्षस्य दोहदं पादाघातलक्षणं गर्भाभिलाषं प्रकृते पुष्पोद्गमसाधकं वस्तु निर्व्वर्त्त्य सम्पाद्य। इति आदिष्टास्मीति पूर्व्वेणान्वयः। आदिशेर्व्वचनार्थतया द्विकर्म्मकत्वात् कर्म्मद्वयी। सः तपनीयाशोकः पञ्चरात्राभ्यन्तरे पञ्चरात्रपर्य्यन्तदीर्घकालव्यटकीभूते यत्किञ्चित्काले कुसुमं पुष्पं दर्शयति उद्गतपुष्पः भवति तदा तव मालविकायाः। अन्तरा अभिप्रेतस्य वाक्यस्य अनवसाने एव निश्वस्य दीर्घनिश्वासं विमुच्य स च निश्वासः आत्माभिलाषफलस्य दुर्लभता-निश्चयेन इति मन्तव्यम्।

अभिलाषस्य मनोरथस्य पूरयितृकं पूरणकारिणं प्रसादम् अनुग्रहं दास्यामि, तव अभिलाषानुरूपं फलं निष्पादयिष्ये इत्यर्थः। तद्यावत यत्कालमध्ये प्रथमम् आदौ नियोगभूमिं कर्म्मस्थानं तपनीयाशोकवृक्षसमीपमित्यर्थः। तावत् तत्कालाभ्यन्तरे अनुपदं पृष्ठतः मम चरणालङ्कारहस्तया चरणभूषणनूपुरयुक्तकरया बकुलावलिकया देवीपरिचारिकया आगन्तव्यम उपस्थातव्यम्। विस्रब्धं विश्वस्तभावेन अन्यैरज्ञातरूपेण मुहूर्त्तं क्षणमात्रं परिदेविष्यामि क्रन्दिष्यामि क्रन्दनकारणस्य रहस्यत्वात् रहस्येव क्रन्दनेन क्लेशस्यापि तत्कारणज्ञानासम्भवात्। इति परिक्रामति तपनीयाशोकदिशमिति शेषः। प्रवेशकप्रकाशितात् वृत्तादनन्तरं मधुकरिका देव्यै अशोकस्य पुष्पशून्यतां दोहदयोग्यताञ्च विज्ञापयामास, सा च दोहदनिर्व्वर्त्तनाय मालविकां न्ययुङ्क्त इति ज्ञेयम्।

---

মাল। মহারাজের হৃদয় না জানিয়া তাঁহার প্রতি অভিলাষপরবশ হইয়া, আপনা আপনিও লজ্জিতা হইতেছি। স্নেহশীল সখীজনের সমীপেও

বিদূ। (দৃষ্ট্বা।) হী হী, এদং ক্খু সীহুপাণুব্বেজিদস্স মচ্ছণ্ডিআ উবণাদা। [হী হী, এতত্ খলু সীধুপানোদ্বেজিতস্য মৎস্যণ্ডিকা উপনতা। ] (ঙ)

---

(ঙ) দৃষ্ট্বা মালবিকামিতি শেষঃ। হী হী ইতি আনন্দপ্রকাশকমব্যয়ম্ একপদমিব হীশব্দস্য দ্বিরুক্তির্বা বীপ্সায়াম্। এতত্ দৃশ্যমানং মালবিকারূপং বস্তু সীধুপানেন মদ্যপানেন উদ্বেজিতস্য নীতবিকারস্য জনস্য মৎস্যণ্ডিকা গুড়বিকারঃ উপনতা উপস্থিতা। বিধেয়প্রাধান্যেন নির্দ্দেশাত্ উপনতেত্যত্র স্ত্রীত্বম্। "ইক্ষো রসো যঃ সম্পক্কো ঘনঃ কিঞ্চিদ্দ্রবান্বিতঃ। মন্দং যত্ স্যন্দতে তস্মান্মৎস্যণ্ডীতি নিগদ্যতে"। ইক্ষোঃ পক্করসৈঃ সিদ্ধঃ সীধুঃ পক্করসশ্চ স"ইতি। মদ্যপানেন মত্ততাং গতস্য জনস্য মৎস্যণ্ডিকাস্বাদনং যথা সুতরাং রম্যত্বে পরিকল্প্যতে তথৈব কামজ্বালাকুলস্য তব ইয়ং মালবিকাত্বময়ি পরিকল্পিষ্যতে ইতি ভাবঃ। অত্র অপ্রস্তুতাত্ সমাত্ মদ্যপানমত্তস্য মৎস্যণ্ডিকোপস্থানরূপাত্ প্রস্তুতস্য সমস্য মালবিকোপস্থানরূপস্য প্রত্যয়াত্ অপ্রস্তুত-

---

এই বৃত্তান্ত বলিবার ক্ষমতা নাই। জানি না, মদন আর কতকাল আমাকে এই অপ্রতিবিধেয় অসহ্য বেদনা প্রদান করিবে! (কতিপয় পদ গমন করিয়া) কোথায় যাইতেছি? (বিশেষরূপ চিন্তা করিয়া) ও, দেবী ধারিণী আমাকে আদেশ করিয়াছেন,—"মালবিকে! গৌতমের চপলতা-বশতঃ দোলা হইতে পড়িয়া যাওয়ায়, আমার পদদ্বয়ে দারুণ বেদনা জন্মিয়াছে। তজ্জন্য আমার ক্ষমতা নাই। তুমিই তপনীয় অশোকের দোহদ নির্ব্বাহিত কর। যদি উহা পাঁচ রাত্রির মধ্যে পুষ্প প্রদর্শন করে, তাহা হইলে, [ দীর্ঘনিশ্বাস পরিত্যাগ করিয়া ] তোমার অভিলাষপূরণ-রূপ অনুগ্রহ করিব।" এখন আমি প্রথমে সেই অশোক বৃক্ষের নিকট যাই। পরে আমার চরণালঙ্কার হস্তে করিয়া, পশ্চাৎ বকুলা-বলিকা আগমন করিবে। অতএব মুহূর্ত্তমাত্র বিশ্বস্তচিত্তে বিলাপ করিয়া লই। (এই বলিয়া পরিক্রমণ)। (ঘ)



राजा। अये ! किमेतत् ? (च)

विदू। एसा णादिपरिक्खिदवेसा उस्सुअवअणा एआइणी मालविआ अदूरे वट्टदि। [ एषा नातिपरिष्कृतवेशा उत्सुकवदना एकाकिनी मालविका अदूरे वर्त्तते। ] (छ)

---

प्रशंसालङ्कारः। एतत्पदेन मालविकायाः प्रस्तुतायाः शंसनेन न अप्रस्तुतप्रशंसा, परं मद्यपानमत्तजनसम्बन्धिमत्स्यण्डिकाया अभेदस्य एतत्पदप्रतिपाद्ये मालविकारूपे वस्तुनि अध्यवसायात् अतिशयोक्तिरिति केचित् वदन्ति।

(च) एतत् दृश्यमानं वस्तु किं किंस्वरूपम् ? अथवा एतदित्यनेन किं भवता निर्द्दिश्यते, यत्र एवं शान्तिकरत्वमनुसन्दधासि इति मालविकामदृष्ट्वैव राज्ञः उक्तिरियम्।

(छ) नातिपरिष्कृतः नातिशुद्धः मलिनभावापन्नः वेशः परिच्छदादिः यस्याः तथा-भूता, एतद्धि मालविकायाः विरहजनितं मालिन्यं दासीभावं वा सूचयति। उत्सुकम् उत्कण्ठाज्ञापकं वदनं मुखं यस्याः तथाभूता मुखभावेनैव अनुमेयमानसोत्कण्ठा इत्यर्थः। एकाकिनी सहायान्तररहिता, मालविका अदूरे नातिविप्रकर्षे वर्त्तते, प्रथमविशेषणं राज्ञि अनुरागसूचनार्थं तद्विरहेणैव तादृशावस्थाशंसनात्, द्वितीयविशेषण-मपि तादृशावस्थायाः कारणान्तरप्रयोज्यत्वशङ्कानिराकरणाय, तृतीयविशेषणञ्च विस्रब्धमेव राज्ञः तन्निकटोपसर्पणयोग्यताप्रदर्शनाय। तथाहि ईदृशं सुयोगं परिहाय नूनं दैवमेव विफलं कृतं स्यात् अत ईदृशे काले उपसर्पतु भवान् मालविकामिति भावः।

---

বিদূ। (দর্শন করিয়া)। আশ্চর্য্য! মদ্যপানে উন্মত্ত ব্যক্তির পক্ষে এই শর্করা খণ্ড (মিছরি) উপস্থিত হইয়াছে! (ঙ)

রাজা। অয়ে! ইহা কি? (চ)

বিদূ। এই যে নাতিপরিষ্কৃতবেশা মালবিকা একাকিনী অদূরে অবস্থিতি করিতেছেন; ইহার বদনমণ্ডল উৎকণ্ঠার সূচনা করিতেছে। (ছ)

राजा। ( सहर्षम् । ) कथं मालविका ! (ज)

विदू। अहइं । [ अथकिम् । ] (झ)

राजा। शक्यमिदानीं जीवितमवलम्बयितुम् । (ञ)

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम् ।
तरुवृतां पथिकस्य जलार्थिनः
सरितमारसितादिव सारसात् ॥ ६ ॥

[ अन्वयः । आरसितात सारसात् तरुवृतां सरितं ( उपलभ्य ) जलार्थिनः पथिकस्य ( हृदयम् ) इव त्वत्समीपगतां प्रियाम् उपलभ्य मम विक्लवं हृदयम् उच्छ्वसितम् ( अभूत ) । ६ । ]

---

(ज) सहर्षं, नित्यमाकाङ्क्षितायाः सहसा असम्भावितसमागमलाभात् आनन्दातिशयसहकारेण इत्यर्थः । कथं किं मालविका मम काम्यभूता सा एव इयम् इति भावः ।

(झ) अथ किम्, सा मालविका एव इयम् इत्यर्थः ।

(ञ) इदानीं चिराकाङ्क्षितायाः प्रियतमायाः मालविकाया दर्शनलाभे जाते सतीत्यर्थः । जीवितं जीवनम् अवलम्बयितुं धारयितुं शक्यं क्षमम् । तथाहि इतः पूर्वं मालविकाया विरहेण प्रस्थितप्रायं मे जीवितमिदानीं तद्दर्शनात् सोच्छ्वासमिव सम्पन्नमिति भावः ।

६ । अथात्मनः मालविकासन्दर्शनलाभेन कथञ्चित् स्वास्थ्यं निर्वक्ति—त्वदित्यादिना । आरसितात् सुतरां शब्दयुक्तात् उच्चैः शब्दायमानादित्यर्थः । सारसात् तदाख्यात्

---

রাজা। ( সহর্ষে ) কি মালবিকা ! (জ)

বিদূ। হ্যাঁ। (ঝ)

রাজা। এক্ষণে জীবণধারণে সমর্থ হইব। (ঞ)

क्व तत्रभवती ? (ट)

विदू। एसा तरुराइमज्झादो णिक्कन्ता इदो ज्जेव अहिवट्टन्ती दीसदि। [एषा तरुराजिमध्यान्निष्क्रान्ता इत एवाभिवर्त्तमाना दृश्यते।](ठ)

---

पचिण: तरुवृतां वृक्षराजिप्रच्छन्नस्वरूपां सरितं नदीम् उपलभ्य जलार्थिन: जलप्रणयिन: पिपासोरित्यर्थ:। पथिकस्य पान्थस्य इव त्वत्त तव सकाशात् "श्रुत्यर्थानां श्रावयिता" इति पञ्चमी। समीपगताम् अदूरस्थितां प्रियां दयितां मालविकाम् उपलभ्य श्रुत्वा, सा अदूरे एव वर्त्तते इति त्वत्त: विज्ञाय इत्यर्थ:। मम विक्लवं विरहतापक्लिष्टं हृदयं मन: उच्छ्वसितं प्राप्तसमुच्छ्वासं जातं, गतमिव मे जीवनं पुन: प्रत्यागतमिव त्वद्वाक्यश्रवणेन इति भाव:। उपलभ्येत्यत्र स्थितस्येत्यध्याहारेण क्त्वाप्रत्ययोपपादकमेककर्त्तृकत्वं रक्षणीयम्। तथात्वेऽपि न न्यूनपदता, नियमतस्तस्य प्रत्ययात्। यत्र नियमेन अनुपात्तपदार्थस्य प्रतीति: तत्र तद्दोषाभावात्। शाब्दबोधविलम्बनस्यैव तद्दोषहेतुतया नियमत: तादृशार्थस्य प्रतीतौ शाब्दबोधविलम्बनस्य असत्त्वात्। आरभितादित्यत्र शब्दकर्म्मकतया कर्त्तरि क्तप्रत्यय:। पूर्व्वार्द्धोत्तरार्द्धयोरुपमा स्पष्टा। उपमेयदिशि तरुवृतामिति विशेषणस्य अनुपयोगितया अधिकपदत्वमलङ्कारदोष:। अत्र चिन्त्यमानस्य पदार्थस्य लाभात् क्रमो नाम सन्ध्यङ्गमुक्तम्। द्रुतविलम्बितं वृत्तम्।

(ट) तत्रभवती आदरणीया मालविका क्व कुत्र स्थाने वर्त्तते इति शेष:।

(ठ) तरुराजिमध्यात वृक्षश्रेण्यभ्यन्तरात् निष्क्रान्ता वहिर्गता, इत एव अस्यामेव दिशि अभिवर्त्तमाना आगच्छन्ती दृश्यते।

---

সারসের শব্দে মুখরিত তরুসমাচ্ছন্ন নদী নিকটস্থ জানিতে পারিয়া, জলার্থী পথিকের অভিভূত হৃদয় যেমন উচ্ছ্বসিত হইয়া উঠে, তোমার মুখে প্রিয়াকে সমীপগতা অবগত হইয়া, আমার অবসন্ন হৃদয়েও সেইরূপ উচ্ছ্বাস সংঘটিত হইয়াছে ॥৬॥

আদরণীয়া মালবিকা কোথায় ? (ট)

राजा। ( विलोक्य सहर्षम्। ) वयस्य ! पश्यामि। (ड)

**विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नतं कुचयोः।**
**अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥**

[ अन्वयः। नितम्बबिम्बे विपुलं, मध्ये क्षामं, कुचयोः समुन्नतं, नयनयोः अत्यायतम्, एतत् मम जीवितम् आयाति। ७। ]

---

(ड) विलोक्य मालविकामिति शेषः। सहर्षं सानन्दं पश्यामि अनुमिनोमि वस्तुमायमिति शेषः।

७। तमेवानुमेयं पदार्थमाह—विपुलमित्यादिना। नितम्बबिम्बे श्रोणिमण्डले विपुलं मांसलं, मध्ये कटिभागे क्षामं सुतरां क्षीणं, कुचयोः पयोधरयोः समुन्नतम् उन्नतिमत्, नयनयोः नेत्रयोः अत्यायतम् अतिविस्तृतम् एतत् दृश्यमानं वस्तु मम जीवितं जीवनम् आयाति आगच्छति, सर्वत्र अवच्छेदे सप्तमी। एतेन मालविकायाः नितम्बः स्थूलः, कटिदेशः क्षीणः, कुचौ उन्नतौ, नेत्रे विशाले इति प्रतीयते, जीवनेनाभेद-प्रत्यायनाच्च मालविकायां राज्ञः सुतरामनुरागो व्यक्तः। अत्र नितम्बबिम्बाद्यवच्छेदेन विपुलत्वादियुक्ते एतत्पदप्रतिपाद्ये मालविकारूपे वस्तुनि राज्ञो जीवितत्वारोपात् रूपकमलङ्कारः। परे तु जीवितांशे उक्तविपुलत्वादिविशेषणं स्वीकृत्य आरोप्यमाण-पदार्थस्य अधिकारूढवैशिष्ट्यतया अधिकारूढवैशिष्ट्यरूपकं स्वीकुर्व्वते, आरोप्य-विशेषणानाम् अयथार्थत्वे तदलङ्कारविषयत्वात्। एतत्पदस्य दृश्यमानमालविकारूप-वस्तुपरत्वाभावे जीवितांशे तदन्वयोपगमे च जीवितेन मालविकाया भेदेऽपि अभेदाध्य-वसायमूला अतिशयोक्तिरिति निपुणाः। नितम्बबिम्ब इत्यत्र छेकानुप्रास इत्यनयोः संसृष्टिः। आर्य्या जातिः।

---

বিদূ। এই তিনি তরুরাজির মধ্য হইতে বিনির্গত হইয়া, এইখানেই আসিতেছেন,—দেখিতে পাওয়া যাইতেছে। (ঠ)

রাজা। ( দেখিয়া সহর্ষে ) বয়স্য ! দেখিয়াছি। (ড)

सखे! पूर्वस्मादतिमनोहरमवस्थान्तरमुपारूढ़ा तत्रभवती। तथाहि। (ढ)

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमितभरणा।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता॥ ८॥

[ अन्वयः। शरकाण्डपाण्डुगण्डस्थला परिमिताभरणा इयम् माधवपरिणतपत्रा कतिपयकुसुमा कुन्दलता इव आभाति। ८। ]

---

(ढ) तत्रभवती आदरभाजनं मालविका। पूर्व्वस्मात् इतः पूर्वम् अवस्थितात् अवस्थान्तरात्, पूर्वस्मात् पूर्वकालमपेक्ष्य इति वा अतिमनोहरम् अतिमात्ररम्यम् अवस्थान्तरम् अपरविधाम् अवस्थाम् उपारूढ़ा समाश्रिता। इदानीमियं पूर्वतः अधिकमनोज्ञा दृश्यते इति भावः।

८। अथ अधिकमनोज्ञतां प्रतिपादयति—शरेत्यादिना। शरकाण्डवत् शराख्यतृणदण्डवत् पाण्डु पाण्डुरतायुक्तं गण्डस्थलं कपोलभागः यस्याः तथाभूता, विरहकालीनचिन्ताविषयापरागादिभिः कारणैः शारीररक्तशोषणात् पाण्डुता शरीरे व्यवतिष्ठते, मालविकाया अपि तेनैव तथात्वम्। परिमितानि अनधिकानि अल्पमात्राणि इत्यर्थः आभरणानि अलङ्काराः यस्याः तथाभूता, दासीवृत्तौ वर्त्तमानत्वात् विरहे निःस्पृहत्वाच्च अधिकभूषणवर्ज्जनम्। इयं दृश्यमाना मालविका माधवे वसन्तकाले परिणतानि पक्कतां गतानि पत्राणि पर्णसमूहाः यस्याः तथाभूता, पत्राणां परिणामे जाते

---

ইহাঁর নিতম্ব নিতান্ত বিপুল, মধ্যদেশ একান্ত কৃশ, কুচযুগল নিরতিশয় উন্নত এবং নয়নদ্বয় অতিমাত্র দীর্ঘ। আমার সাক্ষাৎ জীবিতস্বরূপ ইনি আগমন করিতেছেন॥৭॥

সখে! পূর্ব্বে ইহাঁকে যেরূপ দেখিয়াছিলাম, তাহা অপেক্ষা ইহাঁর আকৃতি অধিকতর মনোরম হইয়াছে। (ঢ)

ইহাঁর গণ্ডস্থল শরকাণ্ডের ন্যায় পাণ্ডুবর্ণ। তাহার উপর ইনি পরিমিত

বিদূ। एसा वि भवं विअ मम्रणव्वाहिणा परिमिट्टा भविस्सदि। [ एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति। ] (ণ)

রাজা। सौहार्दमेवं पश्यति। (त)

---

पाण्डुतोदयेन पाण्डुकपोलाया मालविकाया: साद्दश्यरचणाय विशेषणमिदम्। कतिपयानि कियन्मात्राणि नातिप्रचुराणि इत्यर्थ:। कुसुमानि पुष्पाणि यस्या: तथाभूता, छिन्नै: पत्रपर्वा कुसुमै: शोभिता कुन्दलता कुन्दकुसुमवल्लीव आभाति शोभते। अत्र शरकाण्ड पाण्डु इत्यत्र समासगता उपमा उक्तविशेषणविशिष्टकुन्दलतया सह विशेषणविशिष्टमालविकाया: साद्दश्यस्य इवशब्देन प्रत्यायनात् वाच्योपमा। प्रथमपादे 'ण्ड'कारस्य अनेकधापि असकृत्साम्यात् वृत्त्यनुप्रास इति प्रथमाक्ताया उपमाया वृत्त्यनुप्रासस्य च सङ्कर: एकाश्रयानुप्रवेशरूप:। इयमार्य्या जाति:।

(ण) एषा मालविकापि भवानिव यथा भवान् तथा मदनव्याधिना कामजन्यरोगेण परिमृष्टा संस्पृष्टा भविष्यति, भवतो यथा अस्या उपरि महाननुराग: विरहेण च दुरवस्था तथा अस्या अपि भवत उपरि अनुराग: विरहेण च दुरवस्था जातेति सम्भावयामि कामार्त्तजनस्येव पाण्डुताप्रभृतीनां दर्शनादिति भाव:। उपमा स्पष्टा, उपमानोपमेययोर्लिङ्गवैषम्यात् साधारणधर्म्मवाचकस्य परिमृष्टेतिपदस्य लिङ्गव्यत्ययेन उपमानान्वयस्यात्र कर्त्तव्यतया उपमागतप्रक्रमभङ्गदोष:। परिमृष्टा भविष्यतीत्यत्र परिमृश्यत इति पाठो निर्द्दोष:।

(त) सौहार्द्दं स्नेह: एवम् ईदृशं प्रियस्य जनस्य अनुकूलमेव वस्तु पश्यति निर्द्धारयति। अकृत्रिमो बन्धु: प्रियस्य यथा यथा अनुकूलं भवति तथा तथा एव सम्भावयति अतएव

---

আভরণ পরিধান করিয়া আছেন। বোধ হইতেছে, বসন্তের আবির্ভাববশে পরিপক্বপত্রশালিনী কতিপয়কুসুমধারিণী কুন্দলতা যেন শোভা পাইতেছে ॥৮॥

বিদূ। ইনিও আপনার ন্যায় মদনব্যাধিতে অভিভূতা হইয়াছেন। (ণ)

मालं। अअं सो ललिदसुउमारदोहलापेक्खी अगिहीद कुसुमणेवत्थो उक्कण्ठिदाए मह असोओ अनुकरेदि। जाव से पच्छाअसोअले सिलापट्टए निसण्णा अत्ताणं विणोदेमि।

[ अयं स ललितसुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठिताया मम अशोकः अनुकरोति। यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णा आत्मानं विनोदयामि। ] (थ)

---

मयि स्नेहातिशयवान भवान् मयि मालविकाया अनुरागत एवमस्या अवस्थां कल्पयसि, वस्तुतस्तु न तथा पाण्डुतायाः कामार्त्ततायां बहुस्थलेषु व्यभिचारदर्शनादवापि कारणजन्यायाः पाण्डुतायाः सम्भवेन व्यभिचारशङ्कोदयादिति भावः। वचनमिदम् अस्यैव कवेः "स्नेहः पापमाशङ्कते" इति वचनविरोधं पुष्णातीति चिन्तनीयम्। अत्र सामान्यादप्रस्तुतात् विशेषस्य प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। सौहार्द्दमित्यस्य विदूषकस्य राज्ञि स्नेहरूपविशेषपरत्वे तु नायमलङ्कारः।

(थ) सः पूर्वप्रस्तुतः, ललितसुकुमारदोहदम् अतिरमणीयम् अभिलाषपूरकं पादाघात-रूपं वस्तु अपेक्षते यः सः, कुसुमोद्गमे वराङ्गनापादाघातमपेक्षमाण इत्यर्थः। अगृहीतकुसुमनेपथ्यः पुष्पसज्जावर्ज्जितः अशोकः उत्कण्ठितायाः कामकृतौत्सुक्य-शालिन्या मम अनुकरोति, तथाहि अहं यथा ललितसुकुमारं राज्ञः समङ्गतमपेक्ष-माणा कुसुममयानलङ्कारान् न धारयामि तथैव एषः अशोकः युवतिचरणाघातरूपं दोहदमपेक्षमाणा कुसुमसज्जां न धारयति इति भावः। एतेन यथा मालविकायाः पादाघातानन्तरमेव अशोकस्य अचिरेण पुष्पोद्गमः तथैव अचिरेण अस्या अपि राजसमागमो व्यज्यते। अनुकृञ उपमार्थवाचकतया मालविकया सह अशोकस्य साहृश्यप्रत्ययात् उपमा, कुसुमेषु नेपथ्यत्वारोपात् रूपकं तदङ्गम् इति सङ्करः।

---

রাজা। সৌহার্দ্দবলেই এইরূপ দর্শন হইয়া থাকে। (ত)

মাল। এই সেই ললিত-সুকুমার-দোহদাপেক্ষী, কুসুমরূপবেশবিন্যাসে পরাঙ্মুখ তপনীয় অশোক উৎকণ্ঠিতা আমার শোক অনুকরণ করিতেছে।

विदू। सुदं भवदा,—उक्कण्ठिदह्मित्ति अत्तभोदी मन्तेदि ?
[ श्रुतं भवता,—उत्कण्ठिताऽस्मीति अत्रभवती मन्त्रयते ? ] (द)

राजा। नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः ? (ध)

---

अनुकरोति इत्यत्र कर्म्मविषयाशोकमिति केचित् पठन्ति। पक्षान्तरे तु मम इत्येव अनुकरणः कर्म्म, अनुकरणादीनां कर्म्मणि षष्ठ्याः श्रुतत्वात्। अस्य अशोकवृक्षस्य प्रच्छाय-शीतले छायाबहुलतया शीतलतायुक्ते शिलापट्टके प्रस्तरपट्टे, निषण्णा उपविष्टा सती आत्मानं देहम् अन्तःकरणं वा विनोदयामि सान्त्वयामि।

(द) भवता श्रुतम् आकर्णितम् अनया उक्तम् वचनम् इति शेषः। उत्कण्ठिता उत्कण्ठायुक्ता अस्मि अहमिति शेषः। इति उक्तरूपं वचनम्। अत्रभवती माननीया मालविका मन्त्रयते कथयति, तदाश्वास इदानीं आश्रीयतामिति भावः।

(ध) एतावता "उत्कण्ठितास्मी"ति मालविकाया एतन्मात्रेण वचनेन इत्यर्थः। भवन्तं मालविकायाः मयि अनुरागानुमातारं त्वां प्रसन्नः सुविशुद्धः यथार्थ इत्यर्थः। तर्कः विवेचना यस्य तथाभूतं न मन्ये निरूपयामि, नहि एतावता एव मयि अस्या अव्यभिचारेण अनुरागः अनुमातुं शक्यते इति भावः। कुतः कस्मात् हेतोः, तथा इति प्रश्ने, अस्य प्रश्नस्य उत्तरमुत्तरश्लोकेनाधिगन्तव्यम्।

---

এখন ইহার প্রকৃষ্টরূপ ছায়াবিশিষ্ট সুশীতল শিলাপট্টে নিষণ্ণা হইয়া আত্মাকে বিনোদিত করি। (থ)

বিদূ। আপনি শুনিলেন কি—পূজনীয়া এই মালবিকা 'উৎকণ্ঠিতা হইয়াছি' বলিয়া প্রকাশ করিতেছেন ? (দ)

রাজা। মালবিকার এই কয়টী মাত্র কথা শুনিয়াই—তিনি আমার উপর অনুরক্ত—তোমার এই অনুমান যথার্থ নহে বলিয়া আমার মনে হইতেছে। কেননা—(ধ)

वोढ़ा कुरुवकरजसां किसलयपुटभेदशीकरानुगतः।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः॥ ९॥

[ अन्वयः। कुरुवकरजसां वोढ़ा किसलयपुटभेदशीकरानुगतः मलयवातः मनसः अनिमित्तोत्कण्ठामपि जनयति। ९। ]

---

९। कुत इति प्रश्नस्य गद्यसूचितस्य उत्तरमाह—वोढा इत्यादिना। कुरुवकरजसां कुरुवककुसुमपरागाणां वोढ़ा वाहकः कुरुवकपुष्पाणां रजांसि आदाय प्रवहणशीलः, किसलयपुटानां पल्लवपुटानां पल्लवाग्रवर्त्तिपरस्परबद्धपवकाण्डानां भेदेन भङ्गेन यः शीकरः रसविन्दुः, तेन अनुगतः सम्पृक्तः, उभयमप्येतत् मानसोत्कण्ठाजनकमिति प्रकृते उपयुज्यते, मलयवातः दक्षिणानिलः मनसः चित्तस्य स्वस्थस्यापीति शेषः। अनिमित्तोत्कण्ठां विरहादिरूपोत्कण्ठाप्रसिद्धकारणाजन्यामपि उत्कण्ठां जनयति सम्पादयति, तथाहि दक्षिणानिलः पुष्परजांसि इतस्ततो विक्षिपति, पल्लवरसविन्दुनिवहांश्च आहृत्य उपहरति तदीदृश्यदशायां स्वस्थापि मालविका विकारं गन्तुमर्हति, नैतावता मामधिकृत्य अस्या उत्कण्ठा निश्चेतुं शक्यते, अतएव तव तर्को न यथार्थविषयनिर्द्धारको जात इति मे प्रतीतिरिति भावः। पूर्वार्द्धगतविशेषणद्वयार्थस्य उत्कण्ठाजनने हेतुत्वप्रत्ययात् काव्यलिङ्गम्। अत्र ईदृशमलयवायुसंस्पर्शेन साधारणमानसोत्कण्ठारूपात् सामान्यात् अप्रस्तुतात् प्रस्तुतस्य प्रवहन्मलयसंस्पर्शतो जातस्य विशेषस्य मालविकामानसोत्कण्ठारूपस्य वस्तुनः प्रत्ययात् अप्रस्तुतप्रशंसालङ्कारः। वातस्य प्रथमविशेषणात् सौरभ्यम् द्वितीयविशेषणाच्च शैत्यं मान्द्यञ्चेति गुणत्रयोक्तिः। अनिमित्तोत्कण्ठामपीत्यत्र अपिशब्दार्थस्य समासे गुणीभूतेन अनिमित्तपदार्थेन सह सम्बन्धः कवेरभिमतो नोपपद्यत इति अभवन्मतसम्बन्धदोषमाहुः। "उत्कण्ठामनिमित्तामपि हृदि तनुते मलयवात" इति दिक् समाधानस्य। आर्य्या जातिः।

---

কুরুবকপুষ্পের পরাগবাহী মলয়ানিল কিসলয়পুটভঙ্গে শীকরসংপৃক্ত হইয়া হৃদয়ে অকারণেও উৎকণ্ঠা জন্মাইয়া থাকে॥৯॥

[ মালবিকোপবিষ্টা । ]

রাজা। সখে! ইতস্তাবদাবাং লতান্তরিতৌ ভবাবঃ। (ন)

বিদূ। ইরাবদিং বিঅ অদূরে পেক্খামি। [ইরাবতীমিবাদূরে প্রেক্ষে। (প)

রাজা। নহি কমলিনীং দৃষ্ট্বা গ্রাহমপেক্ষতে মতঙ্গজঃ।
( ইতি বিলোকয়ন্‌ স্থিতঃ। ) (ফ)

---

(ন) ইতঃ অস্মিন্‌ স্থানে, লতাভিঃ অন্তরিতৌ প্রচ্ছাদিতশরীরৌ ভবাবঃ, অন্যথা অস্যা বিস্রব্ধবচনৈর্বিস্রব্ধব্যবহারৈশ্চ অনুমেয়ং হৃদয়ভাবং ন উন্নেতুং শক্ষ্যাম ইতি ভাবঃ।

(প) অদূরে নাতিব্যবধানে ইরাবতীমিব প্রেক্ষে সম্যগনিশ্চয়েন ইবশব্দব্যবহারঃ। তদ্‌যথা—তস্যাঃ সমীপে তব মালবিকায়াং বদ্ধভাবতা ন প্রকাশিত তথা কর্ত্তব্যমিতি বিদূষকাভিপ্রায়ঃ।

(ফ) বিদূষকস্য অভিপ্রায়ং প্রতিষেধতি—নহীত্যাদিনা। মতঙ্গজঃ হস্তী কমলিনীং স্বেন অধিগম্যাং পদ্মিনীং দৃষ্ট্বা অবলোক্য গ্রাহং মকরকুম্ভীরাদিকং জলজন্তুং ন অপেক্ষতে উপরুণদ্ধি, জলজন্তুনিবহানামাক্রমণাদ্ভীতঃ সন্‌ ন কমলিনীগ্রহণাত্‌ বিরমতীতি। অথ তথাহি যথা জলজন্তুভয়েন করীন্দ্রঃ কমলিনীগ্রহণাত্‌ ন পরাঙ্‌মুখীভবতি তথৈব অহমপি ইরাবতীভয়েন মালবিকায়া রূপদর্শনাদিতো ন বিরন্তুমর্হামি, অতএব তব অভিপ্রায়ং নাহং রক্ষিতুমর্হামীতি ভাবঃ। অত্র অপ্রস্তুতেন মতঙ্গজস্য কমলিনীদর্শনানন্তরং গ্রাহাপেক্ষাভাবরূপেণ সমেন মালবিকাদর্শনানন্তরম্‌ ইরাবতীভয়াত্‌ রাজ্ঞঃ সংযতভাবাপেক্ষাভাবরূপস্য সমস্য প্রস্তুতস্য প্রতীতেরপ্রস্তুতপ্রশংসালঙ্কারঃ। ইতি উক্তবাক্যম্‌ উক্ত্বা ইতি শেষঃ। বিলোকয়ন্‌ মালবিকামিতি শেষঃ। উক্তেনালঙ্কারেণ রাজ্ঞা মালবিকয়া সহ নির্বিঘ্নসঙ্গতৌ প্রতিবন্ধকত্বং ব্যজ্যতে ইত্যালঙ্কারেণ বস্তুধ্বনিঃ।

---

[মালবিকার উপবেশন। ]

রাজা। সখে! আমরা এইখানে উভয়ে লতার অন্তরালে অবস্থিতি করিব। (ন)

বিদূ। ইরাবতীকে যেন অদূরে দেখিতেছি। (প)

माल। हिअअ! णिरवलम्बणादो अदिभूमिलङ्घिणो दे मणोरहादो विरम, किं मं आआसेसि? [ हृदय! निरवलम्बनात् अतिभूमिलङ्घिनस्ते मनोरथाद्विरम, किं मामायासय? ] (ब)

[ विदूषको राजानं वीक्षते। (भ) ]

राजा। प्रिये! पश्य महत्त्वं स्नेहस्य। (म)

---

(ब) निः न विद्यते अवलम्बनं यथार्थः विषयः यस्य तथाभूतात्, वास्तवविषय-वर्ज्जितात्, तथाहि मम मनोरथः मया सह राज्ञः समागमविषयकः स सुतरामसम्भव इति विषयस्य अयथार्थत्वम्। अतिभूमिलङ्घिनः अत्यारूढ़स्य, दासीवृत्तिमधिष्ठितायाः राजलाभस्य एकान्ततोऽयोग्यत्वात्। मनोरथात् आशायाः विरम निवर्त्तस्व, माम् आयास आयासितां कृत्वा सर्व्वदा तच्चिन्तया मां क्लेशयित्वा इत्यर्थः, किं फलं, नास्ति किमपि फलमिति, तथाहि अस्य ते मनोरथस्य अयोग्यतया न कथमपि फललाभः सम्भवी अतः इतः परं न युज्यते वृथा तन्मनोरथाश्रयणमिति भावः।

(भ) राजानं वीक्षते अवलोकयति, वीक्षणस्य अभिप्रायस्तु "वयस्य! नूनं मया कल्पित एव त्वयि मालविकाया अनुरागो यथार्थः, यतः मनोरथस्य अतिभूमिलङ्घित्व-माह" इति। स्वेन निरूपितस्य विषयस्य सत्यताभिमानेन गर्व्वश्च विदूषकस्य व्यज्यते।

(म) प्रिये! दयिते मालविके! इति मालविकामुपलक्ष्य सम्बोधनम्। स्नेहस्य

---

রাজা। কমলিনীকে অবলোকন করিলে, কুম্ভীরাদির প্রতি হস্তীর ভ্রূক্ষেপ থাকে না। ( এই বলিয়া দর্শন করত অবস্থান। ) (ফ)

মাল। হৃদয়! যাহার কোনরূপ অবলম্বন নাই এবং যাহা সীমা লঙ্ঘন করিয়াছে, তাদৃশ মনোরথ হইতে নিবৃত্ত হও। কিজন্য আমাকে বৃথা ক্লেশ দিতেছ। (ব)

[ রাজার প্রতি বিদূষকের দৃষ্টিপাত। ] (ভ)

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वावबोधैकफलो न तर्कः ।
तथापि रम्भोरु करोमि लक्ष्य
मात्मानमेषां परिदेवितानाम् ॥ १० ॥

[ अन्वयः । अयि रम्भोरु ! त्वम् औत्सुक्यहेतुं न विवृणोषि,तर्कः तत्त्वावबोधैकफलः न (भवति), तथापि एषां परिदेवितानाम् आत्मानं लक्ष्यं करोमि ।१०। ]

---

प्रणयस्य महत्त्वम् असाधारणप्रभावं पश्य अवधारय, तन्महत्त्वप्रत्यायकपदार्थश्च श्लोकेन व्यक्तीभविष्यति । महत्त्वमित्यत्र वामत्वमिति केचित्, तत्र वामत्वं प्रतिकूलत्वमित्यर्थः ।

१० । अथ स्नेहस्य महत्त्वं विशिनष्टि—औत्सुक्येत्यादिना । रम्भे कदलीस्तम्भौ तद्वत् ऊरू यस्याः तस्याः सम्बोधनम् । सम्बोधनदशायामूरुसौन्दर्यवर्णनं स्वस्य कामदशाग्रस्ततामूलकम् । त्वम् औत्सुक्यस्य उत्कण्ठायाः हेतुं कारणं न विवृणोषि न प्रकाशयसि कस्माद् भवत्या इयं गाढतमा उत्कण्ठा जाता इति तत्र कुतोऽपि लक्षणाद्वाक्यादितः नोपलब्धुं क्षमे इति भावः । तर्कः अनुमानम् अपि न तत्त्वस्य यथार्थविषयस्य, "तत्त्वं ब्रह्मणि याथार्थ्ये" इति कोषात् । अवबोधः निर्द्धारणं स एव फलं यस्य तथाभूतः न भवति इति शेषः । तथाहि मयि अन्यस्मिन् वा त्वमनुरक्ता सती एवमवस्थां गतासीति अनुमानादिनापि नाधिगन्तुं पार्य्यते दृष्टस्य हेतोरुत्कण्ठारूपस्य व्यभिचारित्वात् । एतच्च वक्ष्यमाणकार्य्यस्य कारणाभावदर्शनार्थमुपन्यस्तं भवति । तथापि त्वया औत्सुक्यहेतुनिर्द्देशस्य अकरणे तर्कस्य तत्त्वनिर्णायकत्वाभावेऽपि च इत्यर्थः । आत्मानं स्वमेव एषां त्वया प्रवर्त्तितानां परिदेवितानां रुदितानां विरहजनितकरुणोक्तीनामित्यर्थः । लक्ष्यं विषयं करोमि सम्भावयामि, तथाहि एषा यत् "हृदय ! निरवलम्बनात्" इत्यादि

---

রাজা। প্রিয়ে! স্নেহের মহত্ত্ব অবলোকন কর। (ম)

অয়ি রম্ভোরু! তুমি উৎকণ্ঠার কোনরূপ কারণ ব্যক্ত করিতেছ না। আবার তর্ক করিয়াও কোন বিষয়ের যাথার্থ্য নির্দ্ধারণরূপ ফল

विदू। सम्पदं भवदो णिस्संसअं भविस्सदि। एसा अप्पिद-मअणसंदेसा विविक्ते बउलावलिआ उवट्ठिदा। [साम्प्रतं भवतो निःसंशयं भविष्यति। एषा अर्पितमदनसन्देशा विविक्ते वकुलावलिका उपस्थिता। (य)

राजा। अपि स्मरेदसावस्मदभ्यर्थनाम्? (र)

---

भवति तन्नूनं मामेव अधिकृत्य, मय्येव राजत्वात् मनोरथस्य मद्विषयत्वेनैव अति-भूमिलङ्घित्वसामञ्जस्यात् इत्येव दृढ़ं कल्पयितुं मनः प्रवर्त्तते इति भावः। विहृतोऽपि न त्वमित्यत्र विहृतोऽपि तत्त्वमिति, फल इत्यत्र रस इति च पाठभेदौ दृश्येते।

(य) साम्प्रतं अधुना निःसंशयं निःसन्देहं भवतः तवैव भविष्यति एषा मालविका तवैव अधिकारवर्त्तिनी भविष्यतीत्यर्थः। तवैव हेतुमाह—अर्पितेत्यादिना। अर्पितः स्थापितः मदनसन्देशः कामसम्बन्धी संवादः यत्र तथाभूता, मालविकाया मनोगतिं राज्ञि प्रवर्त्तयस्व इति बोधिता इत्यर्थः। वकुलावलिका विविक्ते निर्ज्जनस्थाने उपस्थिता समागता, तथाहि इदानीं निर्ज्जनस्थाने सुविसब्धमियं वकुलावलिका मालविकां नानाविधैरुपायैः प्रबोध्य त्वयि बद्धरागां त्वदुपभोगक्षमाञ्च करिष्यतीति निश्चितं जानीया इति भावः। निःसंशयं भविष्यति इत्यत्र संशयं छरिष्यतीति पाठोऽपि दृश्यते।

(र) असौ वकुलावलिका। अपिः प्रश्ने। अस्माकम् अभ्यर्थनां मालविकासम्बन्धिनीं प्रार्थनां स्मरेत् मनसि प्राप्नुयात्, तथाहि यदि सा अस्मदभ्यर्थना तया विस्मृता स्यात् तदा कथमिव मालविकाप्रबोधनजन्यमस्मदभिलषितफलं सम्पद्येत इति भावः, "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः।

---

লাভ করা যায় না। তথাপি, তুমি যে এইরূপ পরিদেবনা করিতেছ, আমি আপনাকেই ইহার লক্ষীভূত করিতেছি॥১০॥

বিদূ। এখন আর সন্দেহ নাই, মালবিকা নিশ্চয়ই আপনার হইবেন। বকুলাবলিকা নির্জ্জনে সমাগতা হইয়াছে। ইহাকে আমি আপনার কথিতানুরূপ মদনসংবাদ জ্ঞাপিত করিয়া পাঠাইয়া দিয়াছি। (য)

विदू। **किं दाणिं एसा दासीए दुहिदा तुह गुरुअं संदेसं विसुमरेदि ? अहं दाव ण विसुमरेमि।** [ किमिदानीमेषा दास्या दुहिता तव गुरुकं सन्देशं विस्मरति ? अहं तावन्न विस्मरामि । ] (ल)

( प्रविश्य चरणालङ्कारहस्ता वकुलावलिका। )—**अवि सुहं सहीए ?** [ अपि सुखं सख्याः ? ] (व)

माल। **अम्मो वउलावलिआ उवट्ठिदा ! सहि साअदं दे ? उवविस।** [अहो वकुलावलिका उपस्थिता ! सखि ! स्वागतं ते ? उपविश। ] (श)

---

(ल) एषा वकुलावलिकालक्षणा दास्याः दुहिता नीचागर्भजातत्वेन नीचा इत्यर्थः। तव राज्याधीश्वरस्य स्वप्रभोः इति व्यज्यते। गुरुकं गुरुतरं न साधारणमपीति भावः। सन्देशं संवादं किम् इदानीम् अधुना अल्पकालातिक्रमे एव विस्मरति ? अपि तु न कथमपि विस्मर्त्तुमर्हतीति भावः। ननु कथमेवमनुमीयते इत्याह—अहमित्यादिना। अहं तावत् इदानीमपि न विस्मरामि, तथाहि अहं स्वल्पमेधा अपि यत् एतावत्कालं विषयमिमं न विस्मरामि तत कैयं सम्भावना अस्यास्तरुण्या निपुणायाः एतद्विस्मृतेरिति भावः।

(व) चरणालङ्कारैः युक्तौ हस्तौ यस्याः तथाभूता, अशोकतरौ पादाघातकाले व्यवहरणीयस्य मालविकया परिधानीयस्य पादालङ्कारस्य महिष्या प्रदानमिति तद-लङ्कारहस्ता इत्यर्थः। अपिः प्रश्ने। सख्याः मालविकायाः। सुखं कुशलम्।

(श) स्वागतं सुखेन आगमनम्, आगमने तव कोऽपि विघ्नो न जातः कच्चित् इत्यर्थः।

---

রাজা। আমাদের কথা কি ইহার মনে আছে ? (র)

বিদূ। কি ! এক্ষণে দাসী-পুত্রী আপনার গুরুতর সংবাদ বিস্মৃত হইবে ? আমারও ত এখনও মনে আছে। (ল)

[ চরণালঙ্কারহস্তে বকুলাবলিকার প্রবেশ। ]

বকুলা। সখি ! কুশল ত ? (ব)

মাল। অহে ! বকুলাবলিকা উপস্থিত হইয়াছে ! তোমার ত স্বাগত ? উপবেশন কর। (শ)

वकुला। ( उपविश्य। ) हला ! तुमं दाणिं जोग्गदाए णिउत्ता। ता एक्कं चलणं उवणेहि, जाव सालत्तअं सणेउरं करेमि। [ हला, त्वमिदानीं योग्यतया नियुक्ता। तदेकं चरणमुपनय, यावत् सालक्तकं सनूपुरं करोमि। ] (घ)

माल। ( स्वगतम्। ) हिअअ ! अलं सुहिदाए ? उवट्ठिदो अअं विहवो त्ति। कहं दाणिं अत्ताणं मोचेअं ? अहं वा एदं एव्व मे मिच्चुमण्डणं भविस्सदि। [ हृदय ! अलं सुखितया ? उपस्थितः अयं विभव इति। कथमिदानीमात्मानं मुञ्चेयम् ? अथवैतदेव मे मृत्युमण्डनं भविष्यति। ] (ङ)

---

(घ) हला इति सख्याः सम्बोधनम्, "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इति दर्पणनियमः। योग्यतया सामर्थ्येन नियुक्ता व्यापारिता महिष्या इति शेषः। तथाहि महिषी धारिणी त्वां वराङ्गनाम् अशोककुसुमोद्गमसाधनानुकूलां विवेचयन्ती दोहदविधाने नियुक्तवती अतस्त्वमस्माभिः सुतराम् आदरणीया इति भावः। तत् तस्मात् एकं चरणम् उपनय प्रसारय, सालक्तकम् अलक्तकरागरञ्जितं सनूपुरं नूपुरालङ्कृतञ्च करोमि, दोहदविधाने चरणस्य मण्डितत्वप्रयोजनादिति भावः। अनेन उपक्रमेण तव महती योग्यता प्रकाशं गमिष्यति, तेन च राज्ञा सह समागमसम्भावना दृढायते इति गूढार्थः।

(ङ) सुखितया विरहोद्दीपकानाम् उपनतानामलङ्काराणाम् अस्वीकारेण ज्वाला-सम्भावनापनोदनेन इत्यर्थः। अलं निष्प्रयोजनम्। तथाहि यद्यपि विरहवशात् त्वमपरानात्मनोऽलङ्कारान् परित्यज्य निर्वृतिमिव मे सम्पादितवत्, तथापि एतदुपनतमलङ्करणं कथमपि न परिहेयम् इति भावः। यतः अयं विभवः सम्पदेव उपस्थितः, इति हेतोः।

---

বকুলা। ( উপবিষ্ট হইয়া। ) সখি ! তুমি এক্ষণে যোগ্যা বলিয়াই নিযুক্ত হইয়াছ। তোমার একটী পা দাও। অলক্তক-রঞ্জিত করিয়া উহাতে নূপুর পরাইব। (ঘ)

बकुला। **किं विआरेसि? उस्सुआ क्खु इमस्स तवणीआसोअस्स कुसुमोग्गमो देवी।** [ किं विचारयसि? उत्सुका खल्वस्य तपनीयाशोकस्य मुकुलोद्गमे देवी। ] (ह)

---

तथाहि एतदलङ्कारान् परिधाय अशोके पादाघातं कृत्वा यदि सफलकामा भवितुमर्हामि तदा धारिण्या परितुष्टया अभिमतं फलं वा निष्पादयिष्यते इति भावः। नास्ति आत्मनः कथमपि अन्यथाप्रवर्त्तनसामर्थ्यमस्य विषयस्य राज्ञ्या निर्द्दिष्टत्वादित्याह—कथमित्यादिना। इदानीं राज्ञ्या आदिष्टे विषये उपस्थिते सतीत्यर्थः। कथं केन प्रकारेण आत्मानं स्वां मोचयेयं मुक्तं कुर्य्याम्, अपितु न कथमपि मोचयितुं शक्नुयाम् महिष्याः आदेशस्य अलङ्घितत्वादिति भावः। अथवा पक्षान्तरे, एतत् मण्डनमेव मे मम मृत्युमण्डनं मरणकालीनं भूषणं भविष्यति एतदलङ्कारेण परिगृहीतेन मरणमपि वा मे स्यात्, एतेन विषयेषु सुतरां द्वेषः, कामावस्थाया अतिदूरारोहणञ्च व्यक्तं भवति। अथवा अत्र यथाश्रुतार्थ एव कार्य्यः, यथा अयं विभवः महिषीजनयोग्यालङ्कारः सम्पत्तिः उपस्थितः इति कृत्वा सुखितया आनन्दे न अलम्, वास्तविकमहिषीत्वस्य स्वस्यामभावात् राजसम्बन्धिजनव्यवहार्य्यीणानेन राज्ञः स्मरणात् तापातिशयस्यैव जननादिति भावः। उत्तरभागस्तु तुल्यार्थ एव।

(ह) किं किमात्मकं वस्तु विचारयसि विवेचयसि? अस्य तपनीयाशोकस्य सुवर्णाशोकवृक्षस्य कुसुमोद्गमे पुष्पोद्भेदे देवी महिषी धारिणी खलु निश्चितम् उत्सुका समुत्कण्ठिता वर्त्तत इति शेषः। तथाहि महिष्याः कालक्षेपानर्हतया कालमनपेक्ष्यैव अलङ्कारं परिधाय सालक्तकेन पादेन अशोकं पादेनाजहि, सत्वरं यथा तव पुष्पोद्गमः स्यादिति भावः। कुसुमोद्गम इत्यत्र मुकुलोद्गम इति केचित् पठन्ति, तन्न समीचीनम्, पादाघातेन अशोकस्य पुष्पविकाशस्यैव शास्त्रसिद्धत्वात्। तथाच दर्पणे "पादाघातादशोकं विकसति" इति।

---

মাল। ( স্বগত )। হৃদয়! আর সুখে প্রয়োজন নাই। এই বিভব উপস্থিত। কিরূপে এক্ষণে আত্মাকে মোচন করিব? অথবা ইহাই আমার মৃত্যুমণ্ডন হইবে। (স)

राजा। कथमशोकदोहदनिमित्तोऽयमारम्भः ? (च)

विदू। किं ण क्खु जाणासि तुमं, मह कालणादो इमं अन्तेउरणेवत्थेण जोअइस्सदि त्ति ? [ किं नु खलु जानासि त्वं, मम कारणात् इमाम् अन्तःपुरनेपथ्येन योजयिष्यतीति ? ] (क)

माल। हला मरिसेहि दाव णं। [ हला ! मर्षय तावदेनम्। ] ( इति पादमुपहरति। ) (ख)

---

(च) अयं प्रवर्त्त्यमानः आरम्भः व्यापारः अलङ्कारपरिधापनादिरूपः, कथं सम्भावनायाम् अशोकदोहदनिमित्तः अशोकवृक्षस्य पुष्पोद्गमकारणीभूतपादाघात-निमित्त इत्यर्थः। तथाहि वकुलावलिकाया वचनेन एवमेव उन्नेतुं शक्यत इति भावः।

(क) विदूषकः राज्ञः सम्भावनया परिहासेन ब्रवीति—किमित्यादि। मम राज्ञः ममेति राजवचनापेक्षया अस्मदः प्रयोगः। कारणात् हेतोः, तवैव उपभोगानुकूल्यविधानाय इति भावः। इमां मालविकाम् अन्तःपुरनेपथ्येन अन्तःपुरिकाजनोचितेन भूषणेन योजयिष्यति महिषीति शेषः। तथाहि इतः पूर्वम् ईदृशनिश्चयकारी वञ्चितोऽसि चित्तेन इति भावः।

(ख) हला सखि ! एनं त्वयि माननीयायामपि चरणप्रसारणरूपमपराधम्। तावत् प्रथमतः मर्षय क्षमस्व। इति उक्तरूपं वाक्यम् उक्ता। पादं चरणम् उपहरति वकुला-वलिकाया हस्ते अर्पयति, अलङ्कारस्य लाक्षारसस्य च सन्निवेशनाय इति भावः।

---

বকুলা। কি বিচার করিতেছ ? দেবী এই তপনীয় অশোকের পুষ্পোদ্-গমবিষয়ে উৎসুকা হইয়াছেন। (ছ)

রাজা। অশোকদোহদের নিমিত্ত এই উদ্‌যোগ কি ? (ক্ষ)

বিদূ। আপনি কি জানেন না, দেবী আপনারই উপভোগানুকূল্যের নিমিত্ত মালবিকাকে অন্তঃপুর-বেশ পরিধান করাইবেন ? (ক)

মাল। ( পাদপ্রদান করিয়া। ) সখি ! অপরাধ ক্ষমা কর। (খ)

बकुला । अइ ! सरीरं सि मे । [अयि ! शरीरमसि मे !] (इति नाट्येन चरणसंस्कारमारभते । ) (ग)

राजा । चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य रागलेखाम् ।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥

[अन्वयः । वयस्य ! हरदग्धस्य मनोभवद्रुमस्य प्रथमां पल्लवप्रसूतिम् इव प्रियायाः चरणान्तनिवेशितां सरसां रागलेखां पश्य । ११ । ]

---

(ग) अयि ! एतत् सादरसम्बोधनम् । असि त्वं मे मम शरीरं देहभूता असि इति शेषः । तथाहि यथा आत्मनः पादस्य आत्मनि स्थापने नापराधः तथैव तवापि मयि पादस्थापने नास्ति अपराधस्य लेशोऽपि, तत् निःसङ्कोचमेव पादमुपहृत्य वर्त्तस्व इति भावः । नाट्येन अभिनयेन, चरणसंस्कारं चरणस्य परिष्कारणम् अलक्तकदानात् पूर्वतः कर्त्तव्यमित्यर्थः आरभते प्रवर्त्तयति ।

११ । अथ मालविकायाः चरणे बकुलावलिकया निहितां लाक्षारसलेखामवलोक्य तत्सौन्दर्य्यं व्यनक्ति—चरणान्तेत्यादिना । हे वयस्य ! हरेण समाधिभङ्गात् कुपितेन रुद्रेण दग्धस्य भस्मीकृतस्य मनोभवः काम एव द्रुमः पादपः तस्य कामतरोः प्रथमाम् आदिमां पल्लवप्रसूतिं किसलयोद्गममिव उद्गतं किसलयमिवेत्यर्थः । "भावे विहितः कृत्प्रत्ययो द्रव्यवत् प्रकाशते" इति नियमेन तदर्थः । प्रियायाः प्रियतमायाः मालविकायाः चरणान्ते पादप्रान्ते निवेशितां निहितां सरसाम् आर्द्रां मदीयशृङ्गारसोद्दीपिकाञ्च रागलेखा लाक्षारसरागं पश्य अवलोकय, तथाहि प्रियायाश्चरणस्य रागलेखामवलोक्य एव अहं सुतरां कामाधीनमानसो जात इति भावः । रज्यते अनेनेति रागः लाक्षारसः तस्य

---

বকুলা । অয়ি ! তুমি আমার শরীর । [ নাট্যে চরণসংস্কারের আরম্ভণ ] । (গ)

রাজা । বয়স্য ! অবলোকন কর, প্রিয়ার এই চরণান্তসন্নিবিষ্ট সরস

विदू। चलणाणुरूवो तत्तभोदीए अहिआरो उवक्खित्तो।

[ चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः। ] (घ)

राजा। सम्यगाह भवान्। (ङ)

नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम्॥ १२॥

[ अन्वयः। बाला नवकिसलयरागेण स्फुरितनखरुचा अनेन आग्रपादेन दोहदापेक्षया अकुसुमितम् अशोकं वा आर्द्रापराधं प्रणमितशिरसं कान्तं वा द्वौ हन्तुमर्हति। १२। ]

---

लेखा सन्निवेशः, करणे घञ्प्रत्ययः। अत्र मनोभवे द्रुमत्वारोपात् रूपकं तत्सापेक्षा च रागलेखायां पल्लवत्वारोपसम्भावनाया इवशब्देन वाच्यत्वात् वाच्या इत्युत्प्रेक्षा।

(घ) तत्रभवत्याः सम्मानार्हायाः अस्या मालविकायाः चरणानुरूपः चरणतुल्यः उत्कृष्टयोः चरणयोः योग्य एव इत्यर्थः। अधिकारः कर्म्मनियोगः उपक्षिप्तः समर्पितः देव्या इति शेषः। तथाहि यथैव अस्याः पादौ सुकोमलौ तथैव मृदुकर्म्मणि अशोकस्य दोहदसम्पादनयोग्ये पादस्पर्शनरूपे नियुक्तौ इति भावः।

(ङ) भवान् सम्यक् युक्तियुक्तम् आह, अस्याः पादौ कोमलकर्म्मार्हौ इदञ्च कर्म्म एतत्पादानुरूपमिति यथार्थमेव भवता उपक्षिप्तम् इति भावः।

१२। अथ विदूषकोक्तिः सम्यक्त्वमेव समर्थयते—नवेत्यादिना। बाला इयं कुमारी मालविका नवकिसलयस्य अचिरजातपल्लवस्य रागः रक्तिमा इव रागः रक्तिमा यत्र तथा-

---

রাগলেখা হরকোপানলে ভস্মীভূত কামরূপ পাদপের প্রথম পল্লবোদ্‌গমের ন্যায় শোভা পাইতেছে॥ ১১॥

বিদূ। মাননীয়া মালবিকার কোমল চরণানুরূপই নিয়োগ প্রদত্ত হইয়াছে। ( ঘ )

রাজা। তুমি যথোচিত নির্দ্দেশ করিয়াছ। (ঙ)

विदू। पहरिस्सदि तत्तभोदी तुमं अवरद्धम्। [प्रहरिष्यति तत्रभवती त्वामपराद्धम्।] (च)

---

भूतेन नवपल्लववत् रक्तवर्णेन स्फुरिताः विकीर्णाः नखानां रुचः कान्तयः यत्र तथाभूतेन पाटलनखद्युतिभिः शोभितेन अनेन दृश्यमानेन आर्द्रपादेन अलक्तकरससम्पर्कात् सरसेन चरणेन द्वौ द्वाविव हन्तुं प्रहर्त्तुम् अर्हति योग्या भवति, कं कम् इत्याकाङ्क्षायामाह— दोहदस्येति। दोहदस्य पुष्पोद्गमहेतुभूतस्य वराङ्गनापादाघातस्य अपेक्षया अकुसुमितं कुसुमविमुक्तं अगृहीतपुष्पमित्यर्थः। अशोकम् अशोकवृक्षं वा आर्द्रः नवीनः अपराधः यस्य तं नूतनापराधकारिणम् अतएव प्रणमितं प्रणामं नीतं शिरः मस्तकं येन तथाभूतम् अभिमानजन्यं वैमुख्यमपाकर्त्तुम् प्रसादसाधकं नमस्कारं कृतवन्तं कान्तं दयितजनं वा हन्तुमर्हतीति पूर्व्वेणान्वयः। तथाहि एतद्द्वयमेव वस्तु अस्याश्चरणयोः योग्यमिति वास्तविक-कथनात् विदूषकवाक्ये सम्यक्त्वोपपत्तिः। अत्र दोहददानवेलायाम् अशोकस्य प्रस्तुतत्वात् तत्रैव च वक्तुः कान्तस्य राज्ञश्च प्रस्तुतत्वाच्च उभयोः प्रस्तुतयोरेकेन हननरूपधर्म्मेण सम्भवात् तुल्ययोगिता। नवकिसलयरागेण इत्यत्र समासगता उपमा। कान्तमित्यप्रस्तुतेन सामान्येन स्वस्यैव विशेषस्य अप्रस्तुतस्य प्रत्यायनात् अप्रस्तुतप्रशंसेति केचित्,तन्मते प्रस्तुता-प्रस्तुतयोरेकधर्म्माभिसम्बन्धात् दीपकालङ्कार इति मतम्। आर्द्रापराधत्वस्य पदार्थस्य प्रणमितशिरस्त्वमिति पदार्थं प्रति हेतुत्वात् काव्यलिङ्गम्। हन्तुमित्यस्य प्रहारमात्रार्थं अवाचकत्वात् अवाचकत्वदोषः। हन्तुमित्यस्य प्राणवियोगानुकूलव्यापारार्थकतया च अमङ्गलरूपाश्लीलताव्यञ्जकत्वात् अश्लीलतादोष इति वदन्ति। द्वौ हन्तुमर्हत्यनेन इत्यत्र द्वावर्हतीयं प्रहर्त्तुमिति दिशा समाधानं कर्त्तुं शक्यम्।

(च) तत्रभवती माननीया मालविका अपराद्धं प्रणयापराधभागिनं त्वां प्रहरिष्यति मेखलादिना आहनिष्यति, तथाहि अनया सह अचिरमेव तव समागमो भविष्यति,

---

এই বালা নবকিসলয়সদৃশ-রাগবিশিষ্ট ও প্রস্ফুরিত-নখকিরণ-সম্পন্ন আর্দ্রপাদ দ্বারা দোহদাপেক্ষী কুসুমহীন অশোক ও নূতনাপরাধকারী প্রণমিত মস্তক কান্ত,—এই উভয়কেই তাড়না করিবার যোগ্যপাত্রী ॥১২॥

राजा। मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य। (छ)

[ ततः प्रविशति युक्तमदा इरावती चेटी च। ] (ज)

इरा। हञ्जे णिउणिए! सुणामि बहुसो, मदो किल

---

ततश्च अभिमानाद्यवसरे त्वयि प्रणयप्रहारोऽप्यनया करिष्यते तदलमुत्तरलतया प्रार्थ्या इति भावः। अत्र भङ्ग्या अचिरं मालविकासमागमप्रतिपादनात् प्रर्थ्यायोक्तम्।

(छ) सिद्धिः मया वाञ्छितस्य मालविकया सह समागमस्य समुत्पादः तद्दर्शिनः अवश्यम्भाविनस्तस्य विषयस्य प्रत्यक्षकारिणः इति प्रकृतम्, ब्राह्मणस्य वचः वाक्यं मालविकायाः समागमस्यावश्यम्भावित्वविनिवेदकमित्यर्थः। मूर्ध्ना शिरसा प्रतिगृहीतं स्वीकृतम्, एतेन प्रकृतवाक्यार्थे सुतरामादरो दर्शितो भवति। अत्र अप्रस्तुतात् सिद्धिरूपात् सामान्यात् विशेषस्य मालविकालाभरूपस्य प्रस्तुतस्य गम्यत्वादप्रस्तुतप्रशंसेति भव्याः।

(ज) युक्तमदा आनन्दातिशयभोगाय नातिरिक्तमत्ततायुक्ता, अतिरिक्तमद्यपानेन मत्ततातिशयस्य उदयात् न आनन्दः परं ज्वाला एव प्रवर्त्तते इति आनन्दोपभोगोचित-मद्यपानजन्यमत्तताया उपन्यासः, प्रकृते राजाचरितविषयाणामवधारणसामर्थ्यासत्ता-व्यञ्जनार्थश्च, अन्यथा विह्वलाया राजवचनाद्यर्थग्रहणसामर्थ्यातिबोधनस्य योग्यतया वक्ष्यमाणमसमञ्जसं स्यात् इति भावः। इरावती तदाख्या अग्निमित्रस्य अपरा राज्ञी, चेटी तस्या दासी च, प्रविशतीति प्रत्येकं पृथगन्वेति, अन्यथा द्विवचनप्रसक्तेः। न चात्र इरावत्या मद्यपाने नितान्तदोषशङ्का कार्य्या क्षत्रियादीनां गौड़ीप्रभृतिमद्यपानस्य "कामतोऽपि हि राजन्यो वैश्यो वापि समाहितः। मद्यं पीत्वा सुरासंज्ञं न किञ्चिद्दोषमर्हति" इत्यादिषु श्रुतत्वात्।

---

বিদূ। প্রণয়াপরাধী আপনাকে মাননীয়া মালবিকা প্রহার করিবেন। (চ)

রাজা। সিদ্ধিদর্শী ব্রাহ্মণের বাক্য শিরোধার্য্য করিলাম। (ছ)

[অনন্তর মদ্যপানজনিত মত্ততাযুক্তা ইরাবতী ও চেটীর প্রবেশ। ] (জ)

इत्थिआजणस्स विसेसमण्डणं त्ति। अवि सच्चो अअं लोअवादो?। [हञ्जे निपुणिके! शृणोमि बहुशः, मदः किल स्त्रीजनस्य विशेषमण्डनमिति। अपि सत्योऽयं लोकवादः?] (झ)

निपु। पढ़मं लोअवादो एव्व, सम्पदं सच्चो संवुत्तो। [प्रथमं लोकवाद एव, साम्प्रतं सत्यः संवृत्तः।] (ञ)

इरा। अलं मइ सिणेहेण? कहेहि—कुदो दाणिं अवगमिदव्वं दोलाघरं पढ़मागदो भट्टा ण वेत्ति? [अलं मयि स्नेहेन? कथय—कुत इदानीम् अवगन्तव्यं दोलागृहं प्रथमागतो भर्त्ता नवेति?] (ट)

---

(झ) निपुणिके इति इरावतीदास्या नाम तत्सम्बोधनम्। बहुशः बहुवारं शृणोमि लोकमुखात् वक्ष्यमाणमिति शेषः। मदः मद्यपानजन्या मत्तता स्त्रीजनस्य रमणीजनस्य विशेषमण्डनं सविशेषशोभासम्पादकं कङ्कणमेखलाप्रभृतिभ्योऽलङ्कारेभ्यः प्रकृष्टतरं भूषणमित्यर्थः। अपिः प्रश्ने, अयम् उक्तरूपः लोकवादः जनानां वार्त्ता सत्यः यथार्थः। तथाहि कथय मामद्य मद्यपानजनितमत्ततया कथमिव प्रत्येषि, सुन्दरीमसुन्दरीं वा इति भावः। अत्रापि पर्य्यायोक्तमलङ्कारः।

(ञ) प्रथमम् इतः पूर्व्वं, तव मत्ततासमुदयात् पूर्वमित्यर्थः। लोकवादः जनश्रुतिमात्रम् एव न तु वस्तुतः सत्यभूतः, तज्जनितसौन्दर्य्यस्य विशेषेण कुत्रापि अननुभवादिति भावः। साम्प्रतम् अधुना त्वयि गृहीतमत्तभावायां सत्यामित्यर्थः। सत्यः यथार्थः संवृत्तः जातः स लोकवाद इति शेषः। तथाहि तवाद्य मत्ततायाः उदयेन यथा सौन्दर्य्यसम्पत्तिः परिस्फुटा न तथा सर्वत्र परिस्फुट्यते, पूर्वापेक्षया इदानीं द्विगुणितसौन्दर्य्यवासीति भावः। अनेन अपरस्त्रीजनापेक्षया उत्कर्षप्रतीतेर्व्यतिरेको व्यज्यते।

---

ইরা। সখি নিপুণিকে! অনেকের নিকট বহুবার শুনিয়াছি, মত্ততা স্ত্রীজাতির বিশেষ অলঙ্কার। এই জনশ্রুতি কি সত্য? (ঝ)

নিপু। পূর্ব্বে জনশ্রুতি মাত্র ছিল। সম্প্রতি সত্য হইয়াছে। (ঞ)

निपु। भट्टिणीए अखण्डिदादो पणआदो। [भट्टिन्या अखण्डितात् प्रणयात्।] (ठ)

इरा। अलं सेवाए। मज्झत्थदं परिगह्णिअ भणाहि। [अलं सेवया। मध्यस्थतां परिगृह्य भण।] (ड)

---

(ट) मयि स्नेहेन प्रणयेन अलं निष्प्रयोजनं, तथाहि स त्वं सकलरमणीपेक्षया मम स्वत एव सौन्दर्य्यस्य उत्कर्षं मत्ततासमुदयेन च ततोऽपि परमोत्कर्षं प्रतिपादयसि तन्नूनं मयि स्नेहातिरेकादेव नान्यथा इति भावः। वचनमिदम् इरावत्या गौणतः सौन्दर्य्यगर्वमपि व्यनक्ति, चटोवाक्ये कस्याश्चिदापत्तेरनुद्भावनेन केवलस्नेहप्रयोज्यत्व-व्याख्यानात्। कुतः कस्मात् हेतोः, अवगन्तव्यं ज्ञातव्यं, भर्त्ता स्वामी, दोलागृहं प्रथमं मदागमनात् पूर्वमेव आगतो नवा? तथाहि यदि भर्त्ता प्रथमत एव दोलागृह-मागतः स्यात् तदैव मयि तस्य अखण्डितानुरागः प्रकाशेत, तदिदं मया ज्ञातव्यम् इति भावः।

(ठ) भट्टिन्या, राज्ञ्या भवत्याः, अखण्डितात् अक्षुण्णात् प्रणयात् अनुरागात् भर्त्ता प्रथममेव आगत इति निःसंशयमिति भावः। अथवा भवत्या कदापि राज्ञः प्रणयो न खण्डितः चिरमेव राजनि अखण्डितप्रणया भवती अतस्तत्प्रणयस्मरणेन सः अवश्य-मागत इति वाढ़मिति भावः। "देवी कृताभिषेकायामितरासु च भट्टिनी"त्यमरः, धारिणी कृताभिषेका, इरावती च तदितरा।

(ड) सेवया उपासनया सन्तोषविधायकवचनमात्रप्रस्तावनया इत्यर्थः। अलं निष्प्रयोजनम्। तथाहि मदनुरागात् भर्त्ता प्रथमं दोलागृहमागत इति नूनमसम्भवं

---

ইরা। আমার প্রতি আর স্নেহপ্রকাশে প্রয়োজন নাই। এক্ষণে বল,—কিরূপে জানিতে পারিব, দোলাগৃহে আর্য্যপুত্র প্রথমে আসিয়াছেন কি না? (ট)

নিপু। আপনার অখণ্ডিত প্রণয়। সুতরাং, মহারাজ অগ্রেই আসিয়াছেন। (ঠ)

निपु। वसन्तोस्सवुवाअणलोलुवेण अज्जगोतमेण कहिअं। तुवरदु भट्टिणी। [ वसन्तोत्सवोपायनलोलुपेन आर्य्यगौतमेन कथितम्। त्वरतां भट्टिनी। ] (ढ)

इरा। ( अवस्थासदृशं परिक्रम्य। ) हञ्जे! मदेण गिलाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुवरावेदि, चलणा उण ण पसरन्ति। [ हञ्जे ! मदेन ग्लायमानमात्मानम् आर्य्यपुत्रस्य दर्शने हृदयं त्वरयति, चरणौ पुनर्न प्रसरतः। ] (ण)

---

मनेर, केवलं त्वं मत्सन्तोषविधानार्थमेवं ब्रवीषीति भावः। तत मध्यस्थताम् औदासीन्यं पक्षपातराहित्यं परिगृह्य आश्रित्य भण कथय, स आगतो नवेति शेषः।

(ढ) वसन्तोत्सवे वसन्तकालीनानन्दजनकव्यापारे उपायनम् उपहारः मोदका-द्युपढौकनमित्यर्थः। तल्लोलुपेन तल्लाभाकाङ्क्षिणा, आर्य्यगौतमेन विदूषकेण कथितं निवेदितं, राज्ञः दोलागृहे प्रथमागमनमिति शेषः। तदलमत्र सन्देहेन राज्ञो नियत-सहचरेण कथितत्वादिति भावः, भट्टिनी त्वरतां सत्वरं गच्छतु दोलागृहं प्रतीति शेषः।

(ण) अवस्थासदृशं मत्तावस्थायोग्यं, स्खलितपदमित्यर्थः। परिक्रम्य चलित्वा। हृदयं मम अन्तःकरणं कर्त्तृ मदेन मद्यपानजन्यमत्ततया ग्लायमानं ग्लानिमापद्यमानं अवशतामिव गच्छन्तमित्यर्थः। आत्मानं देहम् आर्य्यपुत्रस्य पत्युर्महाराजस्य दर्शने साक्षात्-कारे त्वरयति त्वरितां करोति, पुनः किन्तु चरणौ पादौ न प्रसरतः सत्वरं गच्छतः शरीरस्य मत्ततया मन्थरशक्तिकत्वादिति भावः। एतन्ममातिदुःखकारणमिति तात्पर्य्यम्।

---

ইরা। সন্তোষবিধায়ক বচনরচনায় আর প্রয়োজন নাই। এক্ষণে পক্ষ-পাতিত্ব পরিত্যাগ করিয়া বল। (ড)

নিপু। আর্য্য গৌতম বসন্তোৎসবীয় উপঢৌকন পাইবার লোভে বলিয়াছেন। এখন সত্বরা হউন। (ঢ)

ইরা। ( অবস্থাসদৃশ পরিক্রম করিয়া ) সখি! মদ্যপানে আমার

निपु। णं पत्तह्म दोलाधरं । [ ननु प्राप्ते स्वो दोलागृहम् । ] (त)

इरा। णिउणिए ! अज्जउत्तो एत्थ न दीसदि ! [ निपुणिके ! आर्य्यपुत्त्रोऽत्र न दृश्यते ! ] (थ)

निपु। भट्टिणी ओलोएदु। परिहासणिमित्तं कहिं वि गूढ़ेण भट्टिणा होदव्वं। अह्मेवि इमं पिअङ्गुलदापरिक्खित्तं असोअसिलापट्टअं पविसामो। [ भट्टिणी अवलोकयतु। परिहासनिमित्तं कस्मिन्नपि गूढ़ेन भर्त्रा भवितव्यम्। आवामपीदं प्रियङ्गुलतापरिक्षिप्तम् अशोकशिलापट्टकं प्रविशाव: । ] (द)

---

(त) प्राप्ते आगते स्वः, आवामिति शेषः।

(थ) अत्र अस्मिन् दोलागृहे, आर्य्यपुत्रः न दृश्यते आलोक्यते, तत् किं नागत एव इदानीमपि भर्त्ता अत्र इति प्रश्नो व्यज्यते।

(द) अवलोकयतु, अन्विष्य पश्यतु, परिहासनिमित्तं नर्म्मकरणाय, भर्त्ता स्वामिना कुत्रापि कस्मिंश्चित् गुप्तप्रदेशे गूढ़ेन प्रच्छादितशरीरेण भवितव्यम्, तदत्र भर्त्रा आगत इत्यत्र नास्ति सन्देह इति भावः। प्रियङ्गुलताभिः श्यामालताभिः परिक्षिप्तं परिवेष्टितम् अशोकशिलापट्टकम् अशोकवृक्षतलवर्त्तिप्रस्तरफलकं प्रविशाव: अभ्यन्तरवर्त्तिनस्तस्य प्रस्तरफलकस्य अभ्यन्तररूपताऽस्वीकारेण प्रविशतेः प्रयोगः न दुःसहः। तत्र प्रवेशो राज्ञः अन्वेषणाय इति मन्तव्यम्।

---

আত্মা গ্লানিযুক্ত হইয়া উঠিয়াছে। হৃদয় আর্য্যপুত্রের দর্শনে ত্বরা প্রদান করিলেও, চরণ চলিতেছে না। (ণ)

নিপু। আমরা এই দোলাগৃহে উপস্থিত হইয়াছি। (ত)

ইরা। নিপুণিকে! আর্য্যপুত্রকে ত এখানে দেখিতেছি না! (থ)

নিপু। অন্বেষণ করিয়া দেখুন—নিশ্চয়ই তিনি পরিহাসনিমিত্ত কোথাও লুকাইয়া আছেন। আমরা এই প্রিয়ঙ্গুলতাপরিবেষ্টিত অশোক-তলবর্ত্তী শিলাপট্টে প্রবেশ করি, চলুন। (দ)

इरा। तह्वा। [ तथा। ] (ध)

निपु। ( विलोक्य। ) आलोएदु भट्टिणी। चूदङ्कुरं विचिणन्तीणं अह्माणं पिवीलिआहिं दंसिदं। [ अवलोकयतु भट्टिनी। चूताङ्कुरं चिचिन्वत्योरावयोः पिपीलिकाभिर्दष्टम् ] (न)

इरा। कहं विअ ? [ कथमिव ? ] (प)

निपु। एसा असोअपादवच्छाआए मालविआए वउलावलिआ चलणालंकारं णिव्वत्तेदि। [ एषा अशोकपादपच्छायायां मालविकाया वकुलावलिका चरणालङ्कारं निर्वर्त्तयति। ] (फ)

---

(ध) तथा, तत्रैव प्रविशाव इति स्वीकारोक्तिरियम्। तादृशेषु स्थलेषु राज्ञः स्थितिसम्भवादिति भावः।

(न) अथ निपुणिका अन्तरे मालविकायाः चरणौ प्रसारयन्तीं वकुलावलिकामवलोक्य अप्रस्तुतपदार्थेन तदिरावतीं बोधयति—चूताङ्कुरमित्यादिना। चूताङ्कुरं रसालमुकुलं विचिन्वत्योः अन्वेषयन्त्याः आवयोः तव मम च पिपीलिकाभ्यां क्षुद्रकीटाभ्यां दष्टम्। आवयोरित्यत्र कर्म्मण्यपि सम्बन्धविवक्षया षष्ठी। भावे क्तप्रत्ययस्य कर्म्मणि षष्ठी वा। अस्य प्रस्तुतार्थः परतो निपुणिकामुखेनैव व्यक्तीभविष्यति, समादप्रस्तुतात् समस्य प्रस्तुतस्य गम्यत्वात् अप्रस्तुतप्रशंसालङ्कारः।

(प) कथमिव, त्वमनेन कीदृशमर्थं शंससि तत् न जानामि अतो ज्ञातुमिच्छामीति भावः।

(फ) अशोकपादपस्य छायायां तलस्थिते अनातपे, चरणालङ्कारं पादमण्डनं, निर्वर्त्तयति संसाधयति, तथाहि एतदेवास्माकमनिष्टतया पिपीलिकादंशनसदृशमिति

---

ইরা। আচ্ছা, চল। (ধ)

নিপু। (বিলোকনপূর্ব্বক)। ভট্টিনী অবলোকন করুন, চূতাঙ্কুর চয়ন করিতে গিয়া, আমাদের উভয়কে পিপীলিকা দংশন করিয়াছে। (ন)

ইরা। কি বলিতেছ ? (প)

इरा। ( शङ्कां रूपयित्वा। ) अभूमी इअं मालविआए। कहं एत्थ तक्केसि ? [ अभूमिरियं मालविकायाः। कथमत्र तर्कयसि ? ] (व)

निपु। तक्केमि—दोलापरिब्भंसिदाए सरुअचलणाए देवीए असोअदोहलाहिआरे मालविआ णिउत्तेति। अण्णहा कहं देवी सअं धारिदं णेउरजुअलं परिअणस्स अब्भणुजाणिस्सदि ! [ तर्कयामि—दोलापरिभ्रष्टया सरुजचरणया देव्या अशोकदोहदाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनस्य अभ्यनुज्ञास्यति ? ] (भ)

---

ब्रवीषीति भावः। अथवा यथा चूताङ्कुरस्थिताः पिपीलिकाः चूताङ्कुरलाभे विघ्नमुत्पादयन्ति तथैव इयं मालविका अस्माकं राजलाभे विघ्नकारिणी जातेति सम्भावयामीति भावः। पूर्ववाक्यस्मरणादनुसन्धेयः।

(व) शङ्कां शङ्कितभावं, राजमालविकयोः संसर्गसम्भावनाजन्यमित्यर्थः। इयम् उद्यानभूमिः, अभूमिः अयोग्यस्थानम्। अत्र अस्मिन् मालविकाया अत्रागमनविषये कथं कीदृशं तर्कयसि, कोऽत्र हेतुरिति भावः।

(भ) दोलायाः परिभ्रष्टया पतितया अत एव सरुजौ चालनाक्षमौ चरणौ यस्याः तथाभूतया स्तम्भितचरणया देव्या महिष्या धारिण्या अशोकस्य दोहदः चरणाघातरूपपुष्पोत्पादकक्रियाविशेषः, तदधिकारे तद्रूपे कर्त्तव्यकार्य्ये नियुक्ता अधिकृता इति उक्तरूपं तर्कयामि सम्भावयामि, अन्यथा ईदृशवस्त्वभावे, देवी धारिणी स्वयं धारितम् आत्मना स्वीकृतम् आत्मचरणालङ्कारमित्यर्थः। नूपुरयुगलं कथं केन हेतुना, परिजनस्य परिचारिकाया मालविकायाः अभ्यनुज्ञास्यति तत्परिधयत्नेन अनुमन्यते, तथाहि देव्याः

---

নিপু। এই যে বকুলাবলিকা অশোকপাদপের ছায়ায় মালবিকার চরণে অলঙ্কার পরাইতেছে। (ফ)

ইরা। ( শঙ্কিতভাবে ) ইহা কখন মালবিকার পক্ষে উপপন্ন হইতে পারে না। তোমার কি মনে হয় ? (ব)

ইরা। মহদী মে সংভাবণা। [মহতী মে সম্ভাবনা। ] (ম)

নিপু। কিং ণ অম্মেসীঅদি ভট্টা ? [ কিং ন অন্বিষ্যতি ভর্ত্তা ? ] (য)

ইরা। হজ্ঞে ! ণ মে চলণা অগ্গদো পবট্টন্তি। মদো মং বিআরেদি। আসঙ্কিদস্স দাব অন্তং গমিস্সং। (মালবিকা নিরূপ্যাত্মগতম্‌ ।) ঠাণে ক্খু কাদরং মে হিঅঅং। [ হঞ্জে ! ন মে চরণৌ অগ্রতঃ প্রবর্ত্তেতে। মদো মাং বিকারয়তি। আশঙ্কিতস্য তাবদন্তং গমিষ্যামি। স্থানে খলু কাতরং মে হৃদয়ম্‌ । ] (র)

---

কর্ত্তব্যসাধনায় এব তৎপরিচারিকায়া মালবিকায়া অত্র ইত্থং বর্ত্তনং সম্ভাব্যতে ইতি ভাবঃ।

(ম) মে মম মহতী সুদৃঢ়া সম্ভাবনা শঙ্কা জাতা, তথাহি মালবিকা রাজ্ঞা সঙ্কেতিতা বা ইদং পদমধিষ্ঠিতবতীত্যেবং শঙ্কাস্পৃষ্টমানসা সংবৃত্তাস্মীতি ভাবঃ। অথবা দেব্যা অশোকদোহদাধিকারে নিযুক্তা মালবিকা অত্র সমুপস্থিতা ইতি যৎ ত্বয়া কথিতং তদ্বিশ্বাসযোগ্যং ময়ি প্রতিভাতীতি ভাবঃ।

(য) কিং কেন হেতুনা ভর্ত্তা স্বামী ন অন্বিষ্যতে অনুসন্ধীয়তে, বিচীয়তা নিপুণভাবেন কুত্রাসৌ বর্ত্তত ইতি ভাবঃ।

(র) মে মম চরণৌ অগ্রতঃ সম্মুখভাগে ন প্রসরতঃ চলতঃ. মদঃ মদ্যপানজা মত্ততা মাং বিকারয়তি বিহ্বলাং করোতি. আশঙ্কিতস্য সম্ভাবিতপূর্ব্বস্য রাজ্ঞা সহ মালবিকায়াঃ সঙ্গমবিধেঃ মালবিকাং দৃষ্ট্বা রাজা অনুরাগং গচ্ছেন্নবা ইতি সংশয়স্য বা অন্তং শেষং

---

নিপু। আমার মনে হয়, দোলা হইতে পড়িয়া গিয়া, দেবী ধারিণীর চরণে বেদনা হইয়াছে। সেইজন্যই তিনি মালবিকাকে অশোকদোহদ-বিধায়ক পদাঘাত কার্য্যে নিযুক্ত করিয়াছেন। অন্যথা কিরূপে দেবী স্বীয় চরণের অলঙ্কার এই নূপুরযুগল পরিজনকে পরিতে অনুজ্ঞা করিবেন ? (ভ)

ইরা। এ বিষয়ে আমার মহতী আশঙ্কা সমুদ্ভাবিতা হইয়াছে। (ম)

নিপু। কিজন্য ভর্ত্তার অন্বেষণ করিতেছেন না ? (য)

वकुला। (मालविकायै चरणं दर्शयन्ती।) अवि रोअदि दे राअरेहा-विण्णासो? [अपि रोचते ते रागलेखाविन्यासः?] (ल)

माल। हला! अत्तणो चलणं त्ति लज्जेमि णं पसंसिदुं। केण पसाहणकलाए अहिविणोदासि? [हला! आत्मनश्चरणमिति लज्जे एनं प्रशंसितुम्। केन प्रसाधनकलायामभिविनीतासि?] (व)

---

गमिष्यामि, वस्तुत एव तत् सत्यं नवा तत्तु सर्वथा उन्नेष्यामि, अन्यथा तदनिश्चयेन मालविकायाम्निस्त्वादिति भावः। निरूप्य साभिनिवेशं निर्वर्ण्य, स्थाने युक्तरूपेण एव कातरं कातरतायुक्तं शङ्काबहुलमित्यर्थः। तथाहि मालविकेयमतिशयितलावण्या, यदि राज्ञा दृश्येत तदा नूनमस्मासु सौन्दर्य्यबोधं जह्यादेव, अतएव यथा मालविकाया दर्शनं राज्ञा न स्यात् तथा अस्माभिरभिसन्धीयते इति भावः। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

(ल) चरणम् अलक्तकरागेण रञ्जितं मालविकाया एव पादं, दर्शयन्ती, अपि: प्रश्ने। रागलेखाया अलक्तकरागस्य विन्यासः सन्निवेशः ते तुभ्यं रोचते रुचिं जनयति, तथाहि चरणनिहितः अलक्तकरागः कीदृशस्ते प्रतिभातीति भावः।

(व) आत्मनः स्वस्य चरणम् इति हेतोः एनं त्वया दर्श्यमानं पादं प्रशंसितुं श्लाघयितुं लज्जे, लज्जां लभे, स्वीयवस्तुनः प्रशंसया गर्वप्रकाश एव कृतः स्यात्, तच्च अन्याय्यमिति, तथाहि त्वया कृता रागलेखा सुतरामुत्कृष्टा जाता इति भावः। केन

---

इरा। সখি! আমার চরণদ্বয় আর অগ্রগমনে সমর্থ হইতেছে না। মদ আমাকে বিকৃত করিয়াছে। যাহা হউক, আশঙ্কার শেষ করিয়া যাইতে হইবে। (মালবিকাকে নিরূপিত করিয়া, আত্মগত) আমার হৃদয় যে কাতর হইয়াছে, ইহা সর্ব্বথা উপযুক্ত। (র)

বকুলা। (রঞ্জিত চরণ দর্শন করাইয়া) এই রাগরেখাবিন্যাস তোমার রুচিকর হইয়াছে ত? (ল)

बकुला। एत्थ क्खु भट्टिणो सिस्सह्मि । [अत्र खलु भर्त्तुः शिष्यास्मि ।] (श)

विदू। तुवरेहि दाणिं गुरुदक्खिणाए । [त्वरस्वेदानीं गुरुदक्षिणायै ।](ष)

माल। दिट्ठिआ ण गव्विदासि । [ दिष्ट्या न गर्व्विताऽसि । ] (स)

बकुला। उवदेसाणुरूवे चलणे लम्भिअ दाणिं गव्विदा भविस्सं । (रागं विलोक्यात्मगतम् ।) हन्त सिद्धो मे दप्पो । (प्रकाशम्)।

---

किम्बहिरिचार्येन शिक्षकेण, प्रसाधनकलायाम् अलङ्करणनैपुण्ये अभिविनीता शिक्षिता असि, तथाहि तस्य शिष्यायामेव ईदृशी प्रसाधननिपुणता न जाने स कीदृशो निपुण इति भावो व्यज्यते ।

(श) अत्र अस्यां प्रसाधनकलायां भर्त्तुः स्वामिनः अग्निमित्रस्य शिष्या अस्मि,राजा एव मे इमां कलाम् उपदिष्टवान् इति भावः ।

(ष) इदानीम् अधुना विद्यायाः प्रकर्षनिर्णये जाते सतीत्यर्थः । गुरुदक्षिणायै गुरवे देयां दक्षिणां निर्व्वर्त्तयितुम् इत्यर्थः । त्वरस्व त्वरिता भव । तथाहि इदानीं प्रयत्नेन राज्ञी मालविकासम्बन्धमुपपाद्य गुरुदक्षिणां निर्वर्त्तय इति भावः । केचित्तु राजानमुद्दिश्य विदूषकोक्तिरियमिति प्रतिपादयन्ति, तन्मते गुरुदक्षिणायै शिष्याजनसमीपात् गुरुदक्षिणां ग्रहीतुमित्यर्थः त्वरस्व, सत्वरमुपसर्प इत्यर्थः

(स) दिष्ट्या भाग्यवशात् स्वस्था एव इति शेषः । गर्व्विता अहङ्कारवती न असि, तथाहि तव महता अलङ्करणनैपुण्येन युज्यते अहङ्कारः तथापि यत् न अहङ्कारभावं न प्राप्ता, तत् तव भाग्यस्यैव फलमिति भावः ।

---

माल। निजेर चरण बलिया, ईहार प्रशंसा करिते लज्जाबोध हइतेछे। के तोमाके शिल्पसाधनकला बिषये एरूपे शिक्षा दिल ? (ब)

বকুলা। এ বিষয়ে আমি স্বামি-সন্নিধানে শিক্ষালাভ করিয়াছি। (শ)

বিদূ। এক্ষণে গুরুদক্ষিণা দিবার জন্য সত্বর হউন। (ষ)

মাল। সৌভাগ্যক্রমেই তুমি এজন্য গর্ব্বিতা হও নাই। (স)

सहि! एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो। केवलं मुहमारुदो लम्भइदव्वो। अहवा पवादं एव्व एदं ठाणं।

[ उपदेशानुरूपे चरणे लब्ध्वा इदानीं गर्विता भविष्यामि। हन्त सिद्धो मे दर्पः। सखि! एकस्य ते चरणस्यावसितो रागनिक्षेपः। केवलं मुखमारुतो लम्भयितव्यः। अथवा प्रवातमेवैतत् स्थानम्। ] (ह)

---

(ह) इदानीम् उपदेशस्य शिक्षायाः अनुरूपे योग्ये चरणे उत्कृष्टे तव पदे लब्ध्वा समालभ्यतया प्राप्य गर्व्विता अहङ्कारवती भविष्यामि, तथाहि गुरुणा मह्यं या विद्या प्रदत्ता अस्या अनुरूपौ सुतरां तवैव चरणौ तौ च भाग्यवत एव कस्यापि अलङ्करणीयतामध्यासाते, अतएव ममाद्य तल्लाभेन भाग्यवत्त्वसूचनात् गर्व्वावसर इति भावः। केचित्तु तवैव चरणौ लब्ध्वा गर्व्विता भविष्यामि इत्याहुः, तत न वयं प्रणयिनः इदानीमित्यस्य अनुपपत्तियोगात् तच्चरणलाभस्य असम्भवाच्च। रागम् अलक्तकरागं चरणस्य इत्यर्थः। विलोक्य विशेषेण दृष्ट्वा, हन्त हर्षे, मम दर्पः अलङ्करणशक्तिमाश्रित्य गर्व्वः सिद्धः सफलः। तथाहि अलक्तकविन्यासेन यथा अस्याश्चरणौ मनोरमौ जातः तथा विन्यासकारिणी अहं गर्व्वं कर्त्तुं क्षमा अस्मीति भावः। सिद्धं मे दूत्यमिति केचित् पठन्ति, तत्र दूत्यं दूतीकार्य्यं, सिद्धं सफलं जातम् अचिरमेव मम दूतीकर्म्म सफलतां यास्यतीत्यर्थः। अतीतनिर्द्देशः अनायाससिद्धिशंसी, तथाहि मयि यादृशोऽस्या विश्वासः लक्ष्यते तथा मन्ये अनया मत्कथिता विषया अवश्यं ग्रहीतव्या इति भावः। रागस्य रञ्जनवस्तुनः अलक्तकस्य निक्षेपः विन्यासः अवसितः समाप्तिं गतः, मुखमारुतः मुखवायुः लम्भयितव्यः प्रापयितव्यः, मुखप्रदत्तफुत्कारेण पादस्थिता रेणवः अपकार्य्या इति भावः। एतदेवावशिष्टं वर्त्तते अन्यत् सर्व्वमवसितमिति। अथवा इदं स्थानं प्रवातं प्रकृष्टवातयुक्तमेव, अतः तेन वातेनैव चरणवर्त्तिरेणुनिराकरणसम्भवात् अलं मुखमारुतलम्भनेन इति भावः। मुखमारुतलम्भनप्रक्रमः तरलालक्तकशोषणार्थम् इति परे।

---

বকুলা। উপদেশানুরূপ চরণ লাভ করিয়া, সম্প্রতি গর্ব্বিতা হইব। (চরণের অলক্তক রাগ অবলোকন করিয়া, আত্মগত) আহা! আমার গর্ব্ব

राजा। सखे! पश्य पश्य। (च)

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन वीजयितुम्।
प्रतिपन्नः प्रथमतरः सम्प्रति सेवावकाशो मे ॥१३॥

[ अन्वयः। संप्रति अस्याः आर्द्रालक्तकं चरणं मुखमारुतेन वीजयितुम् मे प्रथमतरः सेवावकाशः प्रतिपन्नः।१३। ]

---

(च) सखि वयस्य! पश्य पश्य, आग्रहातिशये द्विरुक्तिः। केचित् पश्येत्येकवारमेव पठन्ति। वक्ष्यमाणश्लोकार्थः कर्म्म।

१३। अथ मालविकायाश्चरणस्य आत्मना वीजनीयत्वमुद्भाव्य परमसुतकर्षं प्रतिपादयति—आर्द्रेत्यादिना। संप्रति अस्याश्चरणस्य अलक्तकरागे अवसिते सति इत्यर्थः। अस्याः मालविकायाः आर्द्रं तरलम् अलक्तकं लाक्षारसः यत्र तथाभूतं तरललाक्षारस-रञ्जितं चरणं पादम्, एकवचनमत्र विवक्षितमेव, एकस्यैव अवसितालक्तकरागत्वात्। मुखमारुतेन मुखप्रदत्तवायुना वीजयितुं शोषयितुं मे मम प्रथमतरः उभयोः प्रथमः वकुलावलिकापेक्षया आदौ योग्यः सेवायाः परिचर्य्यायाः अवकाशः अवसरः प्रतिपन्नः युक्तः, तथाहि मालविकाया अलक्तकरागरञ्जितस्य अस्य चरणस्य वकुलावलिकाया मुखमारुतेन वीजनापेक्षया पूर्व्वत एव मया वीजनं कर्त्तव्यम् आसीत्, तदकरणं मम अन्याय्यं जातमिति भावः। अत्र अनया भङ्ग्या आत्मनः मालविकापतित्वप्रत्यायनात् पर्य्यायोक्तमलङ्कारः। आर्य्या जातिः।

---

সফল হইয়াছে! (প্রকাশ্যে) সখি! তোমার এক চরণের অলক্তক-রাগবিন্যাস সমাপ্ত হইয়াছে। এখন কেবল অলক্তকের আর্দ্রভাব-দূরীকরণার্থ মুখমারুত প্রদান করিলেই হয়। অথবা, এস্থানে প্রবল বায়ু বহিতেছে। (হ)

রাজা। সখে! দেখ, দেখ! (ক্ষ)

ইহাঁর এই আর্দ্র অলক্তকযুক্ত চরণ মুখমারুত দ্বারা শোষণ করিলে, আমার প্রথমতর সেবাবকাশ প্রতিপন্ন হইবে ॥১৩॥

विदू। कुदो दे अणुसओ? चिरं भवदा एदं कम्मेण अणु-भविदव्वं। [कुतस्ते अनुशयः? चिरं भवता एतत्क्रमेण अनुभवितव्यम्।] (क)

बकुला। सहि! अरुणं सदपत्तं विअ सोहदि दे चलणं। सव्वहा भट्टिणो अङ्कपरिवट्टिणी होहि। [सखि! अरुणं शतपत्रमिव शोभते ते चरणम्। सर्वथा भर्त्तुरङ्कपरिवर्त्तिनी भव।] (ख)

(इरावती निपुणिकामवेक्षते।) (ग)

---

(क) कुतः कस्मात् हेतोः ते तव अनुशयः अनुतापः, अस्याश्चरणवीजनस्य आत्मना कर्त्तुमशक्यत्वात् कथं परितापं व्रजसि इति भावः। यतः चिरं बहुकालं व्याप्य एतत् अस्याश्चरणसेवाकर्म्म अनुभवितव्यं कर्त्तुं शक्यं त्वया इति शेषः। तथाहि इयं यदा तव भार्य्या भविष्यति, तदा यथेष्टम् एतत् करिष्यसीति भावः।

(ख) अरुणं रक्तवर्णं शतपत्रं शतदलं पद्ममिव ते तव चरणम् अलक्तकरागरञ्जितं पदं शोभते कान्तिमत् प्रतिभाति, सर्वथा सर्व्वेण प्रकारेण हेतुना रूपेण गुणेन च इत्यर्थः। भर्त्तुः स्वामिनः अग्निमित्रस्य अङ्कपरिवर्त्तिनी क्रोड़शायिनी भव, तथाहि तव चरणं यथा रमणीयं प्रतिभाति तथा त्वं राजपरिग्रहत्वमेवार्हसि, अतः त्वं यदि राजपरिग्रहः स्यास्तदेव युक्तं स्यात् इति भावो व्यज्यते। "पद्मे न भूपतेः पत्नी जनयेत् भूपतिं सुतम्" इति नियमेन तत्प्राप्तः।

(ग) निपुणिकां स्वीयां सहचारिणीं तदाख्याम्। अवेक्षते मालविकां प्रति बकुलावलिकया प्रयुक्तस्य वाक्यस्य गूढ़ार्थमनुसन्दधाना तज्ज्ञापनाय नयनसङ्केतेन निपुणिकां प्रति अभिवर्त्तते इति भावः।

---

বিদূ। আপনার অনুতাপে প্রয়োজন কি? আপনাকে চিরকালই এই চরণ-সেবা-কার্য্য করিতে হইবে। (ক)

বকুলা। সখি! তোমার চরণ, অরুণবর্ণ শতদল পদ্মের ন্যায় শোভা পাইতেছে। সর্ব্বথা ভর্ত্তার ক্রোড়শায়িনী হও। (খ)

[ নিপুণিকার প্রতি ইরাবতীর দৃষ্টিনিক্ষেপ। ] (গ)

राजा । ममेयमाशीः । (घ)

माल । हला ! मा अविणोअं मन्तेहि । [ हला ! मा अविनीतं मन्त्रयस्व । ] (ङ)

बकुला । मन्तिदव्वं एव्व मए मन्तिदं । [ मन्त्रयितव्यमेव मया मन्त्रितम् । ] (च)

माल । पिआ क्खु अहं तव । [ प्रिया खल्वहं तव । ] (छ)

बकुला । ण केवलं मम । [ न केवलं मम । ] (ज)

---

(घ) इयं बकुलावलिकया उक्तवाक्यरूपा मम मत्सम्बन्धे आशीः, आशीर्वादः, तथाहि यथा आशीर्वादः इष्टफलाशंसने अभ्यर्थनीयः तथा एतद्वाक्यमपि ।

(ङ) अविनीतं विनयवर्ज्जितं यथा तथा, मा मन्त्रयस्व न कथय, तथाहि अहं दासी दासीवदेव वर्त्तेय, मम तु राजयोग्यत्वकथनं विनयातिक्रम एव, राज्ञीवद्व्यवहार-प्रत्ययात, अतो विनयवर्ज्जितव्यवहारस्य अनिष्टफलकत्वसम्भवात् ततो विनिवृत्तिरुचि-तेति भावः ।

(च) मया मन्त्रयितव्यं कथयितव्यमेव वस्तु मन्त्रितम् उक्तम्, तथाहि मया यदुच्यते तन्न अन्याय्यम् सर्वथा राजयोग्यासि, अतएव मया तथा कथितमिति भावः ।

(छ) अहं तव प्रिया प्रणयपात्रम्, अतएव त्वं मयि एवमुत्कर्षं जानासि वस्तुतो नाहं तथा इति आत्मापहारो मालविकायाः । एतेन मम राजपरिग्रहत्वमैकान्ततः असम्भवमेव इति विभाव्य सुतरां दीनभावो व्यज्यते ।

(ज) केवलं न मम प्रिया, अपि तु अन्यस्यापि प्रिया असीति भावः ।

---

রাজা। আমার পক্ষে ইহা আশীর্ব্বাদ। (ঘ)

মাল। অয়ি ! বিনয়পরিহারপূর্ব্বক কথা বলিও না। (ঙ)

বকুলা। যাহা বলিবার, তাহাই বলিয়াছি। (চ)

মাল। আমি নিশ্চয়ই তোমার প্রিয়া। (ছ)

বকুলা। কেবল আমার নহে। (জ)

माल। कस्स वा अस्सस्स ? [ कस्य वा अन्यस्य ? ] (झ)

वकुला। गुणेसु अहिणिवेसिणो भत्तुणो वि। [ गुणेष्वभिनिवेशिनो भर्त्तुरपि ] (ञ)

माल। अलिअं मन्तेसि। एदं एव्व मइ णत्थि। [ अलीकं मन्त्रयसे। एतदेव मयि नास्ति ] (ट)

वकुला। सच्चं तुइ णत्थि ? भत्तुणो किसेसु वरपण्डुरेसु दीसइ अङ्गेसु। [ सत्यं त्वयि नास्ति ? भर्त्तुः कृशेषु वरपाण्डुरेषु दृश्यते अङ्गेषु ] (ठ)

---

(झ) अन्यस्य त्वत्तः इतरस्य कस्य वा जनस्य प्रिया असि अहमिति शेषः।

(ञ) गुणेषु रूपादिविषयेषु अभिनिवेशिनः अभिनिवेशवतः गुणज्ञस्य इति यावत्। भर्त्तुः स्वामिनः अग्निमित्रस्य प्रिया असीति शेषः। तथाहि भर्त्तापि तव गुणातिशय-मवेक्षमाणस्त्वयि परामासक्तिमुपगतवान् इति भावः।

(ट) अलीकं मिथ्या मन्त्रयसे कथयसि, मम गुणेन यत् राजा वशीभूत इत्येतत् कथमपि न सत्यं भवितुमर्हतीति भावः। एतत गुणवत्त्वम् एव मयि नास्ति, तत् कथमिव कारणाभावेन राजानुरागरूपकार्य्यस्य उत्पादः सम्भवेदिति भावः।

(ठ) सत्यं यथार्थं त्वयि नास्ति न वर्त्तते गुणवत्त्वमिति शेषः। अत्र विपरीत-लक्षणया "उपकृतं बहु तव किमुच्यते"इत्यादिवत् गुणोऽस्तीति बोध्यते, त्वयि अवश्यं गुणाः सन्तीति भावः। ननु कथं काक्वा मम गुणवत्त्वं जानामि इत्याकाङ्क्षाया-माह—भर्त्तुरित्यादि। भर्त्तुः स्वामिनः कृशेषु विरहवेदनया कार्श्यं गतेषु वरपाण्डुरेषु अत्यन्तपाण्डुवर्णेषु अङ्गेषु शरीरेषु दृश्यते उपलभ्यते तद्गुणवत्त्वमिति शेषः। तथाहि राज्ञः कृशत्वं पाण्डुरत्वञ्च त्वद्गुणहेतुकमेव अतो राज्ञः शरीरे तद्दर्शनात् तव गुणवत्त्व-रूपो हेतुरनुमीयते इति कार्य्यदर्शनेन कारणानुमानस्य सिद्धत्वादिति भावः।

---

মাল। অন্য আর কাহারই বা ? (ঝ)

বকুলা। গুণগ্রাহী ভর্ত্তারও। (ঞ)

মাল। তুমি অলীক মন্ত্রণা করিতেছ, তাদৃশ গুণ আমাতে নাই। (ট)

निपु। पढ़मं गणिदं विअ हदासाए उत्तरं। [प्रथमं गणितमिव हताशाया उत्तरम्। ] (ड)

बकुला। अणुराओ अणुराएण पच्छिदव्वोत्ति सुअणवअणं पमाणं करेहि। [अनुरागोऽनुरागेण प्रत्येष्टव्य इति सुजनवचनं प्रमाणं कुरु] (ढ)

---

(ड) हताशाया: प्रतिहतप्रायवासनाया: वकुलावलिकाया इत्यर्थ:। विशेषणमिदं प्रकृतस्य निष्फलताभिप्रायकम्। उत्तरं प्रत्युत्तरवाक्यम् "भर्त्तु: कृशेषु"इत्यादि वचनमित्यर्थ:। प्रथमं फलोत्पत्ते: पूर्वं गणितम् कृतगणनमिव, तथाहि यथा ज्यौतिषिकाणां गणनान्तरमकृत्वा प्रथमत एव कृता गणना फलेन समञ्जसतामापद्यते तथैव वकुलावलिकाया एतद्वचनं राज्ञो विरहकार्श्यादिरूपफलसमन्वयेन इति भाव:। प्रथममिति गणनान्तरानन्तरं कृताया गणनाया: कदाचित् पूर्वगणनावशात् विकृतमतिष्कतया वैफल्यमपि वा स्यात् इति गणनाया: फलनिर्णयसामर्थ्यप्रतिपत्तये। सविस्मयं साकांक्षञ्च वचनं निपुणिकाया: अनभिमतविषयस्य वकुलावलिकया आचरणात्, मालविकाया दास्या अपि राजयोग्यत्वलाभाच्च इति।

(ढ) अनुरागेण आत्मन: प्रणयेन स्वहृदयजातेन स्नेहेन प्रियं प्रतीति शेष:। अनुराग: प्रियस्य आत्मानं प्रति प्रणय इत्यर्थ:। प्रत्येष्टव्य: परिज्ञातव्य:, तथाहि यो यं प्रति यथा प्रणयवान् स तं प्रति अवश्यमेव तथा प्रणयवान् इति सामान्यव्याप्त्या परस्यापि प्रणय आत्मनि उन्नेतुं शक्यते, इति उक्तरूपं सुजनवचनं साधुजनानामुक्तं प्रमाणं प्रमाजनकं कुरु, तथाहि तद्वाक्यं प्रमाणतया स्वीकृत्य तव हृदयगतेन अनुरागेण राज्ञस्त्वयि

---

বকুলা। সত্যই তোমাতে নাই ? ভর্ত্তার সুন্দর পাণ্ডুরবর্ণ কৃশ অঙ্গেই উহা লক্ষিত হইয়া থাকে। (ঠ)

নিপু। জ্যোতিঃশাস্ত্রের প্রথম গণনার ন্যায় হতাশার পক্ষে এই উত্তর। (ড)

माल। किं अत्तणो छन्देण मन्तेसि? [किमात्मनश्छन्देन मन्त्रयसे?] (ण)

बकुला। णहि णहि। भत्तुणो क्खु एदाणि पणअमिदुआणि अक्खराणि वत्तन्तरिदाणि। [नहि नहि। भर्तुः खल्वेतानि प्रणयमृदुकानि अक्षराणि वक्त्रान्तरितानि] (त)

माल। हला! देवीं चिन्तिअ ण मे हिअअं विस्ससदि। [हला! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति] (थ)

---

अनुरागातिरेकं निर्द्धारय इति भावः। एतेन राज्ञि तव प्रणयी जात इति व्यज्यते। प्रत्येष्टव्य इत्यत्र परीक्षितव्य इत्यपि केचित् पठन्ति।

(ण) आत्मनः स्वस्य छन्देन अभिप्रायेण किं मन्त्रयसे कथयसि? तथाहि नाहं राज्ञि प्रणयवती नवा राजा मयि अनुरक्तः केवलं त्वं कल्पनामात्रसहाया एव एवं ब्रवीषि, तदलीकमेवैतदिति भावः। एवञ्च कुमारीजनसुलभलज्जाहेतुकं वचनम् तेषां प्रणयोद्भेदस्य सोढ़ुमक्षमत्वादिति।

(त) नहि नहि, नाहं आत्मनश्छन्देन केवलं मन्त्रयामीत्यर्थः। भर्त्तुः स्वामिनः अग्निमित्रस्य एतानि उक्तरूपाणि प्रणयमृदुकानि स्नेहेन कोमलानि अक्षराणि वर्णाः वक्त्रान्तरितानि मुखमावेश्य परिवर्त्तितानि, नतु वर्णतोऽपि, तथाहि राजा विदूषकमुखेन मम एतत् निवेदितवान् यथा सः त्वयि सुतरां प्रणयी जात इति, अतः कथमिदमसम्भवं मन्यसे इति भावः। एतानीत्यनेन मालविकायाः कर्णे कथनीयानि वचांसि प्रत्येतव्यानि इति निपुणाः।

---

বকুলা। অনুরাগ অনুরাগের দ্বারা বুঝিয়া লইবে, সাধুজনের এই উপদেশ মানিয়া লও। (ঢ)

মাল। তুমি কি আপনার ইচ্ছামত মন্ত্রণা করিতেছ? (ণ)

বকুলা। না, না। এ সকল ভর্ত্তারই, তিনিই গৌতমমুখে এই স্নেহ-কোমল কথা প্রেরণ করিয়াছেন। (ত)

वकुला। मुद्धे ! भमरसंपादो भविस्सदि त्ति वसन्तावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो ?। [ मुग्धे ! भमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवः अवतंसितव्यः ? ] (द)

माल। तुमं दाव दुज्जादे अच्चन्तं सहाआ होहि। [ त्वं तावत् दुर्जाते अत्यन्तं सहाया भव। ] (ध)

---

(थ) देवीं महिषीं धारिणीं चिन्तयित्वा विभाव्य मे मम हृदयं चित्तं न विश्वसिति, राजप्रणये विश्वासं गच्छति। तथाहि अधिकारवती गुणगुम्फिता च धारिणी महिषी, तदुपरोधं परित्यज्य कथमिव राजा मयि आसक्तो भवितुं पारयतु तस्याः सर्व्वदैव राज्ञा सह मम समागमे प्रतिबन्धकत्वात् इति भावः। अथवा देवीकोपाशङ्कया नाहं निःसंशयं राजनि प्रणयमास्थापयितुं सहसा प्रवृत्ता भवामि, किन्तु काङ्क्षणीय एव राजप्रणयः सर्व्वस्य मादृशस्य इति भावो गम्यः।

(द) मुग्धे ! विवेकशून्ये, भमरसम्पातः मधुकरसम्पर्कः, भविष्यति इति कृत्वा वसन्तावतारसर्व्वस्वं, वसन्तोदयसर्व्वस्वभूतं वस्तु चूतप्रसवः चूताङ्कुरः किं न अवतंसयितव्यः कर्णभूषणरूपेण अवलम्बितव्यः, अपि तु अवतंसयितव्य एव। न भमराक्रमणवशात् ततो विरतिः कर्त्तव्या इति भावः। तथाहि देवीभयेन राजप्रणयरूपात् काम्यवस्तुनः कथमपि त्वया न निवर्त्तितव्यम् इति प्रकृततात्पर्य्यम्। अत्र अप्रस्तुतात् समात् प्रस्तुतस्य समस्य गम्यतया अप्रस्तुतप्रशंसालङ्कारः। भमरसम्पात इत्यत्र भमरसम्बाध इति पाठे भमरदंशनरूपविघ्न इत्यर्थः। सर्व्वस्वमित्यत्र सम्भूत इति पाठे वसन्तकालजात इत्यर्थः। चूतेत्यत्र नवचूतेति पाठः स्पष्टार्थः।

(ध) दुर्ज्जाते विषमे भावे वर्त्तमाने अत्यन्तम् अतिमात्रं सहाया साहाय्यकारिणी भव

---

মাল। সখি! দেবীকে মনে করিয়া, আমার হৃদয় ইহা বিশ্বাস করিতেছে না। (থ)

বকুলা। মুগ্ধে! মধুকর আক্রমণ করিবে বলিয়া কি তুমি বসন্তসময়সর্ব্বস্ব চূতকুসুমে কর্ণ ভূষিত করিবে না? (দ)

बकुला। विमद्दसुरहो बउलावलिआ क्खु अहं। [विमर्द्दसुरभि-र्बकुलावलिका खल्वहम्] (न)

राजा। साधु, वकुलावलिके! साधु।

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनां दूत्यधीनाः॥ १४॥

[अन्वयः। (त्वया) भावज्ञानानन्तरं प्रस्तुतेन प्रत्याख्याने दत्तयुक्तोत्तरेण वाक्येन इयं स्वे निदेशे स्थापिता। कामिनां प्राणाः दूत्यधीनाः (इति) स्थाने। १४। ]

---

अन्यथा मम कथमपि अभीष्टलाभासम्भवादिति विषमदशासन्निपातेन कर्त्तव्यावधारण-विकला अस्मीति कर्त्तव्यं मे उपदिश इति भावो व्यज्यते। दुर्ज्ञाते अत्यन्तमिवव दुर्य्याते गच्छति इति पाठ दुःखेन गम्ये प्रदेशे गच्छतो मल्लचणस्य जनस्य इत्यर्थः कर्त्तव्यः। तथाहि त्वत्साहाय्यं विना नाहमस्मिन् मार्गे किमपि फलं लप्स्यामि इति भावः। "दुर्ज्ञातं व्यसने क्लीवमसम्यग् ज्ञातवस्तुनि" इति केशवः।

(न) विमर्द्दे विपत्प्राप्तौ अपि सुरभिः धीरा, वकुलावलिका तदाख्यया प्रसिद्धा खलु अहं, निजनाम्ना स्वस्य विशेषणं सातिशयाहङ्कारसूचकम्। पक्षे विमर्द्देन मर्द्दनेन सुरभिः अधिकसौरभशालिनी वकुलावलिका वकुलकुसुममाला। तथाहि यथा स्वभाव-सुरभिरपि वकुलमाला विमर्द्दनादधिकतरं सौरभमवलम्बते तथैव अहं स्वस्थावस्था-पेक्षया विपदुपगमे बुद्धिनैचिव्यमधिगच्छामि, अतएव त्वमिदानीं तव विपदुपगमे निश्चिन्ता सती ममैव परिचालनानुसारेण मार्गमाश्रय, तथैव कार्य्यसाफल्यं ते अवश्यं भविष्यतीति भावः।

---

माল। তুমি তবে এই দুষ্কর কার্য্যে প্রবৃত্ত ব্যক্তির সহায়তা কর। (ধ)

বকুলা। আমি বিপৎপাতেও ধৈর্য্যশীলা বকুলাবলিকা। (ন)

রাজা। সাধু, বকুলাবলিকে সাধু!

१४। अथ गद्योक्तस्य वकुलावलिकोक्तौ साधुत्वस्य समर्थनार्थं वचनमुपन्यस्यति— भावेत्यादि। भावस्य मालविकाया मनोगतस्य विकारस्य "निर्व्विकारात्मके चित्ते भाव: प्रथमविक्रिया" इति निर्द्देशात्। भावस्य मयि अनुरागस्य वा ज्ञानं बोध: तदनन्तरं तत्परं मालविकाया मनोभावं ज्ञात्वा इत्यर्थ:। अन्यथा मालविकाया: प्रकृतविषये असम्मतौ सा धारिणीं विज्ञाप्य विशेषेण वकुलावलिकाया मम च अनिष्टमुत्पादयेत् इति भाव:। प्रस्तुतेन अवतारितेन, प्रत्याख्याने वकुलावलिकाप्रस्तावितस्य राजानुरागस्य "मा अविनीतं मन्त्रयस्व" इत्यनेन अपवाहने, दत्तं युक्तम् उचिम् उत्तरं येन तथाभूतेन, यथास्थानं प्रयोक्तव्येन प्रयुक्तेन वाक्येन "मन्त्रयितव्यमेव मया मन्त्रितं" इत्यादिरूपेण वचनेन इयं मालविका स्वे निर्द्दिष्टे स्वीयवशीभावे स्थापिता, वाक्यचातुर्य्येण आदेश- वशीभूता कृता, "त्वं तावत् दुर्ज्जाते" इत्यादिना तत्प्रतीते:। तथाहि एवं वाक्यनैपुण्यं वकुलावलिका प्रस्तुतवती यथा आपाततो न तस्यां दोषलेशोऽपि संसजति अथच आत्मना अनुष्ठेयस्य हानि: न स्यादिति महती खलु बुद्धिप्रशस्तिरस्या इति भाव:। कामिनां कामातुराणां जनानां प्राणा: जीवनं दूतीनाम् अधीना: वशीभूता: इति स्थाने युक्तमेव, तथाहि दूत्यो यदि निपुणतया आत्मकर्म्म सम्पादयितुमर्हन्ति तदैव अभिमतफल- लाभात् कामिनो जीवन्ति, यदि न तथा पारयन्ति तदा कामिनां जीवनस्य आशापि सुदूरपराहता भवतीति कामिजीवनस्य दूत्यधीनत्वमिति भाव:। प्रकृतार्थस्तु मम प्राणा वकुलावलिकाया एव अधीना इति। अत्र अप्रस्तुतात् साधारणकामिप्राणानां साधारण- दूत्यधीनत्वरूपात् वस्तुन: सामान्यात् राजप्राणानां वकुलावलिकाधीनत्वरूपस्य विशेषस्य प्रस्तुतस्य गम्यत्वात् अप्रस्तुतप्रशंसालङ्कार:। चतुर्थपादप्रतिपाद्यमर्थं प्रति पूर्व्वपादत्रयार्थस्य हेतुत्वप्रत्ययात् काव्यलिङ्गं वाक्यार्थहेतुकम् अनयोश्च अङ्गाङ्गिभावात् सङ्कर:, युष्मदर्थ: सम्बुध्यमानपदार्थादनतिरिक्त इति गद्योक्तसम्बोधनपदादेव त्वयेति कर्त्तृपदलाभात् स्थापिता इत्यस्य कर्त्तृपदस्य विशेषेण अनुल्लेखेऽपि न न्यूनपदतादोष:। कामिनामित्यत्र कामिन इत्येकवचनमपि पठन्ति तदपेक्षया कामिनामित्यनेनैवाप्रस्तुतप्रशंसावैचित्र्यं समञ्जसम्। शालिनी वृत्तम्।

---

আমার প্রতি মালবিকার অনুরাগ প্রকাশ ও প্রত্যাখ্যান করিলেও

इरा। हञ्जे! पेक्ख, कारिदं एव्व बउलावलिआए एदस्सिं पदं मालविआए। [हञ्जे! प्रेचस्व, कारितमेव वकुलावलिकया एतस्मिन् पदं मालविकायाः। ] (प)

निपु। भट्टिणि! अहिआरस्स उइदो उवदेसो। [भट्टिनि! अधिकारस्य उचित उपदेशः।] (फ)

इरा। ठाणे क्खु सङ्किदं मे हिअअं। गिहीदत्था अणान्तरं चिन्तइस्सं। [स्थाने खलु शङ्कितं मे हृदयम्ः गृहीतार्था अनन्तरं चिन्तयिष्यामि। ] (ब)

---

(प) वकुलावलिकया एतस्मिन् राजरूपे जने मालविकायाः पदं व्यवसितं कारितं सम्पादितम् एव। एतस्मिन् स्वीयादिष्टविषयपालने वा, तथाहि वकुलावलिका राज्ञि मालविकामुन्मुखीं कर्त्तुं चेष्टते मालविकापि अस्या वचनात् तथाभूतेव जाता इति पश्यामीति भावः। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः।

(फ) अधिकारस्य आत्मनि राजादेशस्य दौत्यकारिणो जनस्य अवश्यकर्त्तव्यविषयस्य इत्यर्थः। उचितः सुयोग्यः उपदेशः मालविकायाः राजनि उन्मुखतासम्पादनव्यवसायिनी वाक्यपरम्परा, तथाहि इयमसौ न स्वत एव मालविकामुपदिश्य राजनि सानुरागां करोति परं राजा एव एनामिथंकर्म्मणि प्रारोचयत् तदुपदिष्टमेवेयं करोति अतो न वकुलावलिका अत्र लेशतोऽपि अपराध्यति इति भावः।

(ब) स्थाने युक्तमेव मे मम हृदयं शङ्कितं शङ्कायुक्तं जातं, शङ्काशब्दात् तारकादि-

---

উপযুক্ত উত্তর দান করিয়া, উহার মনোভাব বুঝিয়া পরে স্বকীয় বশীভূতা করিয়াছ। কামিজনের প্রাণ যে দূতীর অধীন, তাহা সর্ব্বথা যুক্তিযুক্ত ॥১৪॥

ইরা। সখি! অবলোকন কর, এই বকুলাবলিকা মালবিকাকে স্বনিয়োগপ্রতিপালনে সমুদ্যত করিয়াছে। (প)

নিপু। ভট্টিনি! বকুলাবলিকা মহারাজের উপদেশানুসারেই ঐরূপ করিতেছে। (ফ)

वकुला। एसो दुदोओवि दे णिव्वुत्तपरिकम्मा चलणो। जाव णं वि सणेउरं करेमि। (नाट्येन नूपुरयुगलमामुच्य।) हला! उट्ठेहि, असोअविआसइत्तिअं देवीए णिओअं अणुचिट्ठ। [एष द्वितीयोऽपि ते निर्वृत्तपरिकर्म्मा चरणः। यावदेनमपि सनूपुरं करोमि। हला! उत्तिष्ठ, अशोकविकासयितृकं देव्या नियोगम् अनुतिष्ठ।] (भ)

---

त्वादितत्। इतः पूर्व्वमेव मया आशङ्कितं यत् राज्ञो मालविकायाम् अनुरागः सञ्जात इति, सैव शङ्का इदानीं सत्यभूतेति मन्यते, यतः राजा एनां वकुलावलिकां मालविकाया आत्मनि चित्तसंक्रमणार्थं प्रावर्त्तयत् इति भावः। ननु एवं यदि निश्चयमधिगच्छति तदा तत्प्रतीकाराय कथं भवती न चेष्टते इत्याकाङ्क्षायामाह—गृहीतार्थेत्यादि। गृहीतार्था अवगततत्त्वा, अस्य यथायथं विषयमवगत्य इत्यर्थः अनन्तरं तत्परकर्त्तव्यं वस्तु एतत्प्रतीकारमित्यर्थः। चिन्तयिष्यामि अनुशीलयिष्यामि, तथाहि विषयस्य प्रतीकारयोग्यस्य अशविशेषमभिगत्य तत्प्रतीकारचिन्ता न कर्त्तव्या तद्दयनस्य अशत एव साफल्यात् विषयस्य साफल्येन निश्चयाभावतः अज्ञातस्यांशस्य प्रतीकारासम्भवेन सर्वप्रतीकाराभावात्, अतएव आदौ सर्व्वं यथायथं जानामि, ततोऽस्य प्रतीकारचेष्टां करिष्यामि इति भावः।

(भ) एषः दृश्यमानः द्वितीयः पूर्व्वं रञ्जितचरणापेक्षया अपरः अपि, ते चरणः निर्वृत्तं सुसम्पन्नं परिकर्म्म संस्कारक्रिया अलक्तकरञ्जनादिरूपम् कर्म्म यस्य तथाभूतः, तथाहि तव अपरमपि मया अलक्तेन रञ्जितमिति भावः। एनं द्वितीयमपि चरणं सनूपुरं नूपुरालङ्कृतं करोमि। नाट्येन अभिनयविशेषेण, यथा नूपुरं परिधापयति तथा इत्यर्थः। नूपुरयुगलं नूपुरद्वयम्, आमुच्य परिधाप्य, अशोकस्य अशोकवृक्षस्य विकासयितृकं पुष्पितभावसम्पादकं देव्याः धारिण्याः नियोगम् आदिष्टं कर्म्म अशोकगात्रे

---

ইরা। আমার হৃদয় যে শঙ্কিত হইয়াছিল, তাহা সর্ব্বথা উচিত। সমস্ত ব্যাপার বুঝিয়া কর্ত্তব্য চিন্তা করিতে হইবে। (ব)

[ उभे उत्तिष्ठतः। ] (म)

इरा। सुदो देवीए णिओओ। भोदु दाणिं। [ श्रुतो देव्या नियोगः। भवत्विदानीम् ] (य)

वकुला। एसो उवारूढ़राओ उवभोअक्खमो पुरदो दे वट्टदि !
[ एष उपारूढ़राग उपभोगक्षमः पुरतस्ते वर्त्तते ! ] (र)

---

पदाघातरूपम् अनुतिष्ठ विधेहि। "परिकर्म्माङ्गसंस्कारः" "आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्" इति चामरः।

(म) उभे वकुलावलिका मालविका च उत्तिष्ठतः उत्थानं कुरुतः, अशोकवृक्ष-स्यातिसन्निधौ गन्तुमित्यर्थः।

(य) देव्याः धारिण्याः नियोगः आदेशः श्रुतः, दोलापरिभ्रष्टाया देव्याः स्वयम् अशोकदोहदसम्पादनाशक्तत्वात् मालविका तव तया नियुक्ता भवेदिति त्वदुक्तमेव यथार्थमिति भावः। भवतु इदानीम्, इतःपरं भवितव्यं द्रष्टव्यमिति शेषः।

(र) उपारूढ़ः सञ्जातः रागः रक्तिमा पल्लवराग इत्यर्थः, यत्र तथाभूतः, अथच उपारूढ़ः रागः अनुरागः यत्र तथाभूतः उपभोगक्षमः उपभोगयोग्यः एकत्र उपभोगः कर्णभूषणतया शिरोभूषणतया च व्यवहारः, अन्यत्र सुरतसम्भोगः। ते तव पुरतः समीपभागे वर्त्तते, अत्र राजरूपप्रधानार्थान्तरापेक्षिणः काव्ययोजितस्य श्लिष्टस्य द्व्यर्थवचन-विन्यासस्य कृतत्वात् पताकास्थानकम्। तल्लक्षणं दर्पणे "द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः। प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्"। इति।

---

বকুলা। এই তোমার দ্বিতীয় পদেরও অলক্তকরঞ্জনাদি প্রসাধনক্রিয়া সম্পন্ন হইল। এক্ষণে উভয় চরণে নূপুর পরিধান করাই। ( নাট্যে নূপুরদ্বয় পরিধান করাইয়া। ) সখি! উত্থান করিয়া, দেবীর অশোকবিকাসের কার্য্য সম্পাদন কর। (ভ)

[ উভয়ের উত্থান। ] (ম)

ইরা। দেবীর আদেশ শ্রবণ করিলে। আচ্ছা, দেখি,—পরে কি হয়। (য)

মাল। [ সহর্ষম্। ] কিং ভট্টা ?। [ কিং ভর্ত্তা ? ] (ল)

বকুলা। (সস্মিতম্)। ণ দাব ভট্টা। অসোঅসাহাবলম্বী পল্লব গুচ্ছও ওদংসেহি দাব ণং। [ ন তাবদ্ভর্ত্তা। অশোকশাখাবলম্বী পল্লবগুচ্ছকঃ, অবতংসয় তাবদেনম্ ] (ব)

[ মালবিকা বিষাদং নাটয়তি। ] (শ)

বিদূ। কিং সুদং ভবদা ?। [ কিং শ্রুতং ভবতা ? ] (ষ)

---

(ল) মালবিকা রাজনি সুতরামাসক্তা শ্লেষগম্যমর্থান্তরমেব মনসি কৃত্বা প্রাহ—কিমিত্যাদি। কিং ভর্ত্তা উপারূঢ়রাগঃ উপভোগক্ষমশ্চ মে পুরতো বর্ত্ততে ইতি প্রশ্নার্থঃ। অনেন সুতরাং মালবিকায়াস্তদ্গতভাবো ব্যক্তঃ।

(ব) সস্মিতম্, অহো রাগমহিমা, যদন্যস্মিন্নপি প্রস্তুতে রাজানমেব প্রতিপদ্যতে মালবিকা ইতি স্মিততাৎপর্য্যম্। ন তাবৎ ভর্ত্তা স্বামী পুরতো বর্ত্ততে ইতি শেষঃ। তত কো নাম ইত্যাহ—অশোকেত্যাদি। অশোকশাখাবলম্বী অশোকশাখাস্থিতঃ পল্লবগুচ্ছকঃ কিসলয়স্তবকঃ, তে পুরতো বর্ত্ততে ইতি শেষঃ। এনং পল্লবগুচ্ছকম্ অবতংসয় কর্ণভূষণং শিরোভূষণং বা কুরু ইত্যর্থঃ। এতদেবাহং ব্রবীমি ইতি ভাবঃ।

(শ) মালবিকা বিষাদম্ তদ্ভূতায়া রাজবিষয়িণ্যা আশায়াঃ সহসা "ন ভর্ত্তা" ইত্যনেন ছেদনাৎ বিষাদোদ্গমঃ। নাটয়তি অভিনয়তি, স চাভিনয়ো বিষাদসূচকমুখমালিন্যাদিপ্রদর্শনমেব।

---

বকুলা। এই রাগপ্রাপ্ত উপভোগসমর্থ ( অশোক ) তোমার সম্মুখে অবস্থিতি করিতেছে। (র)

মাল। ( সহর্ষে ) কি, স্বামী ? (ল)

বকুলা। ( সস্মিতভাবে ) ভর্ত্তা নহেন। অশোকশাখাবলম্বী পল্লবগুচ্ছ। ইহাকে কর্ণভূষণ কর। (ব)

( মালবিকার বিষাদাভিনয়। ) (শ)

राजा। सखि ! पर्य्याप्तमेतावता कामिनाम् । (स)
अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः ॥ १५ ॥

[ अन्वयः । अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि मां प्रति न रतिः (भवति) समानुरागयोः परस्परप्राप्तिनिराशयोः शरीरनाशोऽपि वरम् (भवति) । १५ ]

---

(ष) भवता किं श्रुतम् आकर्णितम् ? भवत्येवास्या अनुरागातिशयात् अन्यस्मिन् वस्तुनि प्रस्तुतेऽपि त्वामेव मन्यमाना यथा इयं सहर्षा "किं भर्त्ता" इति ब्रुवाणा आसीत् त्वदभावश्रवणेन च विषण्णा जाता, तथा मन्ये निश्चित एव त्वयि अस्याः रागातिरेक इति भावो व्यज्यते । अनेन वचनेन विदूषकस्य स्वकल्पितविषययाथार्थ्यप्रतिपत्तिजन्यो हर्षो व्यक्तः ।

(स) सखि, समप्राणवन्धो ! "समप्राणः सखा मत" इति परिभाषातः प्रकृते हृदयस्थितस्य वस्तुनः प्रकाशे सम्बोधनमिदमुपयुक्तार्थकम् । एतावता अभिलषितजनस्य ईदृशोत्कण्ठामात्रेण कामिनां कामवतां पर्य्याप्तं यथेष्टम्, नतु इतोऽधिकमपि कामिनः कामयन्ते इति भावः । "कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सित"मित्यमरः ।

१५ । अथ तस्यावस्थैव यथेष्टत्वे हेतुमुपन्यस्यति—अनातुरेत्यादिना । अनातुरः प्रियजनमिलनोत्कण्ठाशून्यः, विरहकातरतारहित इति यावत् । उत्कण्ठितः विरहजनितकातर्य्ययुक्तः, उत्कण्ठाशब्दात् अस्त्यर्थे इतच्प्रत्ययः । तयोः कातराकातरयोः इत्यर्थः । ईदृशयोः प्रियजनयोः प्रसिध्यता जायमानेन फलता इत्यर्थः । समागमेन सम्मेलनेनापि मां प्रति न रतिः सन्तोषः प्रतिभातीति शेषः । तथाहि उभयोः प्रिययोर्म्मध्ये एकः अनुरक्तः अपरश्च न तथा अनुरक्तः इति यदि तदा तयोः मेलनमपि

---

বিদূ। আপনি কি শুনিলেন ? (ষ)

রাজা। সখে ! ইহাই কামিগণের পক্ষে যথেষ্ট। (স)

[ मालविका। रचितपल्लवावतंसा सलीलमशोकाय पादं प्रहिणोति। ] (ह)

---

नाधिकं सुखं निर्व्वर्त्तयति, परम् असुखमेव, अन्यत्र स्थितस्य अनुरक्तस्य प्रियजनस्य आत्मनि रागकल्पनया सुखसम्भावनाया अपि मेलने व्याघातादिति भावः। किन्तु समानुरागयोः परस्परं प्रति तुल्यभावेनैव अनुरक्तयोः प्रियजनयोः परस्परम् अन्योन्यं प्राप्तिः सम्मेलनं तस्यां निः न विद्यते आशापि ययोः तयोः, परस्परमेलनसम्भावना-वर्ज्जितयोः सतोः शरीरनाशः देहध्वंसः मरणमित्यर्थः। सोऽपि वरं मनाक्प्रियः, का कथा मेलनादेरिष्टवस्तुनः प्राप्तेरिति भावः। तथाहि मम यथा अस्यामनुरागः, तथैव अस्या अपि मयि इति एव यथार्थम्, इदानीं यदि अहं म्रिये तदापि नास्ति कष्टमत-एव तावन्मात्रं पर्य्याप्तं कल्पयामीति मन्तव्यम्। द्वयोर्म्मध्ये एकस्यैव अनुरागित्वे रसाभासः, तद्यथा दर्पणे "एकत्रैवानुरागश्चेद्बहुसक्तिश्च योषितः। अनौचित्यप्रवृत्तिश्च शृङ्गाराभास उच्यते"। इति अत्र अनातुरोत्कण्ठितत्वरूपपदार्थयोः रत्यभावहेतुत्वप्रत्ययात् काव्यलिङ्गम्, अपिशब्दे मेलनाभावादेः स्वत एव व्यावर्त्तनप्रतीतेः द्वितीयापिशब्देन च मेलनादेस्तथा अनुषङ्गात् अर्थापत्तिद्वयी। उत्तरार्द्धेन सामान्यात् अप्रस्तुतात् तुल्यानुरागसाधारणप्रियजनद्वयस्य शरीरनाशस्यापि प्रियत्वरूपवस्तुनः प्रस्तुतस्य विशेषस्य राजमालविकयोः शरीरनाशस्यापि प्रियत्वरूपस्य प्रस्तुतस्य गम्यत्वात् अप्रस्तुतप्रशंसालङ्कारः। रतिशब्दस्य सन्तोषार्थकतया स्वशब्देन स्थायिभावोक्तिरूपदोषविरहः। तद्वाचकतया तच्छब्दोपादानस्य एव दोषत्वात् नतु तद्वाचकशब्दसन्निवेशमात्रस्य। वंशस्थं वृत्तम्।

(ह) रचितः कृतः पल्लवावतंसः पल्लवरूपं कर्णभूषणं शिरोभूषणं वा यया तथाभूता, किसलयेन रचितावतंसा, सलीलं सविलासम्, अशोकाय अशोकवृक्षमुद्दिश्य, पादं स्वचरणं प्रहिणोति परिचालयति, तव पादाघातं करोति इत्यर्थः। "अवतंसो न

---

একজন অনুৎকণ্ঠিত, আর একজন উৎকণ্ঠাপরায়ণ। এইরূপ বিষম-ভাববিশিষ্ট নায়কনায়িকার সমাগম কোনরূপে সম্পাদিত হইলেও আমার তাহা ভাল বোধ হয় না। কিন্তু পরস্পরের অনুরাগ সমান, এরূপ অবস্থায় সমাগমের আশা না থাকিলে, যদি শরীরবিয়োগও হয়, তাহাও শ্রেয়ঃ। (১৫)

राजा। वयस्य !

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥१६॥

[ अन्वयः। इयम् अस्मात् कर्णकिसलयम् आदाय अत्र चरणम् अर्पयति। उभयोः सदृशविनिमयात् आत्मानं वञ्चितं मन्ये। १६ ]

माल। वामो क्खु एसो असोओ जो ल्लङ्घअं पमाणीकदुअ

---

स्त्रियां स्यात् कर्णपूरे च शेखरे" इति मेदिनी। अशोकाय इत्यत्र कथञ्चित् भाक्तसंप्रदानत्वं स्वीकृत्य उपपत्तिः कर्त्तव्या।

१६। अथ अनुरागिजनसुलभां प्रणयेर्ष्यां प्रतिपादयति—आदायेत्यादिना। इयं मालविका अस्मात् अशोकवृक्षात् कर्णकिसलयं कर्णावतंसतायोग्यम् अशोकपल्लवम् आदाय गृहीत्वा अत्र अस्मिन् अशोकवृक्षे कर्णकिसलयदायिनी इत्यर्थः। चरणं पादम् अर्पयति स्थापयति, तदीयपल्लवं गृहीत्वा तत्स्थाने पादपल्लवं करोति इत्यर्थः। उभयोः अशोकवृक्षस्य प्रियायाश्च इत्यर्थः। सदृशविनिमयात् तुल्यवस्तुपरिवर्त्तनात् आत्मानं स्वं वञ्चितं प्रतारितं मन्ये, अन्यत्रापि कौचित् जनौ परस्परं सदृशवस्तुविनिमयेन परस्परस्य सख्यं दृढं कुरुतः तन्मन्ये इमावपि परस्परम् एतद्विनिमयेन तथा, अतएव नास्ति ममात्र आशालेशोऽपीति व्यज्यते। अयच यद्यहम् एवं तुल्यवस्तुविनिमयमनया सह कर्त्तुमशक्यं तदा अनया प्रणयेन बद्धो भवितुमपारयिष्यं तदभावादिदानीं नैराश्यहेतुर्म्मे प्राप्त इति भावः। अत्र सदृशवस्तुविनिमयात् समपरिवृत्तिरलङ्कारः तेन च चरणमिव कर्णकिसलयं कर्णकिसलयमिव चरणमिति उपमेयोपमा व्यज्यते। आर्य्या जातिः।

---

( পল্লবভূষণ পরিধান করিয়া লীলাসহকারে অশোকের প্রতি মালবিকার পাদাঘাত )। (হ)

রাজা। বয়স্য! মালবিকা এই অশোকের নিকট কর্ণভূষণার্থ নবপল্লব গ্রহণ করিয়া ইহাকে চরণ অর্পণ করিতেছেন। উভয়ের এই সদৃশবস্তুবিনিময়ে আত্মাকে আমার বঞ্চিত মনে হইতেছে। (১৬)

कुसुमुग्गमं ण दंसेदि। अवि णाम अह्माणं सम्भावणा सफला हवे ?। [वाम: खलु एष: अशोक:, यो व्यञ्जकं प्रमाणीकृत्य कुसुमोद्गमं न दर्शयति अपि नाम अस्माकं सम्भावना सफला भवेत् ? ] (च)

बकुला। हला ! णत्थि दे दोसो। अअं ज्जेव णिग्गुणो असोओ जइ कुसुमुग्गममन्थरो हवे, जो दे चलणसक्कारं लम्भिदो। [हला ! नास्ति ते दोष:। अयमेव निर्गुण: अशोक: यदि कुसुमोद्गममन्थरो भवेत, यस्ते चरणसत्कारं लम्भित: ?] (छ)

---

(च) एष: दृश्यमान: चरणेनाहन्यमान इति वा, अशोक: वाम: प्रतिकूलाचारी खलु निश्चितम्। यत् यस्मात् व्यञ्जकं आत्मकुसुमप्रकाशहेतुं कामिनीचरणाघातं प्रमाणीकृत्य कुसुमोद्गमविषये कारणतया प्रमाणतां नीत्वा, कुसुमोद्गमं पुष्पप्रकाशं न दर्शयति, अपि: प्रश्ने, नाम सम्भावनायाम्, अस्माकं मम बकुलावलिकादीनाञ्च अस्मदनुरक्तानां जनानां सम्भावना, पादाघातेन अशोकपुष्पोद्गमाशासफला भवेत्, अथवा सम्भावना समुद्यम:, पादाघातरूपक्रिया इति यावत। तथाहि किम् अनेन पादाघातेन अशोकेऽस्मिन् पुष्पाणि सम्भविष्यन्ति, यदि तथा न स्यात् तदा सहानपमान: स्यात्। केचित्तु सम्भावनाप्रक्रान्तपादाघातात अशोकस्य पुष्पविकाशात आत्मनोऽभिलाषपूरणाशा सफला भवेत, अनेन उपक्रमेण अशोकस्य पुष्पविकाशे अभिलाषपूरणस्य राज्ञा स्वीकृतत्वात् इति भाव:।

(छ) ते तव दोष: अपराध: निर्गुणता इति भाव:। नास्ति, यदि कुसुमस्य उद्गमे प्रकाशे, मन्थर: अलस: भवेत, अनुद्गतकुसुम: स्यात् इत्यर्थ:। तदा अयं अशोकवृक्ष एव निर्गुण: कुसुमोद्गमोपयोगिगुणशून्य: य: एष: ते तव चरणसत्कारं पादाघातरूपां सतक्रियां लम्भित: प्रापित:, तथाहि तव पादाघातेन यदि अशोको न

---

মাল। এই অশোক নিশ্চয়ই প্রতিকূলপ্রকৃতি। সেইজন্য দোহদ স্বীকার করিয়াও পুষ্পোদ্গম প্রদর্শন করিতেছে না। আমাদের উদ্যোগ কি সফল হইবে ? (ক)

राजा । अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः ।
अशोक यदि सद्य एव मुकुलैर्न सम्पत्स्यसे
वृथा वहसि दोहदं ललितकामिसाधारणम् ॥१७॥

[ अन्वयः । अशोक ! तनुमध्यया मुखरनूपुराराविणा नवाम्बुरुहकोमलेन अनेन चरणेन सम्भावितः यदि सद्य एव मुकुलैः न सम्पत्स्यसे ( तदा ) ललितकामिसाधारणं दोहदं वृथा वहसि । १७ । ]

---

पुष्पं दध्यात् तदा अयं कदापि पुष्पं न धारयिष्यति वन्ध्यत्वादिति, अवश्यमेव इदानीं पुष्पवान् अयं भविता इति व्यज्यते । कुसुमोद्भेदमन्थर इति पाठेऽपि स एवार्थः ।

१७ । अथ अशोकस्य इतः परमपि पुष्पोद्भेदविरहे दोषमाह—अनेनेत्यादिना । हे अशोक ! तनुः चीणः मध्यः मध्यभागः यस्याः तया चीणकट्या मालविकया मुखरेण शब्दकारिणा नूपुरेण मणिमञ्जीरेण आरौति शब्दायते यः तेन, नवं यत् अम्बुरुहं कमलं तद्वत् कोमलेन मृदुलेन अनेन दृश्यमानेन चरणेन मालविकायाः पादेन सम्भावितः आघातेन सम्मानितः यदि सद्यः अविलम्बितमेव मुकुलैः पुष्पकोरकैः न सम्पत्स्यसे युक्तो भवसि मुकुलितभावं नाधत्से इत्यर्थः । सम्पत्स्यते इति पाठे मुकुलैरिति कर्त्तरि तृतीया, सम्पत्स्यते जनिष्यते इत्यर्थः । तदा वृथा निष्फलमेव ललितकामिसाधारणं विलासिकामिजनतुल्यं दोहदं पादाघातरूपम् अभिलाषपूरयितृकं वस्तु वहसि धारयसि, तथाहि ईदृशं दुर्लभं मालविकायाः पादाघातरूपं दोहदं लब्ध्वा अवश्यमविलम्बमेव त्वया मुकुलितेन भवितव्यमिति भावः । अत्र चरणाघातः लोके अपमानकारणमिति प्रसिद्धं तस्माच्च सम्भावनाया तद्विरुद्धकर्म्मणः वर्णनात् विषमालङ्कारः । नवेत्यादौ लुप्ता उपमा, ललितकामिसाधारणमित्यत्रापि तथा साधारणपदस्य साम्य-

---

বকুলা। সখি! তোমার দোষ নাই। এই অশোক তোমার চরণ-সংকার প্রাপ্ত হইয়াও যদি কুসুমপ্রসবে বিলম্ব করে, তাহা হইলে এ নিজেই নির্গুণ। (ক)

सखे ! वचनावकाशपूर्वकं प्रवेष्टुमिच्छामि । (ख)

विदू। एहि। णं परिहासइस्सं। [एहि, एनां परिहासयिष्यामि]। (ग)

[ उभौ प्रवेशं कुरुतः । ] (घ)

---

परत्वात्। पादाघातरूपे मुकुलसम्पत्तिकारणे सत्यपि तृतीयपादे तदभाववर्णनात् विशेषोक्तिः, कार्य्याभावप्रयोजकस्य कारणाभावस्य असत्त्वेऽपि कार्य्याभाववर्णनात् विभावना वा इति सन्देहे उभयोः सङ्करः। दोहदमित्यनेन समाप्तस्य वाक्यस्य ललितेत्यादिविशेषणमात्रेण पुनरादानात् समाप्तपुनरात्ततापि दोषः। प्रकृते तनुमध्यया इति विशेषणपदेन विशेष्यनिर्देशात् नायकस्य नायिकायाम् कामभावः सुतरां प्रव्यक्तः। वृथा इत्यत्र सुधा इति केचित् पठन्ति, अर्थस्तु सम एव, वृत्तं पृथ्वी नाम।

(ख) वचनावकाशः अनयोः वाक्यावसरे आवयोः वचनस्थापनं तत्पूर्व्वकं प्रवेष्टुम् इच्छामि, तथाहि अनयोः याद्दशवाक्योक्तौ आवयोः किमपि वचनमुक्तमुपयुक्तं स्यात् तदुपलक्ष्य प्रवेशे ममाभिलाषः वर्त्तते इति भावः।

(ग) एनां परिहासयिष्यामि, परिहासोक्तिपरां करोमि, तथाहि आवामादौ परिहासोक्तिमवलम्ब्य यदि प्रविशावः तदा इयमपि तदुत्तरविधया परिहासोक्तिमेव करिष्यति तदतिरमणीयं स्यात्। तदेव व्याजीकृत्य प्रवेशः कर्त्तव्यः अलमन्यावकाश-विलम्बेन इति भावः।

---

রাজা। অয়ে অশোক! তুমি এই তনুমধ্যমার নূপুররববিশিষ্ট, নবীনকমলসদৃশ কোমল চরণের আঘাতে সম্মানিত হইয়াও, যদি সদ্যই মুকুলসম্পন্ন না হও, তাহা হইলে সুন্দর-কামিজন-সাধারণের পাদ নিক্ষেপ-রূপ দোহদ ( অর্থাৎ তাড়না ) বৃথা বহন করিতেছে। (১৭)

সখে! ইহাদের উভয়ের কথোপকথন শেষ হইলে, প্রবেশ করিতে ইচ্ছা করি। (খ)

বিদূ। আসুন, মালবিকাকে পরিহাসকার্য্যে প্রবৃক্ত করিব। (গ)

निपु। भट्टिणि! भट्टिणि! भट्टा एत्थ पविसदि। [भट्टिनि! भट्टिनि! भर्त्तात्र प्रविशति।] (ङ)

इरा। एदं मम पढ़मं चिन्तिदं हिअएण। [एतन्मम प्रथमं चिन्तितं हृदयेन]। (च)

विदू। (उपेत्य) होदि! जुत्तं णाम अत्तभोदि पिअवअस्से असोओ वामपाएण ताड़ेदुं? [भवति! युक्तं नाम अत्रभवति प्रिय-वयस्ये अशोको वामपादेन ताड़यितुम्?] (छ)

---

(घ) उभौ इति राजा विदूषकश्च प्रविशं कुरुतः अशोकमण्डपे इति शेषः।

(ङ) भट्टिनि! भट्टिनि! इति द्विरुक्तिः सम्भ्रमे। अत्र अस्मिन् अशोकमण्डपे, भर्त्ता राजा प्रविशति, राज्ञः मालविकासमीपे प्रवेशस्य अनर्थकारित्वसम्भावनया सम्भ्रमः।

(च) मम हृदयेन अन्तःकरणेन एतत् मालविकायामनुरागातिरेकात् तत्सन्निधाना-दिकं प्रथमम् आदावेव राज्ञः दोलागृहे अदर्शनानन्तरमेव चिन्तितम् आशङ्कितम्। नतु अचिन्तितोपनतमिदं यथा नूतनतया प्रतिपादयितुमिच्छसि इति भावः।

(छ) उपेत्य मालविकायाः समीपमुपसृत्य, अत्रभवति माननीये प्रियवयस्ये राजनि अग्निमित्रे अत्र वर्त्तमाने सतीत्यर्थः। अथवा अत्र अस्मिन् स्थाने भवति वर्त्तमाने सतीत्यर्थः। वामपादेन वामचरणेन अशोकः अशोकवृक्षः ताड़यितुम् आहन्तुं युक्तम् उचितं नाम, अपि तु न युक्तमेव इति काक्वा व्यज्यते, तथाहि तव प्रियवयस्यः अत्र वर्त्तमानः, स एव चरणाघातमर्हति नतु अयमशोक इति किमन्यार्थं कर्तुं प्रवृत्ता असीति भावः।

---

[ রাজা ও বিদূষকের অশোক-মণ্ডপে প্রবেশ ] (ঘ)

নিপু। ভট্টিনি! ভট্টিনি! ভর্ত্তা এখানে প্রবেশ করিতেছেন! (ঙ)

ইরা। আমার হৃদয় প্রথমেই ইহা চিন্তা করিয়াছিল। (চ)

বিদূ। (সমীপে সমাগত হইয়া) মান্যে! পূজনীয় প্রিয় বয়স্য থাকিতে, অশোককে বামপাদে তাড়না করা কি উপযুক্ত হইয়াছে? (ছ)

उभे। ( ससंभ्रमम् )। अम्मो भट्टा! जेदु जेदु भट्टा [ अहो भर्त्ता! जयतु जयतु भर्त्ता। ] (ज)

विदू। बउलावलिए! गिह्णीदत्थाए तुए अत्तभोदी ईरिसं अविणअं करन्ती कीस ण णिवारिदा? [ बकुलावलिके! गृहीतार्थया त्वया अत्रभवती ईदृशमविनयं कुर्वती केन न निवारिता? ]। (झ)

[ मालविका भयं रूपयति। ] (ञ)

निपु। भट्टिणि! पेक्ख, किं पउत्तं अज्जगोदमेण? [ भट्टिनि! प्रेक्षस्व, किं प्रवृत्तमार्य्यगौतमेन? ] (ट)

---

(ज) उभे मालविकाबकुलावलिके, ससम्भ्रमं राजागमनात् सम्भ्रमसहकारेण, अहो आश्चर्य्यं, तयास्त्वत्र विश्रम्भालापसमये राज्ञः सहसा आगमनकारणमप्राप्य इति।

(झ) गृहीतार्थया ज्ञाततत्त्वया त्वया अत्रभवती माननीया मालविका ईदृशं निर्द्दोष वस्तुनि अशोकवृक्षरूपे पादप्रहाररूपम् अविनयं विनीतभावविरुद्धं कर्म्म कुर्वती केन हेतुना न निवारिता निवर्त्तिता, अथच गृहीतार्थया अवगतराजानुरागया गृहीततत्-सन्देशया इति वा, ईदृशम् राजानं रक्तं जनं परिहाय अस्मिन् पादप्रहाररूपम् अविनयम् अन्याय्यकार्य्यं कुर्व्वती, तथाहि अस्या निवारणं त्वया कर्त्तव्यमासीदिति भावो ध्वन्यते।

(ञ) मालविका विदूषकवाक्यस्य गूढार्थमननुसन्धाय अशोकतरौ पादाघातेन अन्याय्यकार्य्यकारित्वदोषमेव आत्मनि सम्भाव्य परिजनोचितं भयं रूपयति अभिनयति, "भयं तावत् सेव्यादभिनिविशते सेवकजन"मित्यादिनियमादिति भावः।

(ट) निपुणिका तु सार्थकाभिधाना विदूषकवाक्यस्य गूढार्थमवधार्य्य विदूषकस्य अन्याय्यकारित्वमिरावत्यै निवेदयति—भट्टिनीत्यादिना। आर्य्यगौतमेन गौतमाख्येन

---

উভয়ে ( সসম্ভ্রমে ) অয়ে ভর্ত্তা! মহারাজের জয় হউক, জয় হউক। (জ)

বিদূ। বকুলাবলিকে! তুমিত সমস্তই সবিশেষ জান। তবে কেন মাননীয়া মালবিকাকে ঈদৃশ অবিনয়কার্য্য হইতে নিবৃত্ত কর নাই? (ঝ)

[ মালবিকার ভয়াভিনয়। ] (ঞ)

इरा। कहं क्खु बह्मबन्धू अस्सहा जीविस्सदि? [कथं खलु ब्रह्मबन्धुरन्यथा जीविष्यति?]। (ठ)

बकुला। अज्ज! एसा देवीए णिओअं अणुचिट्ठदि। एदस्सिं अदिक्कमे परबदी इअं। पसीददु भट्टा। (इत्यात्मना सहैनां प्रणिपातयति।) [आर्य्य! एषा देव्या नियोगमनुतिष्ठति। एतस्मिन्नतिक्रमे परवतीयं, प्रसीदतु भर्त्ता]। (ड)

---

आर्य्येण विदूषकेण किं कीदृशं कर्म्म अन्याय्यम् इत्यर्थः। प्रवृत्तं प्रक्रान्तम्? एतेन विदूषकप्रवर्त्तिते कर्म्मणि महान् विद्वेषो व्यज्यते।

(ठ) ब्रह्मबन्धुः निकृष्टब्राह्मणः "ब्रह्मबन्धुरधिक्षेपे" इत्यमरः। अन्यथा ईदृशा-कार्य्याचरणप्रयोजकतामन्तरेण इत्यर्थः। कथं केन प्रकारेण जीविष्यति प्राणान् धारयिष्यति, तथाहि अयं निकृष्टो जन एवम् अन्याय्यकार्य्यस्य साहाय्यं कुर्वाण एव राज्ञो महान्तमर्थराशिं लब्ध्वा जीवति, तदभावे अस्य जीविका एव व्याहता स्यात् इति एतेन राज्ञोऽपि उपरि अकार्य्यकारितया द्वेषो व्यज्यते।

(ड) एषा मालविका देव्याः महिष्याः धारिण्याः नियोगम् आदेशम् अनुतिष्ठति आचरति, अतो नास्या अत्र दोषलेशोऽपि इति भावः। यतः एतस्मिन् प्रवर्त्तिते अतिक्रमे पादाघातरूपे लङ्घने इयं मालविका परवती पराधीना, अतः अस्याः अन्य-प्रयोज्यतया एतत्कर्म्मकरणात् दोषस्य अवश्यम्भावित्वे प्रयोजिकाया धारिण्या एव स दोष इत्यभिप्रायो व्यक्तः। भर्त्ता स्वामी प्रसीदतु अनुग्रहं करोतु, इति उक्तरूपम् उक्त्वा, आत्मना सह एनां मालविकां प्रणिपातयति प्रणतां करोति, उभे राजानं प्रणमत इत्यर्थः। दोषक्षालनाभिलाषेणेति भावः।

---

निपू। भट्टिनि! अवलोकन करुन, आर्य्यगौतम कि करিতে-ছেন? (ট)

ইরা। এরূপ না করিলে, এই ব্রাহ্মণাধমের কিরূপে জীবিকানির্ব্বাহ হইতে পারে? (ঠ)

রাজা। যদ্যেবমনপরাধাসি। উত্তিষ্ঠ ভদ্রে! [ ইতি হস্তেন গৃহীত্বৈনামুত্থাপয়তি। ] (ঢ)

বিদূ। জুজ্জদি। দেবী এত্থ মাণাইদব্বা। [ যুজ্যতে। দেবী অত্র মানয়িতব্যা। ] (ণ)

রাজা। ( বিহস্য। )

কিসলয়মৃদোর্বিলাসিনি কঠিনে নিহিতস্য পাদপস্কন্ধে।
চরণস্য ন তে বাধা সম্প্রতি বামোরু বামস্য॥ ১৮॥

[ অন্বয়:। হে বিলাসিনি! বামোরু! কঠিনে পাদপস্কন্ধে নিহিতস্য কিসলয়মৃদো: বামস্য তে চরণস্য সম্প্রতি ন বাধা। ১৮। ]

---

(ঢ) যদি এবং ধারিণ্যা আদেশাদেব ঈদৃশং কর্ম্ম কৃতবত্যসি ননু স্বত এব তদা ইত্যর্থ:। অনপরাধা অপরাধশূন্যা অসি, প্রযোজকস্য জনস্যৈব অত্র সাপরাধিত্বাদিতি ভাব:। উত্তিষ্ঠ, অলম্ অপরাদ্ধস্যেব জনস্য প্রসাদনাহেতুপ্রণত্যুপন্যাসেন ইতি ভাব:। এনাং মালবিকাম্ উত্থাপয়তি, অত্র প্রথমত: প্রণামপ্রবর্ত্তিকাং বকুলাবলিকামনুত্থাপ্য মালবিকায়া: সান্ত্বনাপূর্বকমুত্থাপনেন রাজ্ঞ: সুতরাং কামভাবো ব্যজ্যতে।

(ণ) যুজ্যতে, যুক্তমিদং যত্ দেব্যাদেশাত্ অনার্য্যেঽপি কর্ম্মণি প্রবৃত্তিরিতি। দেবী মহিষী, অত্র অস্মিন্ বিষয়ে মানয়িতব্যা গৌরবেণ দ্রষ্টব্যা, তদাদেশ: অবশ্যং পালয়িতব্য ইতি ভাব:।

---

বকুলা। আর্য্য! ইনি দেবী ধারিণীর নিয়োগ পালনে প্রবৃত্ত হইয়াছেন; তাঁহার আদেশলঙ্ঘনে ইহাঁর ক্ষমতা নাই। অতএব ভর্ত্তা প্রসন্ন হউন। [ এই বলিয়া মালবিকাকে আপনার সঙ্গে লইয়া, রাজার উদ্দেশে প্রণিপাত। ] (ড)

রাজা। যদি এইরূপই হয়, তাহা হইলে তোমার অপরাধ নাই। ভদ্রে! উত্থান কর। (মালবিকাকে হস্তে ধরিয়া উত্থাপন)। (ঢ)

বিদূ। এ বিষয়ে দেবী ধারিণীর সম্মান রক্ষা করা সর্ব্বথা উচিত। (ণ)

[ मालविका लज्जां नाटयति ]। (त)

इरा। **अह्नो णवणीदकप्पहिअओ अज्जउत्तो।** [ अहो! नवनीतकल्पहृदय आर्य्यपुत्रः! ]। (थ)

---

१८। अथ राजा शृङ्गारभावसुलभं परिहासमुररीकृत्य कोमलभावेन प्राह— किसलयेत्यादि। हे विलासिनि विभ्रमयुक्ते! हे वामोरु सुन्दरोरुविशिष्टे! सम्बोधनद्वयमेव राज्ञः शृङ्गारभावं व्यनक्ति। कठिने कठिनगात्रे पादपस्कन्धे वृचस्कन्धे, निहितस्य चिप्तस्य किसलयमृदोः पल्लववत् कोमलस्य ते तव वामस्य चरणस्य पादस्य सम्प्रति पादप्रहारानन्तरं बाधा व्यथा न कच्चिदिति नञा शिरश्चालनेन प्रश्नार्थः प्रत्याय्यते। किसलयमृदोरिति विशेषणं वृचस्कन्धे चरणचेपात् व्यथायोग्यतास्थापनार्थम्। कठिनइत्यपि तत एव। किसलयमृदोरित्यत्र समासगता लुप्तोपमा, वामोरु वामस्येति छेकानुप्रासः।—"गतिस्थानासनादीनां मुखनेत्रादिकर्म्मणाम्। तात्कालिकन्तु वैशिष्ट्यं विलासः प्रियसङ्गजम" इत्युक्तलक्षणः विलासः। शृङ्गारसुलभपरिहासपरता चास्य गद्यात्मकेन विहस्येत्यनेनैव प्रतिपत्तव्या। किसलयमृदोरिति कठिन इति च पदार्थयोः बाधां प्रति हेतुत्वप्रत्ययात् काव्यलिङ्गमिति अपि वदन्ति।

(त) मालविका लज्जां शृङ्गारसञ्चारिभावं नाटयति अभिनयति, परिचारिकारूपे आत्मनि राज्ञो योग्यतातिक्रमेण आदरस्य लाभात्। अथवा राजनि वर्त्तमानस्य शृङ्गारस्य अनुकूलतया एव लज्जायाः प्रवृत्तिरिति।

(थ) नवनीतं नवोद्धृतं, (ननी इति भाषाप्रसिद्धं) तत्कल्पं हृदयं मनः यस्य तथाभूतः नवनीतं यथा अतिशयेन कोमलं तथैव आर्य्यपुत्रस्य हृदयमिति, मालविकायाः पादपस्कन्धे पादप्रहारात् तदीयपादे व्यथानुभवात् इति भावः। सोल्लुण्ठनोक्तिरेषा इरावत्याः। "नवनीतं नवोद्धृत" मित्यमरः

---

রাজা। (হাস্য করিয়া) অয়ি বিলাসিনি! রম্ভোরু! তোমার কিসলয়সদৃশ কোমল বামচরণ কঠিন তরুস্কন্ধে আঘাত করিয়া, ব্যথিত হইতেছে না ত?। ১৮

[মালবিকার লজ্জাভিনয়]। (ত)

माल। बउलावलिए! एहि। अणुचिट्ठिदं अत्तणो णिओअं देवीए णिवेदेह्म। [ वकुलावलिके! एहि। अनुष्ठितमात्मनो नियोगं देव्यै निवेदयाव: ]। (द)

वकुला। विस्सवेहि भट्टारं विसज्जेहि त्ति। [ विज्ञापय भर्त्तारं विसर्जयेति ]। (ध)

राजा। भद्रे! यास्यसि? मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम्। (न)

वकुला। अवहिदा सुणाहि। आणवेदु भट्टा। [ अवहिता शृणु। आज्ञापयतु भर्त्ता। ] (प)

---

(द) मालविका लज्जावशात् अधिकं कालम् राजसकाशे स्थातुमशक्ता गमनीयमाह प्राह—वकुलावलिके इत्यादि। अनुष्ठितं निर्व्वर्त्तितम् आत्मन: स्वस्या: नियोगम् आदेशम् आदिष्टं विषयमित्यर्थ:। देव्यै धारण्यै निवेदयाव:, अत: इदानीं गम्यतामिति भाव:।

(ध) भर्त्तारं स्वामिनं राजानमित्यर्थ:। विज्ञापय विसर्ज्जय गन्तुमादिश इति, अन्यथा राज्ञ: सम्भावनाया भङ्गप्रसङ्गादिति भाव:।

(न) भद्रे, साधुचरिते! यास्यसि अवश्यं गमिष्यसि, उत्पन्न: जात: अवसर: अवकाश: योग्यकाल इत्यर्थ: यस्य तथाभूतम्, अर्थित्वं याचकत्वं श्रूयताम्।

(प) अवहिता सावधाना, मनोयोगसहकारेण इत्यर्थ:। शृणु भर्त्त्रा कथ्यमानं वस्तु इति शेष:। अयमंश: मालविकां प्रति, परांशश्च राजानं प्रति उक्ति:, भर्त्ता महाराज: आज्ञापयतु कथयतु यत् वक्तव्यमिति शेष:।

---

इरा। আহা! আর্য্যপুত্রের হৃদয় নবনীতের ন্যায় কি কোমল! (থ)

মালবিকা। বকুলাবলিকে! আইস, দেবী মহিষীর নিয়োগ প্রতিপালিত হইয়াছে; এখন যাইয়া তাঁহাকে নিবেদন করি। (দ)

বকুলা। ভর্ত্তাকে, বিদায় প্রদান করুন বলিয়া, বিজ্ঞাপিত কর। (ধ)

রাজা। ভদ্রে! যাইবে, আমার অবসরসমুচিত প্রার্থনা শ্রবণ কর। (ন)

राजा। धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात् प्रभृति।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः॥ १८॥

[अन्वयः। अयं जनः चिरात् प्रभृति धृतिपुष्पम् अपि तादृशं न बध्नाति— अनन्यरुचेः अस्य अपि दोहदं स्पर्शामृतेन पूरय।] १८

इरा। (सहसोपसृत्य।) पूरेहि पूरेहि। असोओ कुसुमं ण दंसेदि, अअं उण ण पुप्फइ फलइज्जेव। [पूरय पूरय। अशोकः कुसुमं न दर्शयति, अयं पुनर्न पुष्यति फलत्येव]। (फ)

---

१८। अथ राजा प्राक् संसूचितं वक्तव्यमाह—धृतीत्यादिना। अयमपि मल्लक्षणः अपि जनः न केवलं अशोकवृक्ष एव इत्यपिकारेण समुच्चयम्। चिरात् प्रभृति बहुकालं यावत् त्वच्चिन्तायां हृदये प्रवेशानन्तरम् इति भावः। तादृशं पूर्वसदृशम् अशोकवृक्षतुल्यमिति वा धृतिपुष्पं धैर्य्यरूपं कुसुमं न बध्नाति न धारयति। तथाहि तव प्रथमदर्शनादारभ्य मम चित्तमेकान्ततो धैर्य्यशून्यं जातमिति भावः। अतः स्पर्शामृतेन स्वीयाङ्गसम्पर्करूपामृतवर्षेण, अनन्यरुचेः केवलं त्वय्येव अनुरक्तस्य अस्य मल्लक्षणस्य जनस्यापि दोहदम् अभिलाषं पूरय निष्पादय। अत्र धृतौ पुष्पत्वारोपात् रूपकम् स्पर्शे च अमृतत्वारोपात् रूपकान्तरम्। आर्य्या जातिः।

(फ) उपसृत्य मालविकायाः समीपे उपस्थाय पूरय निष्पादय अस्य तवोपरि अनुरक्तस्य राज्ञः दोहदम् इति शेषः। अशोकः अयम् अशोकवृक्षः कुसुमं पुष्पं न दर्शयति पुष्पवान् न भवतीत्यर्थः, केनचित् प्रतिबन्धकेन प्रतिबन्धादिति भावः। पुनः किन्तु अयं राजा न पुष्यति पुष्पवान् न भवति कदापीति शेषः, फलत्येव फलं जनयत्येव, तथाहि अशोकः पुष्पमात्रेण जुष्टः दोहदपूरणकारिणो मोदं जनयति, अयन्तु पुष्प

---

বকুলা। অবহিত হইয়া শ্রবণ কর। কি আজ্ঞা হয়, বলুন। (প)

রাজা। এই অশোকই যে পুষ্প ধারণ করিতেছে না, এমন নহে; আমিও বহুকাল হইতে ধৈর্য্য ধারণ করিতে পারিতেছি না। বলিতে কি, অন্য কাহাতেও আমার অভিলাষ নাই। অতএব স্পর্শরূপ অমৃত প্রদান করিয়া আমার অভিলাষ পূরণ কর। (১৯)

[ सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः । ] (ब)

राजा । ( अपवार्य्य । ) वयस्य ! का प्रतिपत्तिरत्र ? । (भ)

विदू । किं अस्सं ? जङ्घाबलं एव्व सरणम् । [किमन्यत् ? जङ्घाबलमेव शरणम् ]। (म)

इरा । साहु बउलावलिए ! साहु तुए उवक्कन्तं । दाणिं करेहि सफलप्पत्थणं अज्जउत्तं । [ साधु वकुलावलिके ! साधु त्वया उपक्रान्तम् । इदानीं कुरु सफलप्रार्थनमार्य्यपुत्रम् ]। (य)

---

विनैव फलनिष्पादनेन दोहददायिनी महदिष्टं सम्पादयति, अतएव इष्टसाधकत्वज्ञानेन तव एतस्य दोहदपूरणे प्रवृत्तिर्युज्यते इति भावः। वक्रोक्तिरियं मालविकां प्रति इरावत्याः।

(ब) सम्भ्रान्ताः भीतभीताः जाताः, इरावत्याः अनभिमतविषयाचरणेन क्रोधं गतायाः अनिष्टसाधकत्वविज्ञानेन इत्यर्थः।

(भ) अत्र अस्मिन् विषये ईदृशे दशासन्निपाते इत्यर्थः। का प्रतिपत्तिः किं कर्त्तव्यं कर्त्तव्यनिर्द्धारणं तथा कुरु यथा इरावतीं शान्तभावेन मृषा वा विज्ञाप्य शमगतां कर्त्तुमर्हसीति भावः।

(म) अन्यत् वक्ष्यमाणात् अपरं किं कर्त्तव्यम् अपि तु न किमपीति शेषः। जङ्घाबलं चरणशक्तिः एव शरणं रक्षाकरं, तथाहि यदि इदानीम् अस्मात् स्थानात् सत्वरं पलायितुमर्हसि तदैव रक्षा स्यात्, अन्यथा विपदुपशमो दुष्कर एव इति भावः।

---

ইরা। ( সহসা সমীপস্থ হইয়া ) পূরণ কর—পূরণ কর। অশোকবৃক্ষ কুসুম প্রদর্শন করিতেছে না, কিন্তু রাজা পুষ্পবান্ না হইয়া একবারে ফল প্রসবই করিবেন। (ফ)

[ ইরাবতীকে দেখিয়া সকলের সম্ভ্রম ]। (ব)

রাজা। ( অপবারণপূর্ব্বক ) বয়স্য! এখন কর্ত্তব্য কি ? (ভ)

বিদূ। কর্ত্তব্য আর কি আছে ? জঙ্ঘাবলই এখন একমাত্র অবলম্বনীয়। (ম)

उभे। पसीददु भट्टिणी। काओ अह्मे भट्टिणो पणअपरिग्गहस्स। (इति निष्क्रान्ते)। [प्रसीदतु भट्टिनी। के आवां भर्त्तुः प्रणयपरिग्रहस्य] (र)

इरा। अविस्ससणीआ पुरिसा। अत्तणो वञ्चणवअणं पमाणीकरिअ अक्खित्ताए वाहजणगीदगहीदचित्ताए हरिणीए विअ एदं ण विण्णादं। [अविश्वसनीयाः पुरुषाः। आत्मनो वञ्चनवचनं प्रमाणीकृत्य आक्षिप्तया व्याधजनगीतगृहीतचित्तया हरिण्या इव एतत् न विज्ञातम्]। (ल)

---

(य) साधु सदेव वस्तु उपक्रान्तम् आरब्धं विपरीतलक्षणया "उपकृतं बहु तत्र किमुच्यते" इत्यादिस्थलवत् नितान्तमसदेव त्वया कर्त्तुमारब्धमिति भावः। इदानीम् उपक्रमानन्तरं वर्त्तमाने समये आर्य्यपुत्रम् अस्मत्स्वामिनं राजानं सफला फलवती प्रार्थना याच्ञा यस्य तं कुरु, मालविकया सह आर्य्यपुत्रस्य सङ्गतिं समुत्पाद्य तस्य प्रार्थनां सफलां कुरु इति भावः।

(र) भट्टिनी देवी प्रसीदतु प्रसन्ना भवतु कोपं जहीहि इत्यर्थः। भर्त्तुः स्वामिनः अग्निमित्रस्य प्रणयपरिग्रहस्य प्रेमधारणस्य सम्बन्धे आवां मालविका वकुलावलिका च के अपि तु न के अपि अतिनिकृष्टे इत्यर्थः। तथाहि अग्निमित्रस्य स्वामिनः प्रणयपरिग्रहो भवत्यामेव युज्यते न आवयोरतः आवयो राजप्रणयशङ्कां मा कृथाः तच्चिन्तया कोपञ्च मुञ्च इति भावः।

(ल) पुरुषाः पुमांसः अविश्वसनीयाः विश्वासायोग्याः, तथाहि पुरुषाः सर्व्वे एव मृषावाददूषिताः अतएव पुरुषस्यास्य राज्ञः विश्वसनीयता नैव तथापि मुग्धया मया तत्र

---

इरा। साधु, बकुलावलিকে! উত্তম কার্য্য করিয়াছ। ইদানীং আর্য্যপুত্রের প্রার্থনা সফল কর।(য)

উভয়ে। ভট্টিনি! প্রসন্ন হউন। ভর্ত্তার প্রণয়পরিগ্রহের কোন-মতেই আমরা যোগ্যপাত্রী নহি। [এই বলিয়া উভয়ের নিষ্ক্রমণ]। (র)

विदू। (जनान्तिकम्) भो ! पड़िवज्ज हि किंपि उत्तरं। किं ण भणाइ 'उदआन्दमूले विवहिए विमहिदेण कुम्भोलेण सन्धिच्छेदो सिक्खिदव्वं त्ति वत्तव्वं होदि ? [भोः ! प्रतिपद्यस्व किमप्युत्तरम्। किं न भणति 'उदकान्तमूले विपथिके विमथितेन कुम्भीलेन सन्धिच्छेदः शिचितव्य' इति वक्तव्यं भवति ?] (व)

---

विश्वासः स्थापित इति महती अनवधानता मे इति भावः। ननु कथं तथापि विश्वासः स्थापित इत्याकाङ्क्षायामाह—आत्मन इत्यादि। आत्मनः स्वस्य। कर्म्मणि षष्ठी। वचनवचनं प्रतारणवाक्यं प्रमाणीकृत्य प्रमाणतया मत्वा आचिमया प्रतारितया समाकृष्टया वा मया इति शेषः। व्याधजनस्य शाकुनिकस्य गीतेन सङ्गीतेन गृहीतम् आकृष्टं चित्तं मानसं यस्याः तया, व्याधाः हरिणोन्मादं जनयितुं गीतं कुर्व्वन्तीति व्यवहारः। हरिण्या कुरङ्ग्या इव एतत् प्रतारणं न विज्ञातं विदितं, तथाहि यदि पूर्व्वतोऽपि शठस्यास्य वाक्ये मिथ्यात्वमग्रहीष्यं तदा कथमपि अत एवं विश्वासं नाचरिष्यम् इति भावः। हेतुगर्भविशेषणमुखेन आकाङ्क्षानिवृत्तिः कृता ग्रन्थकारेण तच्चातिसुष्ठु। अत विहारार्थं यदसौ मां मृषैव आहूतवान् एतत् पूर्व्वमहं नाविदिषम् अतएव आगतास्मि अन्यथा किमागमनं कुर्य्याम् इति भावो वा उपमाव स्फुटा।

(व) जनान्तिकं तल्लक्षणम उक्तपूर्व्वम्। किमपि यत्किञ्चित योग्यमयोग्यं वा उत्तरं प्रतिपद्यस्व ब्रूहि कर्त्तव्यमुत्तरमेवाह—किमित्यादिना, किं कथं न भणति न कथयति भवान् वक्ष्यमाणमिति शेषः। उदकान्तमूले जलसमीपदेशे विपथिके पथिकशून्ये जनसङ्गवर्ज्जिते, एतत्तु चौर्य्यसौकर्य्याय विशेषणम्। विमथितेन केनचित् दैवादुपस्थाय अवरुद्धेन इत्यर्थः। कुम्भीलेन चौरेण सन्धिच्छेदः अवरोधकारिणः शरीरसन्धिस्थानच्छेदनं शिचितव्यः अभ्यासेन योजयितव्यः इति उक्तरूपं वाक्यं वक्तव्यं भवति, एतद-

---

इरा। পুরুষদিগকে বিশ্বাস করিতে নাই। শঠের প্রবঞ্চনাপূর্ণ বাক্যে বিশ্বাস করিয়া প্রতারিত হইয়াছিলাম। ব্যাধসঙ্গীতমুগ্ধচিত্ত হরিণীর ন্যায় আমি ইহার শঠতা পূর্ব্বে বুঝিতে পারি নাই। (ল)

राजा। सुन्दरि! न मे मालविकया कश्चिदर्थः। मया त्वं चिरयसीति यथाकथञ्चिदात्मा विनोदितः। (श)

---

वचनरचनेन तव निर्दोषिता व्यवस्थाप्यते इति, तथाहि इरावती राज्ञा आहूता विहार-कृते, विहारस्य गहनो यदि पूर्व्वमनुशीलितो न स्यात् तदा सुष्ठु आरचयितुं न शक्येत अतएव मालविकया तदनुशीलनकर्म्म केवलं इरावत्या एव सह विहारस्य सुव्यवस्था-सम्पादनाय इत्येव वक्तव्याभिप्रायः। केषाञ्चित् मते तेषां सन्धिच्छेदः इत्यस्य गृहसन्धि-कर्त्तनमिति अर्थ एव श्रेयान्। प्रागुक्तार्थाभिप्रायस्तु इत्थं यथा नदीसमीपदेशे चौरो यदि केनचिदवरुध्यते तदा स तदानीमात्मत्राणं दुष्करं मत्वा यथा धर्त्तुः पुरुषस्य करसन्ध्या-दिकं भित्त्वा पलायते तथैवाहं युष्माकमेतावता दुर्व्यवहारेण विरक्तो जनान्तरं प्रणयेन आश्रयितुमभिप्रैमि इति अप्रस्तुतप्रशंसालङ्कारः। "कुम्भीलः शालमीने च चौरे श्लोकार्थ-चौरयो"रिति मेदिनी।

(श) सुन्दरि! सम्बोधनमिदं कुपितायाः इरावत्याः प्रकर्षं विज्ञाप्य चित्तनमनाय। मालविकया त्वदाक्रोशविषयीभूतया अनया मालविकाख्यया परिचारिकया कश्चित् अर्थः किमपि प्रयोजनं न अस्तीति शेषः। ननु तत् किमिमामाश्रित्य रसिकतां रच-यसीत्याकाङ्क्षायामाह—मयेत्यादि। त्वं चिरयसि कृतसङ्केतापि आगमने विलम्बं करोषि इति हेतोः यथाकथञ्चित् स्वयमुपस्थितेन केनचित् विषयेण मालविकया सह रसकथा-प्रसङ्गेन इत्यर्थः। आत्मा विनोदितः अन्तःकरणसन्तोषः प्रारब्धः अतएव नार्हसि मृषा कोपं कर्त्तुमिति भावः।

---

বিদূ। (জনান্তিকে) এক্ষণে যাহাহউক কিছু একটা উত্তর প্রদান করুন। দেখুন, 'পথিকশূন্য জলসমীপে চোরকে ধরিলে, সে বলিয়া থাকে, এইরূপ স্থানে সন্ধিচ্ছেদ শিক্ষা করা কর্ত্তব্য। এইজন্য আমি এখানে সন্ধি করিয়াছি, অপহরণেচ্ছায় করি নাই।' এইরূপ যুক্তিতেই কিছু বলা উচিত। (ব)

রাজা। সুন্দরি! মালবিকায় আমার কোনই প্রয়োজন নাই। তোমার

ইরা। অবিস্সসণীঅো সি। মএ ণ বিস্সাদং ঈরিসং বিণোদবত্থুঅং অজ্জউত্তেণ উবলদ্ধং ত্তি। অস্সহা দুক্খভাইণীএ এব্বং ণ করীঅদি। [অবিশ্বসনীয়োঽসি। ময়া ন বিজ্ঞাতম্ ঈদৃশং বিনোদবস্তুকম্ আর্য্যপুত্রেণোপলব্ধমিতি। অন্যথা দুঃখভাগিন্যা এবং ন ক্রিয়তে।] (ষ)

বিদূ। মা দাব তত্তভোদো দক্খিণ্ণস্স উবরোহং করেহি. সমীবদিট্টেণ দেবীএ পরিচারি ইত্থিআঅণেণ সংকহাবি জই বারীঅদি এত্থ তুমং এব্ব পমাণং। [মা তাবত্ তত্রভবতো দাক্ষিণ্যস্য উপরোধং কুরু, সমীপদৃষ্টেন দেব্যাঃ পরিচারিস্ত্রীজনেন সঙ্কথাপি যদি বার্য্যতে, অত্র ত্বমেব প্রমাণম্। (স)

---

(ষ) অবিশ্বসনীয়ঃ বিশ্বাসানর্হঃ অসি তথাহি ত্বং যদেব বদসি তদেব অবিশ্বাস্যমতো ন ইদমপি বচনং বিশ্বাস্যমিতি ভাবঃ। ঈদৃশং মালবিকারূপং বিনোদবস্তুকম্ আমোদজনকং বস্তু আর্য্যপুত্রেণ স্বামিনা ভবতা উপলব্ধং প্রাপ্তম্ ইতি ন ময়া বিজ্ঞাতম্ অবগতং, তথাহি যদি এতদজ্ঞাস্যং তদা কথমপি অত্র আগমনে অভিপ্রায়লেশমপি নাধারয়িষ্যমিতি ভাবঃ। ত্বয়া ইত্যনুক্ত্বা আর্য্যপুত্রেণেতি বাদো রাজনি ইরাবত্যাঃ মহান্তমাক্রোশং ব্যনক্তি। অন্যথা এতদ্বিষয়বিজ্ঞানে সতীত্যর্থঃ। দুঃখভাগিন্যা স্বামিজনাপরাগবিষয়তামসুলভকষ্টশালিন্যা তজ্জনকদুরদৃষ্টজুষ্টয়া বা ময়া এবম্ অত্রা গমনরূপম্ অকর্ত্তব্যং বস্তু ন ক্রিয়তে মদাগমনেন ভবতো মনোরথপ্রতিবন্ধাদিতি ভাবঃ।

(স) মা তাবত্, এবম্ আক্রোশ রাজনি ন পরিপুষাণ, কথমিত্যাহ—তত্রেত্যাদি। দাক্ষিণ্যস্য উদারপ্রণয়স্য দক্ষিণনায়কব্যবহারস্য বা 'অনেকমহিলাসু সমরাগো দক্ষিণঃ

---

আসিতে বিলম্ব দেখিয়া, আমি যে কোনরূপে আত্মাকে বিনোদিত করিতেছিলাম মাত্র। (শ)

ইরা। তোমাকে বিশ্বাস করিতে নাই। আর্য্যপুত্র যে ঈদৃশ বিনোদের সামগ্রী লাভ করিয়াছেন, তাহা আমি জানিতাম না। জানিলে দুঃখভাগিনী আমি এইরূপ করিতাম না। (ষ)

इरा। णं संकहा णाम होदु, किंत्ति अत्ताणं आआसइस्सं ?
[ ननु सङ्कथा नाम भवतु, किमिति आत्मानम् आयासयिष्यामि ? ] ( इति रुष्टा प्रस्थिता। ) (ह)

राजा। (अनुसरन्) पसीदतु भवती। (च)

---

कथित.' इति दर्पणी। उपरोधं प्रतिबन्धकतां माकुरु, तथाहि अयमसौ राजा दक्षिण-नायकः सर्व्वासु प्रियासु समः, अतएव त्वय्येव देव्यां धारिण्यामपि अस्य महान् प्रणयः सम्भाव्यते, ततएव तत्परिचारिकया अनया मालविकया सह अस्य आलापे नास्ति दोष इति तात्पर्य्यम्। समीपदृष्टेन सहसा समीपे उपस्थितेन, अनेन दोषशङ्का निराकृता देव्याः धारिण्याः परिचारिस्त्रीजनेन परिचारिकाजनेन अनेन मालविकारूपेण इत्यर्थः। यदि सङ्कथापि सम्भाषणमपि वार्य्यते दोषशङ्कया प्रतिषध्यते तदा अत्र अस्मिन् वारण-विषये त्वमेव प्रमाणं दोषादोषविचारे समर्था असि. तथाहि एतत् त्वया मुतरामेव न कर्त्तव्यं, तेन राज्ञः औदार्य्यगुणव्याघात एव कृतो भवेदिति भावः।

(ह) ननु सम्बोधने, सङ्कथा सम्भाषणं भवतु अबाधं प्रसरतु नास्ति तव मम कोऽपि प्रतिबन्ध इत्यर्थः। "उल्लापः काकु वागन्योन्योक्तिः संलापसङ्कथा" इति हेमचन्द्रः। किमिति केन हेतुना आत्मानं स्वम् अन्तरं.वा आयासयिष्यामि क्लेशयिष्यामि. तथाहि अत्र अवस्थानेन मालविकया सह राज्ञो व्यवहारवैजात्यं जानत्या मम अन्तरे भूयान् क्लेश एव भावी, भविता च राज्ञो मनोरथसङ्कोचः. तदेवाहं प्रतिष्ठे इति भावः। रुष्टा कुपिता असौ प्रस्थिता प्रस्थातुमुपक्रान्ता, आदिकर्म्मणि क्तप्रत्ययः।

---

বিদূ। মহারাজ আপনাদের সকলেরই প্রতি সমান অনুকূল। আপনি তাহার ব্যাঘাত করিবেন না। আপনি যদি সমীপদৃষ্ট দেবীর পরিচারিকা স্ত্রীজনের সহিত কথোপকথনেরও প্রতিষেধ করেন, তাহা হইলে আপনিই এই বারণজন্য দোষাদোষ বুঝিতে পারিবেন। (স)

ইরা। আচ্ছা, কথোপকথন হউক। কিজন্য আত্মাকে ক্লিষ্ট করিব ? [ এই বলিয়া সরোষে প্রস্থান ]। (হ)

[ इरावती रसनासन्दानितचरणा व्रजत्येव । ] (क)

राजा । सुन्दरि ! न शोभते प्रणयिनि जने निरपेक्षता । (ख)

इरा । सठ ! अविस्ससणीओ सि । [शठ ! अविश्वसनीयोऽसि । ] (ग)

राजा । शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डि तां
विसृजसि मेखलयापि याचिता ॥२०॥

[ अन्वयः । प्रिये ! परिचयवति मयि तावत् शठ इति ते अवधीरणा अस्तु, चण्डि ! चरणपतितया मेखलया अपि याचिता तां न विसृजसि । २० ]

---

(ङ) अनुसरन् अनुगच्छन् प्रस्थितामिरावतीमिति शेषः । प्रसीदतु प्रसन्ना भवतु मनोमालिन्यं विहाय पूर्व्ववत् मयि वर्त्तस्व इति भावः ।

(क) रसनया मेखलया सन्दानितौ बद्धौ चरणौ यस्याः तथाभूता, व्रजत्येव न राजानुरोधात् तत्र अतिष्ठदिति एवशब्दव्यवच्छेद्यम् ।

(ख) सुन्दरि ! अत्रापि पूर्व्ववत्सम्बोधनपदप्रयोगतात्पर्य्यमवसेयम् । प्रणयिनि त्वद्विषयकप्रेमयुक्ते अनुरक्ते जने मयीत्यर्थः । निरपेक्षता उपेक्षा न शोभते न युक्ता प्रतिभाति, तथाहि त्वं यथा मां त्वयि अननुरक्तं मन्यसे नाहं तथा, तत्किमिव निष्कारणं मां परिहरसीति भावः ।

(ग) शठ प्रतारक ! अविश्वसनीयः असि तव सर्व्वैव कथा प्रतारणाभिप्रायेण प्रयुक्ता अतस्त्वं यथा मयि प्रणयं ज्ञापयसि स न तथा, अतएव ममापि उपेक्षा शोभत एव इति भावः ।

---

রাজা। (অনুসরণ করিয়া) প্রসন্না হও। (ঙ)

[ইরাবতীর মেখলাবদ্ধ চরণে প্রস্থান]। (ক)

রাজা। সুন্দরি ! প্রণয়িজনে উপেক্ষা শোভা পায় না। (খ)

ইরা। শঠ ! তোমাকে আর বিশ্বাস হয় না। (গ)

इरा। इअं वि हदासा तुमं एव्व अणुसरदि। [ इयमपि हताशा त्वामेवानुसरति। ] ( इति रसनामादाय राजानं ताड़यितुमिच्छति )। (घ)

राजा। वयस्य ! एषा इरावती।—(ङ)

---

२०। अथ रसालापमुखेन प्रतिषेधं वचनं प्रयुङ्क्ते—शठेत्यादि। हे प्रिये ! परिचयवति अतिशयेन परिचिते ! "भूमनिन्दाप्रशंसासु" इत्याद्यनुशासनात् भूमार्थे वन्तुः, मयि शठः प्रतारक इति हेतोः ते तव अवधीरणा अवज्ञा अस्तु, तथाहि मयि सत्यपि अवधीरणाभावप्रयोजके परिचये शठत्वमेव तद्विघटकमस्तु इति कथञ्चित् युक्तम् इति भावः, किन्तु हे चण्डि ! क्रोधनशीले ! चरणपतितया पदलग्नया मेखलया रसनया याचिता अत्र अवस्थानाय प्रार्थितापि तां चरणपतितां मेखलां विसृजसि निराकरोषि तस्या उपरोधमपि न मानयसि इत्यर्थः। तथाहि तस्या उपरोधागणने नास्ति कोऽपि हेतुः तदस्या एव उपरोधं गणयित्वा गमनाद्विरता भवेति भावः। अत्र मेखलायाश्चरणपतनेन याचकरूपे कारणे सत्यपि तत्कार्य्यस्य उपरोधगणनस्य अभावनिबन्धात् विशेषोक्तिः। वृत्तमपरवक्त्रं नाम।

(घ) इयमपि मया चिरं गृहीता एषापि हताशा खलस्वभावा, अथवा हता विनाशिता विनाशोन्मुखी कृता इत्यर्थः। आशा अभिलाषः मम गमनविषयक इत्यर्थः। मया तथाभूता मम अभिलषिते गमने प्रतिबन्धिका इत्यर्थः। त्वामेव अनुसरति तव एव अनुवर्त्तनं करोति, त्वदनुकूलमेव मां प्रवर्त्तयितुं चेष्टते इत्यर्थः। अतएव अहमिमां विसृजामि इति भावः। रसनां मेखलाम् आदाय गृहीत्वा, ताड़यितुं प्रहर्त्तुमिच्छति तया रसनया इति शेषः।

---

রাজা। প্রিয়ে ! আমাকে তুমি বিশেষরূপ জান, অতএব শঠ বলিয়া তিরস্কার কর ! কিন্তু হে কোপনে ! এই যে মেখলাদাম চরণপতিত হইয়া যাচ্ঞা করিতেছে, তাহাকে কিজন্য তিরস্কৃত করিতেছ ? (২০)

ইরা। এই হতাশাও তোমারই অনুসরণ করিতেছে। [ মেখলাগ্রহণপূর্ব্বক রাজাকে প্রহার করিতে উদ্যতা ]। (ঘ)

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादप्युपेक्षाच्युतेन।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम्॥ २१॥

[ अन्वयः। मेघराजी विद्युद्दाम्ना विन्ध्यम् इव बाष्पासारा चण्डी श्रोणीबिम्बात् अपि उपेक्षाच्युतेन हेमकाञ्चीगुणेन मां चण्डं हन्तुम् अभ्युद्यता॥ २१ ]।

---

(ङ) "एषा इरावती" अस्य भागस्य श्लोकस्थेन अभ्युद्यता इत्यनेन कर्त्तृतया अन्वयः।

२१। उपक्रान्तमेवाह—बाष्पेत्यादिना। मेघराजी जलधरमाला विद्युद्दाम्ना विद्युन्मालया विन्ध्यं विन्ध्यपर्व्वतमिव बाष्पाः नयनाम्बूणि आसारा धारासम्पाता इव यस्याः तथाभूता धाराकारेण बाष्पराशिं मुञ्चन्ती बाष्पाणाम् आसारः विस्तारः तद्वती अस्त्यर्थे अप्रत्यय इति वा, चण्डी क्रोधनस्वभावा एषा इरावतीति गद्यस्थमत्रैवान्वेति। श्रोणीबिम्बात् नितम्बस्थलात् उपेक्षाच्युतेन विह्वलतासमुत्पादात् असावधानतया च्युतेन स्खलितेन अपि हेमकाञ्चीगुणेन स्वर्णमयमेखलारज्ज्वा मां चण्डम् अतिकठोरं हन्तुं ताड़यितुम् अभ्युद्यता उद्युक्ता जाता इति शेषः। अपिशब्दाभिप्रायस्तु—यद्यपि इयं काञ्ची स्वस्य असावधानतया स्खलिता तथापि अस्याः मदनुवर्त्तितां सम्भाव्य मदुपरि एतत्क्षेपाय इयम् उद्युक्ता, अहो विह्वलतातिरेक इति! अत्र चण्डी चण्डमिति सकृत्व्यञ्जनसङ्घस्य अनेकधा साम्यात् छेकानुप्रासः। चतुर्थपादे उपमा, बाष्पसारा इत्यस्य समासान्तर्गतोपमार्थव्यत्ययेन श्लेषश्च। चण्डीत्यस्य हननीयत्वे हेतुपरतया काव्यलिङ्गमित्यभिजाताः। आहन्तुमित्यर्थे हन्तुमित्यस्य प्रयोगादमङ्गलप्रतीत्या अश्लीलतादोषः। स च "चण्डाहन्तुं चण्डमभ्युद्यता मा" मित्यादिप्रकारेण समाधेयः। मेघराजी हन्त्येव नतु अभ्युद्यता इति उपमागतभग्नप्रक्रमत्वम्। शालिनी वृत्तम्।

---

রাজা। বয়স্য! এই ইরাবতী।—(ঙ)
ইনি নিতম্ব হইতে উপেক্ষাবশে স্খলিত স্বর্ণকাঞ্চী দ্বারা আমাকে প্রহার

इरा। किं मं एव्व भूओ वि अवरद्धं करेसि ? [किं मामेव भूयोऽपि अपराद्धां करोषि ?] (च)

राजा। (सरसनं हस्तमवलम्बयति।) (छ)

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि।
वर्द्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च ॥२२॥

[अन्वयः। कुटिलकेशि ! त्वम् अपराधिनि मयि किमुद्यतं दण्डं संहरसि विलसितं वर्द्धयसि दासजनाय अत्र कुप्यसि च। २२।]

---

(च) किं कथं भूयः पुनरपि, एतच्च राज्ञा प्रागुपचितम् अवधीरणारूपम् अपराधं समुच्चिनोति। मामेव अपराद्धां सापराधां करोषि "चण्डी चण्डं हन्तुमभ्युद्यता मा" मिति वादेन मय्येव अपराधम् आरोपयसि, तथाहि भवती वचनेन मम कोपस्य अनर्थता, हन्तुमित्यनेन अमङ्गलकारित्वञ्च व्यज्यते, स च मम अपराध इति प्रतिभाति, वस्तुतो नेदमन्याय्यं मया किमपि कृतं येन अन्याय्यतामारोप्य मम सापराधतां स्थापयितुं प्रवृत्तासे इति भावः।

(छ) सरसनं मेखलायुक्तं हस्तम् इरावत्याः इति शेषः। अवलम्बते धारयति, यथा न प्रतिष्ठते अनुनीता च भवति इति भावः।

२२। अनुनयवाचमेव प्रयुङ्क्ते—अपराधिनीत्यादिना। हे कुटिलकेशि ! कुटिल-कुन्तलशोभने ! अस्यायम्भावः—यत् बहिरेव त्वं कुटिलतां प्रकाशयसि ननु अभ्यन्तरेऽपि इति। अपराधिनि अपराधितया निर्द्धारिते इत्यर्थः। ननु सापराधे पूर्वापरवाक्य-सामञ्जस्यभङ्गप्रसङ्गात्। मयि उद्यतं कर्त्तुमायोजितं दण्डं मेखलाप्रहाररूपां शास्तिं

---

করিতে উদ্যত হইয়াছেন। দেখিলে বোধ হয়, মেঘমালা যেন বিদ্যুদ্দাম-সহায়ে বিন্ধ্যগিরিকে প্রহার করিবার উপক্রম করিয়াছে। ঐ দেখ—ইনি নেত্রনীররূপ জলধারা বর্ষণ করিতেছেন। (২১)

ইরা। কি, আমাকে পুনরায় অপরাধিনী করিতেছ ? (চ)

রাজা। (মেখলাযুক্ত হস্ত ধারণ করিয়া।) (ছ)

नूनमिदमनुज्ञातम्। ( इति पादयोः पतति। ) (ज)

इरा। ण क्खु इमे मालविआए चलणा, जा दे हरिसदोहलं पूरइस्सन्ति। [ न खल्विमौ मालविकायाश्चरणौ, यौ ते हर्षदोहदं पूरयिष्यतः ]। (इति निष्क्रान्ता सचेटी। ) (झ)

---

किं कथं संहरसि उपसंहृतं करोषि, तथाहि यो येन अपराधितया निश्चीयते स सति सामर्थ्ये तेन दण्ड्यते इति नियमः, त्वं तद्विपरीतं कथं करोषि इति भावः। एतेन इरावत्या आधिपत्यम् आत्मनि प्रकटय्य चित्तप्रसादः अनुकूलितः भवति। अत्र अस्मिन् प्रकृते विलसितं विलासं कौतुकमित्यर्थः। वर्द्धयसि वृद्धिं नयसि, अथवा विलसितम् ईदृशदशायामपि मयि आनुकूल्यबुद्ध्या विभ्रमं वर्द्धयसि इति दासजनाय अधीनजनाय मह्यं कुप्यसि क्रोधं वहसि च, कोपार्थधातुयोगे चतुर्थी। कोपेऽपि विलासवर्द्धनमिति महदाश्चर्य्यम् उत्पादयसि इति भावः। अत्र विलासवर्द्धनकोपकारणरूपयोः क्रिययोः यौगपद्यात् क्रियासमुच्चयः अलङ्कारः। आर्य्या जातिः।

ज) इदं मम अपराधमार्ज्जनं, मयि आनुकूल्यं वा नूनं निश्चितम् अनुज्ञातम् अनुमोदितं भवत्या इति शेषः। तथाहि उद्यतस्यापि दण्डस्य संहरणदर्शनेन एतदनुमीयते इति भावः।

(झ) इमौ त्वया पतनाधिकरणत्वेन लक्ष्यौ कृतौ एतौ दृश्यमानौ चरणौ पादौ न मालविकायाः मालविकासम्बन्धिनौ भवत इति शेषः। यौ चरणौ ते तव हर्षदोहदं प्रसोदरूपफलविषयकं मनोरथं हर्षजनकं वस्तु वा पूरयिष्यतः सफलीकरिष्यतः। पर्च रचयिष्यतः। सचेटी परिचारिकासहिता।

---

অয়ি কুটিল-কুন্তলে! আমাকে অপরাধী বলিয়া স্থির করিয়াছ। তজ্জন্য আমার প্রতি সমুদ্যত মেখলাপ্রহার-দণ্ড উপসংহার করিতেছ কেন? ইহাতে ত বিলাসবিশেষই বর্দ্ধিত করিতেছ। অথচ মাদৃশ অধীন জনের প্রতি কুপিতাও হইয়াছ ॥২২॥

নিশ্চয়ই এক্ষণে আমার অপরাধ-ক্ষমার আবেদন অনুমোদন করিয়াছ। ( এই বলিয়া পদদ্বয়ে পতন। ) (জ)

विदू। उट्ठेहि. अकिदप्पसादोसि। [उत्तिष्ठ अकृतप्रसादोऽसि।] (ञ)

राजा। (उत्थाय इरावतीमपश्यन्।) कथं गतैव प्रिया? (ट)

विदू। वअस्स! दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा गदा एसा। ता अह्मे सिग्धं अवक्कमाम। जाव अङ्गारओ रासिं विअ अणुवक्कं पड़िगमणं ण करेदि। [वयस्य! दिष्ट्या अनेन अविनयेन अप्रसन्ना गता एषा। तद्वयं शीघ्रमपक्रामामः। यावदङ्गारको राशिमिव अनुवक्रं प्रतिगमनं न करोति। ) (ठ)

---

(ञ) उत्तिष्ठ भूमितलादिति शेषः। न कृतः प्रसादः यस्मिन् तथाभूतः। तथाहि कथम् अनुग्रहलाभाय यतसे न खलु इरावती त्वयि अनुग्रहं कृतवती, परन्तु प्रस्थिता एव इति भावः।

(ट) प्रिया इरावती गता एव प्रस्थिता एव ननु मदनुरोधमपेक्षमाणा स्थिता इति एवशब्दस्यवच्छेद्यम्। कथं प्रश्ने सम्भावनायां वा।

(ठ) अनेन अनुष्ठितपूर्व्वेण अविनयेन मालविकामाश्रित्य दोहदपूरणप्रार्थनादि-रूपेण कुव्यवहारेण अप्रसन्ना असन्तुष्टा एषा इरावती दिष्ट्या भाग्यवशादेव तवेति शेषः। गता अस्मात् स्थानात् अपक्रान्ता। तथाहि तस्या यदितः प्रस्थानं तत् मङ्गलाय एव ते पर्य्यकल्पत, अन्यथा तस्या अत्र स्थितिः अन्यस्मै वा कस्मैचित् महते अनर्थाय अकल्पिष्यत इदानीन्तु निर्ब्बाधमेव वर्त्तितुं पारयेथा इति भावः। तत् तस्मात् वयं आवामिति यावत्, शीघ्रं कालविलम्बमकृत्वा एव अपक्रामामः अपसरामः 'अस्मदो द्वयश्च' इति बहुवचनम्। अन्यथा परतः सा आगत्य वा अनिष्टान्तरमुपपादयेत्। यावत्

---

ইরা। ইহা মালবিকার চরণ নহে যে, তোমার আনন্দজনক অভিলাষ পূরণ করিবে। (এই বলিয়া চেটীর সহিত নিষ্ক্রমণ।) (ঝ)

বিদূ। উত্থান করুন। আপনি উহাকে প্রসন্না করিতে পারিলেন না। (ঞ)

রাজা। (উত্থানপূর্ব্বক ইরাবতীকে দেখিতে না পাইয়া) তবে কি প্রিয়া নিশ্চয়ই গমন করিয়াছেন? (ট)

রাজা। अहो ! मदनस्य वैषम्यम् ! (ड)

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥ २३ ॥

[ अन्वयः । प्रियाहृतमनाः तस्याः प्रणिपातलङ्घनं सेवां मन्ये एवं सा कुपिता प्रणयवती उपेक्षितुं नहि शक्यम । २३ । ]

यत्कालान्तरे अङ्गारकः मङ्गलग्रहः राशिं मेषादीनामन्यतमम् इव अनुवक्रं कुटिलभावेन प्रतिगमनं प्रतिकूलगतिं न करोति नाश्रयति । तथाहि यथा मङ्गलग्रहो वक्रभावमाश्रित्य राशिविशेषं गच्छन् महदनिष्टमुपपादयति तथा इयमपि वक्रा सती धारिणीप्रभृतिषु प्रकृतं वृत्तं निवेद्य यथा अत्र आगत्य प्रमाणेन तव सापराधतानिश्चयं न कर्त्तुमर्हति तथा कर्त्तव्यमिति भावः । उपमालङ्कारः । 'इमस्स अविनयस्स' इत्यत्र तृतीयार्थे विदूषकप्राकृतभाषायां षष्ठी प्रयुज्यते । अनुशासनञ्च "षष्ठी प्रायेण" इति । अनुवक्रमित्यत्र अनुशब्दं पृथक्कृत्य राशिमिति द्वितीयोपपादनं साधु ।

(ड) अहो आश्चर्य्यं, मदनस्य कामस्य वैषम्यं विषमभावः ।

२३ । मदनवैषम्यमेव प्रतिपादयति—मन्य इत्यादिना । प्रियया प्रियतमया मालविकया हृतम् आयत्तीकृतं मनः अन्तःकरणं यस्य तथाभूतः मालविकायामतिमात्रमासक्तहृदयः अहमित्यर्थः । तस्याः इरावत्याः प्रणयिन्या अपि प्रणिपातलङ्घनं पादपतनरूपानुनययुक्तं क्रमं सेवाम आनुकूल्यविधानमेव मन्ये सम्भावयामि । तथाहि मयि चरणपतिते सति यत् सा मामुपेक्ष्य अबाधं गता तत् अवश्यं मम अनभिमतियोग्यम् अपमानकरञ्च, तथापि तत्प्रस्थानेनैव मालविकाविलासभोगस्य सौकर्य्यबोधात् तदतिमात्रमभिमतमेव जानामि इति भावः । अर्थान्तरमपि अत्र एवं सम्भवति—यथा

বিদূ। বয়স্য! ভাগ্যবশতই এই অবিনয়ব্যবহারে অসন্তুষ্টা হইয়া ইনি এস্থান হইতে প্রস্থান করিলেন। অতএব বক্রতাপ্রাপ্ত মঙ্গল-গ্রহের রাশ্যন্তরগমনের ন্যায় তাঁহার পুনরাগমনের পূর্ব্বেই আমরা সত্বর এস্থান হইতে প্রস্থান করি।

রাজা। অহো! কামের কি বিষম ব্যবহার! (ড)

[ इति निष्क्रान्तः सह वयस्येन। ] (ढ)

## इति तृतीयोऽङ्कः ॥ ३

---

प्रियया इरावत्या हृतं पूर्व्वम् आकृष्टं मनः यस्य तथाभूतः इतः पूर्व्वं तव सुतरामासक्तः अपि प्रणिपातलङ्घनं सेवां मन्ये। परे तु तदासक्तमनस्त्वमेव अपमानस्य सेवात्वग्रहे प्रयोजकं व्याचक्षते। एवम् अतिमात्रं प्रणयवती प्रेमशालिनी सा इरावती कुपिता जातक्रोधा क्रोधेन कृतमत्प्रणिपातलङ्घना इत्यर्थः। उपेक्षितुं परिहातुं शक्यम्, शकेरव धात्वर्थमात्रकर्म्मकत्वस्वीकारात् "शक्यमरविन्दसुरभित्व" मित्यादिवत् सामान्यतो वा क्लीवत्वम्। तथाहि यदि इरावती कुपिता कृतमत्प्रणिपातलङ्घना च नाभविष्यत् तदा कमिव दोषं व्याजीकृत्य इमां परिहाय मालविकायामासक्तोऽभविष्यम्, इदानीं तु कुपितया तया स्वतःसङ्गतये नोपस्थातव्यमिति सुकरमेव मालविकासङ्गतिसाधकोपायपरिचिन्तनादिकमपि इति भावः। अत्र प्रतिकूलस्य प्रणिपातलङ्घनस्य अनुकूलतया परिणमनात् अनुकूलालङ्कारः। 'एवं प्रणयवती सा नहि शक्य'मिति क्वचित् पाठः। अत्र निपुणवीक्षणेन अर्थान्तरमप्युपतिष्ठते, तत्तु विस्तृतिभयात् त्यक्तम्। आर्य्या जातिः।

(ढ) इतिशब्दः अवसानसूचकः। वयस्येन विदूषकेण सह सहार्थे तृतीया। निष्क्रान्तः राजा इति पूर्व्वपदार्थेनान्वयः। एतदन्तः गर्भसन्धिः।

इति मालविकाग्निमित्रव्याख्याने विजयाख्याने तृतीयोऽङ्कः ॥ ३

---

দেখ! প্রিয়াতেই আমি মন অর্পণ করিয়াছি। তজ্জন্য আমি প্রণিপাতপূর্ব্বক পরিচর্য্যা করিলাম। কিন্তু তিনি তাহা গ্রাহ্য করিলেন না। ইহা আমার পক্ষে সুবিধাজনকই হইয়াছে বলিয়া আমার মনে হইতেছে। অতিমাত্র প্রেমশালিনী ইরাবতী কুপিতা হইয়া আমার প্রণিপাতাদি গ্রাহ্য না করিয়া প্রস্থান করাতে তাঁহাকে উপেক্ষা করা সহজসাধ্য হইয়াছে ॥২৩॥

[ বিদূষকের সহিত সকলের নিষ্ক্রমণ। ] (ঢ)

তৃতীয় অঙ্ক ॥ ৩

---

# चतुर्थोऽङ्कः ।

( ततः प्रविशति पर्य्युत्सुको राजा प्रतीहारी च । ) (क)

राजा । ( आत्मगतम् । )

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
सम्प्राप्तायां नयनविषयं रूढ़रागप्रवालः ।
हस्तस्पर्शैः कुसुमित इव व्यक्तरोमोद्गमत्वात्
कुर्य्यात् कान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥

[ अन्वयः । श्रुतिपथगतां ताम् आश्रित्य आशया बद्धमूलः नयनविषयं सम्प्राप्तायां रूढ़रागप्रवालः हस्तस्पर्शैः व्यक्तरोमोद्गमत्वात् कुसुमित इव मनसिजतरुः मां फलस्य कान्तं रसज्ञं कुर्य्यात् । १ । ]

---

(क) ततः यवनिकापसारानन्तरम् । पर्य्युत्सुकः मालविकाप्रणयोत्कण्ठितः । राजा अग्निमित्रः ।

१ । उत्कण्ठामेव व्यनक्ति—तामित्यादिना । श्रुतिपथगतां वसुलक्ष्म्या मालविकाचित्रदर्शनवेलायां तत्त्वेन श्रावितां तां मालविकाम् आश्रित्य अधिकृत्य आशया तद्विषयकमनोरथेन तदीयमिलनाकाङ्क्षया वा इत्यर्थः । बद्धमूलः जातप्ररोहः अङ्कुरित इति भावः । परतश्च नयनविषयम् अक्षिगोचरतां सम्प्राप्तायां लब्धवत्यां सत्यां चाक्षुषविषयीभूतायामित्यर्थः । अभिनयकलाप्रदर्शनावसरे इति भावः । रूढ़ः अङ्कुरितः रागः अनुराग एव प्रवालः पल्लवः यस्य तथाभूतः अनुरागरूपपल्लवयुक्त इत्यर्थः । हस्तस्पर्शैः तृतीयाङ्के वकुलावलिकया स्वेन सह पातितायाः मालविकाया उत्थापनवेलायां जातैः करसम्पर्कैः तदीयाङ्गे इति भावः । व्यक्तः प्रकाशं गतः दृष्टिलक्ष्यतामाश्रित

---

[ অনন্তর নিতান্ত উৎকণ্ঠিত রাজা ও প্রতিহারীর প্রবেশ । ] (ক)

(प्रकाशम्।) सखे! गौतम! (ख)

---

इत्यर्थः। रोमोद्गमः रोमाञ्चः यस्य तस्य भावः तस्मात् उद्गतरोमकत्वादित्यर्थः। कुसुमितः पुष्पित इव फलतः कदम्बपुष्पयुक्तत्वादिसम्भावनं गम्यते। मनसिजतरुः कामवृक्षः फलस्य प्रसवस्य सङ्गत्यादिनिष्पाद्यसुखादिरूपेष्टकार्य्यस्य च कान्तं फलाकाङ्क्षिणं मां रसज्ञं रसस्वादाभिज्ञं मालविकाविषयकशृङ्गारफलानुभवकारिणमित्यर्थः। माधुर्य्यरसाभिज्ञञ्चार्थः। कुर्य्यात् विदध्यात्। तथाहि ममायं कामी यां मालविकामाश्रित्य हृदि सञ्जातसम्पदः तस्याः सङ्गमेन कामतृप्तिर्मे भवतु नान्यत् किमपि आकाङ्क्षाविषय इदानीमिति भावः। अत्र मनसिजे तरुत्वस्य आरोपो रागे प्रवालत्वारोपहेतुः इति परम्परितं, सुखादिरूपेष्टकार्य्यात्मकफले च प्रसवात्मकफलत्वस्य शृङ्गाररसे माधुर्य्यरसत्वस्य च श्लेषेणारोपप्रत्ययात् श्लिष्टरूपकञ्च, आशायां मूलत्वारोपप्रत्ययात् व्यधिकरणरूपकञ्च। प्रोक्तमनसिजतरौ च कुसुमितत्वसम्भावनाया इवशब्देन व्यञ्जनात् उत्प्रेक्षापि इत्यङ्गाङ्गिभावसङ्करः। "प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे" इति विश्वः। "कान्तो रम्ये प्रिये यावत्यि कान्ता प्रियङ्गुयोषितो" रिति हेमः। हस्तस्पर्शैरिति बहुवचनम् एकस्यापि स्पर्शस्य बहुतरस्पर्शजन्यसुखसम्पादकताभिज्ञानेन बहुत्वमभिप्रेत्य। सात्त्विकभावेन कम्पेन वियुज्य वियुज्य बहुस्पर्शा वस्तुत एव जाता इति वा।

(ख) तत्र अनुपस्थितस्यापि गौतमस्य उपस्थितत्वबोधेन राज्ञो विदूषकसम्बोधनमिदं महदेव वैमनस्यं व्यनक्ति, तच्च प्रकृते मालविकार्थमत्युत्कण्ठामिव परिचाययति।

---

রাজা। (আত্মগত) কামরূপ তরু মালবিকার কথা মাত্র শ্রবণ করিয়া প্রথমে মিলনাশায় অঙ্কুরিত এবং পরে তিনি নয়নপথে পতিত হইলে, অনুরাগরূপ পল্লবযুক্ত ও তদনন্তর করস্পর্শ দ্বারা রোমোদ্গম হওয়াতে, উহা যেন কুসুমিত হইয়াছিল। অধুনা, উহা আমাকে স্বকীয় ফলের কামনাযুক্ত ও রসজ্ঞ করিবে ॥১॥

(প্রকাশ্যে) সখে গৌতম! (খ)

प्रती। जेदु जेदु भट्टा। असस्सिहिदो गोदमो। [जयतु जयतु भर्त्ता। असन्निहितो गौतमः।] (ग)

राजा। (आत्मगतम्)। आः! मालविकावृत्तान्तज्ञानाय मया प्रेषितः। (घ)

(प्रविश्य विदूषकः।) जेदु जेदु भवम् [जयतु जयतु भवान्]। (ङ)

राजा। जयसेने! जानीहि तावत्,—क्वासौ देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति। (च)

---

(ग) गौतमः भवत्सम्बोधनविषयः तदाख्यः विदूषकः असन्निहितः अत्र अनुपस्थितः तत् कथमिव तम् आमन्त्रयसे इति भावः।

(घ) आः स्मरणे। मालविकायाः मत्प्रियायाः वृत्तान्तस्य वर्त्तमानव्यापारस्य ज्ञानाय अवगतये मया प्रेषितः नियुक्तः। तथाहि अहं मालविकां संश्रित्य एतावदवस्थान्तरं गतोऽस्मि सा तु कथमित्यवगत्य मां विज्ञापय इति नियुक्त इति भावः। आ इति निजविस्मृतिजनितदुःखावेदकं वा इति केचित्।

(ङ) जयतु जयतु उत्कर्षेण वर्त्तताम्। एतच्च राजोपस्थाननियमेन कथितम्।

(च) जयसेना इति प्रतीहार्य्या नाम, तत्सम्बोधनम्। क्व कस्मिन् स्थाने। सरुजचरणत्वात् वेदनार्द्दितपादत्वात्, दोलापरिभ्रष्टाया देव्याः पादवेदनायाः उत्पत्तेः। विनोद्यते परिचर्य्यते परिजनेनेति शेषः। मालविकामाश्रित्य वाक्यावतारणे प्रतीहार्य्या प्रतिबन्धकत्वमिति प्रतीहारीमन्यत्र गमयितुमेषा राज्ञः प्रवृत्तिरिति मन्तव्यम्।

---

প্রতী। জয় হউক, জয় হউক মহারাজ। গৌতম ত নিকটে নাই। (গ)

রাজা (আত্মগত) ওঃ, মালবিকার বৃত্তান্ত জানিবার জন্য তাহাকে পাঠাইয়াছি। (ঘ)

(বিদূষকের প্রবেশ।) বিদূ। আপনার জয় হউক, জয় হউক। (ঙ)

রাজা। জয়সেনে! দেবী ধারিণী চরণে আহত হইয়া কোথায় পরিচারিকার সেবা দ্বারা বিনোদিতা হইতেছেন,—জানিয়া আইস! (চ)

प्रती। ऊं देवो आणवेदि। [यत् देव आज्ञापयति।] (इति निष्क्रान्ता।) (छ)

राजा। गौतम ! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ? (ज)

विदू। जो बिड़ालग्गिहीदाए परहुदिआए। [यो बिड़ालगृहीतायाः परभृतिकायाः।] (झ)

राजा। (सविषादम्।) कथमिव ? (ञ)

---

(छ) देवः महाराजः यत् आज्ञापयति आदिशति तदेव करोमि इति शेषः।

(ज) अत्रभवत्याः मया प्रीतिनिधानतया अभ्यर्हणीयायाः ते तव सख्याः मालविकायाः को वृत्तान्तः कीदृशी अवस्था, अपि यथाहं तस्यामनुरागेण विकारं गतवान् सापि तथा इति प्रश्नार्थः।

(झ) विड़ालेन मार्ज्जारेण गृहीतायाः आक्रान्दितायाः हिंसनबुद्ध्या धृतायाः इत्यर्थः। परभृतिकायाः कोकिलायाः यः वृत्तान्तः भवतीति शेषः। अत्र परभृतिकापदं मालविकायाः पराधीनतां व्यनक्ति। स एव वृत्तान्तस्तस्या जात इति तात्पर्य्यम्। स च वृत्तान्तः परत एव व्यक्तीभवति। अत्र विड़ालगृहीतायाः परभृतिकायाः यथा अवस्था भवति तथा इति साद्दृश्ये वाक्यपर्य्यवसानात् निदर्शना इति वदन्ति। परभृता एव परभृतिका इति अनुकम्पार्थे कप्रत्ययः। "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः। स्त्रियामाप्।

(ञ) सविषादं प्रियाया मालविकाया विपदाशङ्कया, आत्मनोऽभिप्रेतस्य व्याघातशङ्कया च विषण्णभावेन इत्यर्थः। कथमिव कीदृशो वृत्तान्तः स्पष्टं कथ्यताम् इति भावः।

---

প্রতী। যে আজ্ঞা মহারাজ। (এই বলিয়া নিষ্ক্রমণ)। (ছ)

রাজা। গৌতম! তোমার সখী মাননীয়া মালবিকার অবস্থা কিরূপ? (জ)

বিদূ। বিড়ালগৃহীতা কোকিলার যেরূপ অবস্থা হয়, তাঁহারও তদ্রূপ হইয়াছে। (ঝ)

রাজা। (সবিষাদে) কিরূপ? (ঞ)

विदू। **सा क्खु तवस्सिणी ताए पिङ्गलक्खीए सारभण्डभूघरए गुहाए विअ णिक्खित्ता।** [ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्ड-भूगृहे गुहायामिव निक्षिप्ता । ] (ट)

राजा। **ननु मत्सम्पर्कमुपलभ्य ? (ठ)**

विदू। **अधइं ।** [ अथकिम । ] (ड)

राजा। **क एवं विमुखोऽस्माकं, येन चण्डीकृता देवी ? (ढ)**

---

(ट) सा खलु तपस्विनी वराकी शोच्या इति यावत्, मालविका तया भवता विदितपूर्व्वया पिङ्गलाक्ष्या तदाख्यया देवीपरिचारिकया पिङ्गलाचविड़ालीतुल्यया इति वा, यद्द्वा पिङ्गलाक्ष्या रक्तनयनया क्रोधोद्दीपितया इति शेषः, देव्या धारिण्या; सारभाण्डे धनाधारभूते भूगृहे धरागर्भान्तर्व्वर्त्तिनि कोषागारे गुहायां पर्व्वतदरीगृहे इव निक्षिप्ता स्थापिता सारभाण्डेत्यनेन तस्य गृहस्य सुरक्षितत्वं सातिशयनिरुद्धत्वञ्च व्यक्तम्, एतदेव मालविकायाः शोच्यत्वे हेतुः । "व्रतिशोच्यौ तपस्विनौ" इति विकाण्डशेषः । "श्रेष्ठे स्थाम्नि धने शुल्के सार" इति कोषलभ्यः सारशब्दस्य धनार्थः । गुहायामिव इत्युपमा सा च प्रोक्तभूगृहस्य अन्धकारमयत्वं व्यनक्ति ।

(ठ) ननुः प्रश्ने । मत्सम्पर्कं मम सम्बन्धं मया सह मालविकायाः सङ्गतिम् उपलभ्य विज्ञाय किं मालविका भूगृहे निक्षिप्ता इति प्रश्नार्थः । तथाहि किम् इरावत्या उपलक्षितः मया सह मालविकायाः सम्बन्ध एव तस्या निरोधे बीजमिति भावः ।

(ड) अथकिम् इदमित्थमित्यर्थः । त्वत्सम्पर्कोपलम्भ एव तन्निरोधे हेतुरिति भावः ।

(ढ) कः जनः एवम् अस्माकं सम्पर्के विमुखः प्रतिकूलः येन जनेन देवी राज्ञी धारिणी चण्डीकृता क्रुद्धभावं नीता ।

---

বিদূ। সরলা মালবিকা সেই পিঙ্গলাক্ষী কর্ত্তৃক পর্ব্বতের গুপ্ত-গুহার ন্যায় ভূগর্ভস্থিত কোষাগারে নিক্ষিপ্তা হইয়াছেন। (ট)

রাজা। তবে কি আমার সম্পর্ক উপলব্ধি করিয়া? (ঠ)

বিদূ। তা বৈ কি? (ড)

विदू। सुणादु भवं। परिव्वाजिआए मे कहिदं। ह्यिओ किल तत्तभोदी इरावदी रुअक्कन्तचलणां देवीं सुहं पुच्छिदुं आअदा। [शृणोतु भवान्। परिव्राजिकया मे कथितम्। ह्यः किल तत्रभवती इरावती रुजाक्रान्तचरणां देवीं सुखं प्रष्टुमागता। (ण)

राजा। ततस्ततः? (त)

विदू। तदो सा देवीए पुच्छिदा—किस्स ओलोइदो वल्लहजणो त्ति? ताए उत्तं—मन्दो वो उवआरो। जं परिजणे संक्कन्तं वल्लहत्तणं ण जाणीअदि—[ततः सा देव्या पृष्टा। किन्नु अवलोकितो वल्लभजन इति? तयोक्तम्—मन्दो व उपचारः। यत् परिजने संक्रान्तं वल्लभत्वं न ज्ञायते] (थ)।

---

(ण) परिव्राजिकया पण्डितकौशिक्या मे कथितम्। कथनार्थधातुयोगे षष्ठी। ह्यः गते दिवसे। रुजया पादवेदनया आक्रान्तौ आश्रितौ चरणौ पादौ यस्याः तथाभूतां पादवेदनाभिभूतां देवीं राज्ञीं धारिणीं सुखम् अनामयं प्रष्टुम् आगता उपस्थिता, "देवि अपि सुखौ ते चरणौ" इति प्रष्टुं प्रस्थिता इरावती इत्यर्थः।

(त) ततस्तत इति सातिशयाग्रहसूचकः प्रश्नः। प्रयोजनातिशय्ये वीप्सा।

(थ) सा इरावती देव्या धारिण्या पृष्टा वक्ष्यमाणमिति शेषः। वल्लभजनः प्रियजनः आर्य्यपुत्र इत्यर्थः। आलोकितः दृष्टः किम्? तया इरावत्या उक्तं कथितं वक्ष्यमाणमिति शेषः। वः युष्माकम् उपचारः आरोपज्ञानं वल्लभत्वायोग्येऽपि वल्लभव्यवहार इत्यर्थः। मन्दः कुत्सितः, तथाहि राजा युष्माकं न वल्लभस्तथापि वल्लभत्वज्ञानं तव

---

রাজা। কে আমাদের প্রতি এরূপ বিমুখ হইল, যে দেবীর ক্রোধ সমুৎপাদন করিল? (ঢ)

বিদূ। শ্রবণ করুন। পরিব্রাজিকা আমাকে কহিয়াছেন। গত কল্য দেবীর চরণে আঘাত লাগিয়াছে, ভাল হইয়াছে কি না,—মাননীয়া ইরাবতী তাহা জিজ্ঞাসা করিতে আসিয়াছিলেন। (ণ)

রাজা। তার পর, তার পর? (ত)

রাজা। নির্ভেদাদৃতেঽপি মালবিকায়ামযমুপন্যাসঃ শঙ্কয়তি। (দ)

বিদূ। তদো তাএ অণুখিজ্জমাণা সা ভবদো অবিণঅং অন্তরেণ পরিগদত্থা কিদা। [ ততস্তয়া অনুখিদ্যমানা সা ভবতোঽবিনয়মন্তরেণ পরিগতার্থা কৃতা। ] (ধ)

---

কথমিব প্রশস্তং স্যাদিতি ভাবঃ। তদেব কারণমুপন্যস্যতি—যদিত্যাদিনা। পরিজনং পরিচারভূমিকাং গতে জনে মালবিকারূপে ইতি তাৎপর্য্যম্‌। বল্লভত্বং প্রিয়ত্বং রাজ্ঞ ইতি শেষঃ। ন জ্ঞায়তে যুষ্মাভিরিতি শেষঃ। তথাহি রাজা যুষ্মাসু প্রণয়ং পরিত্যজ্য কস্মিংশ্চিৎ পরিজনে বদ্ধপ্রণয়ী জাতঃ তৎকথমিব স বল্লভো ভবেদিতি ভাবঃ। অত্র কিং অত্তণো—ইত্যত্র কিং অত্তণো বি অণলংকিদো হিঅঅজণো বল্লহোত্তি। তদো তাএ উত্তম্ভন্তীএ মন্তিদম্‌ কুদো বা তবস্সারী জং পরিঅণে সংকন্তং বল্লহত্তণং জানিস্সদি ইতি পাঠঃ ক্বচিৎ।

(দ) নির্ভেদাত "মালবিকায়াম্‌ অহং সুতরাং অনুরক্ত" ইত্যেবংবিধস্য বাক্যার্থস্য প্রকাশনাৎ ঋতেঽপি যদ্যপি ইরাবতী মালবিকাগতং মম প্রণয়ং নাবেদিতবতী তথাপীত্যর্থঃ। মালবিকায়াং তামেবাশ্রিত্য ইত্যর্থঃ। অয়ং পরিজনত্বেন উপক্ষিপ্তঃ উপন্যাসঃ বাগ্‌বিন্যাসঃ শঙ্কয়তি সম্ভাবয়তি। তথাহি মালবিকামেব লক্ষ্যীকৃত্য ইরাবতী ইদং বচনং প্রযুক্তবতীতি সম্ভাব্যত ইতি ভাবঃ। অন্যস্মিন্‌ পরিজনে মমাসংক্রান্তচিত্তত্বাৎ মালবিকয়া সহ মম অবিনয়স্য ইরাবত্যা প্রত্যক্ষীকরণাচ্চ উপন্যাসে তদ্বিষয়কত্বমেব সম্ভাব্যম্‌।

(ধ) ততঃ তদনন্তরং রাজ্ঞঃ পরিজনসংক্রান্তচিত্তত্বজ্ঞাপনানন্তরমিত্যর্থঃ। তয়া·

---

বিদূ। অনন্তর দেবী তাহাকে জিজ্ঞাসা করিলেন,—প্রাণবল্লভ আর্য্যপুত্রকে দেখিয়াছ কি? তখন ইরাবতী কহিলেন,—আর আপনাদের তাঁহার উপর বল্লভত্ব আরোপ শোভা পায় না। এদিকে যে তাঁহার বল্লভত্ব পরিজনে সংক্রমিত হইয়াছে এ সংবাদ আপনারা রাখেন না। (থ)

রাজা। সমস্ত ব্যাপার স্পষ্টরূপে প্রকাশিত না হইলেও ইরাবতীর এইরূপ উক্তি সেই মালবিকার সম্বন্ধেই আশঙ্কা উৎপাদন করিতেছে। (দ)

राजा। अहो! दोर्घरोषता तत्रभवत्याः। अतःपरं कथय। (न)

विदू। किं अदो वरं? मालविआ वउलाबलिआ अ णिअल-पदोओ अदिट्टसुज्जपाए पादालबासं णाअकस्सआओ बिअ अणुहोन्ति। [किमतः परं? मालविका वकुलावलिका च निगड़पद्यौ अदृष्ट-सूर्य्यपादे पातालवासं नागकन्यके इवानुभवतः।] (प)

---

इरावत्या अनुखिद्यमाना सन्तप्यमाना देवी धारिणी भवतः अविनयम् अन्याय्यव्यवहार-ताम् अन्तरेण परिगतार्था ज्ञातवृत्तान्ता कृता। तथाहि "अस्मिन् विषये राज्ञः कोऽपि दोषो नास्ति केवलं दुर्भगा मालविका एव कुविभ्रमपरायणा एवं राजानं मोहितवती" इत्येवं मालविकाया एव दोषमावेदितवतीति भावः।

(न) अहो आश्चर्य्यं, तत्रभवत्याः इरावत्याः दीर्घरोषता सातिशयक्रुद्धता। एता-वतापि कालेन तत्कोपस्यापरिहारात् येन देवी विरुद्ध' ज्ञापिता इति भावः। अतःपरम् एतदनन्तरजातं वस्तु कथय।

(प) किम् अतःपरम्, एतदनन्तरं किमिव अन्यत् जायतामिति भावः। निगड़ेन शृङ्खलेन बद्धौ पादौ ययोः ते निगड़बद्धचरणे कृत्वा इति शेषः। अदृष्टसूर्य्यपादे सूर्य्यकरस्पर्शशून्ये अन्धकारमये प्रदेशे स्थापिते नागलोककन्यके नागदुहितराविव पातालवासं भूगर्भवासम् अनुभवतः। तदनन्तरमेव ते गभीरं भूगर्भस्थम् अन्धकारमयं कोषागारम् उपनीय शृङ्खलाबद्धपादे स्थापिते इति भावः। "पादा रश्म्यङ्घ्रितुर्य्यांशा" इत्यमरः।

---

বিদূ। অনন্তর ইরাবতী, কেবল আপনার দুর্ব্যবহারের উল্লেখ না করিয়া সমস্ত ব্যাপারই দুঃখিতা দেবীকে বিদিত করিলেন। (ধ)

রাজা। আহা! দেবী অতিমাত্র রুষ্টা হইয়াছেন। অতঃপর কি হইল—বল। (ন)

বিদূ। আর কি বলিব! মালবিকা ও বকুলাবলিকা উভয়ে এখন

राजा । कष्टं कष्टम् । (फ)

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥

[ अन्वयः । मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ प्रबलपुरोवातया अकालवृष्ट्या कोटरं गमिते । २ ।]

---

(फ) कष्टं कष्टम् आधिक्ये द्विर्वचनम् । आधिक्यञ्च मालविकायाः प्रियायाः कष्टपतनात् ।

२ । अथ कष्टकारणमेव व्यनक्ति—मधुरेत्यादिना । मधुरः श्रुतिसन्तर्पणः स्वरः ध्वनिः यस्याः तथाभूताः एतेन मालविकायाः सङ्गीतमाधुर्य्यस्मरणमभिव्यज्यते । परभृता कोकिला अत्रापि पूर्ववत् परभृताशब्दतात्पर्य्यमवसेयम् । भ्रमरी मधुकरी च विबुद्धस्य मुकुलितस्य चूतस्य रसालस्य सङ्गः सम्पर्कः विद्यते ययोः ते तदवस्थया वर्त्तमाने इत्यर्थः । प्रबलः उत्कटः पुरोवातः पूर्व्ववर्त्ती वायुः यस्याः तया अकालवृष्ट्या आकालिकवर्षासम्पातेन कोटरं वृक्षादिलग्नं विवरं गमिते प्रापिते । तथाहि यथा चूतमुकुलरसपानाय चूतलग्ने भ्रमरीपरभृते दैवात् कालेन अकालवृष्टिभिः पवनविक्षोभैश्च ताड़िते कोटरमेव प्रविश्य ते तथैव प्रकृते मालविका वकुलावलिका च मत्सम्पर्कभोगाय स्थिते सहसा देव्या भूगर्भमेव नीते इति इत्थमेव समादप्रस्तुतात् समस्य प्रस्तुतस्य प्रत्ययात् अप्रस्तुतप्रशंसालङ्कारः । विना प्रबलवातविक्षोभं यथाकालं जाता वृष्टिः न तथा उत्कटा भवति यथा वहिरवस्थातुमशक्ततया कोटरगतत्वमेव स्यात् भ्रमरीपरभृतयोरिति अकालवृष्ट्या प्रबलपुरोवातयेति च विशेषेण निर्द्देशः । आर्य्या जातिः ।

---

নিগড়বদ্ধচরণা ও অদৃষ্টসূর্য্যকিরণা হইয়া, নাগকন্যাদ্বয়ের ন্যায় পাতালবাস অনুভব করিতেছে। (প)

রাজা। কি দুঃখ, কি দুঃখ। (ফ)

মধুরভাষিণী কোকিলা ও ভ্রমরী উভয়ে বিকসিত চূতবৃক্ষের সংসর্গে অবস্থিতি করিত। এখন প্রবলপ্রতিকূলবায়ুসহকৃতা অকালবৃষ্টি তাহাদিগকে কোটরমধ্যে প্রবেশিত করিয়াছে। ২॥



अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ? (ब)

विदू। कहं भविस्सदि, जं सारभाण्डघरए वावुदा माहविआ देवीए संदिट्टा,—मह अङ्गुलीअअमुद्दं अदेक्खिअ ण मोत्तव्वा मालविआ बउलावलिआ अ त्ति ? [ कथं भविष्यति ? यत् सारभाण्ड-गृहके व्यापृता माधविका देव्या सन्दिष्टा, मम अङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या मालविका बकुलावलिका च इति । ] (भ)

राजा। ( निश्वस्य सपरामर्शम् । ) सखे ! किमत्र कर्त्तव्यम् ? (म)

---

(ब) अपिः प्रश्ने । अत्र अस्मिन् विषये मालविका-बकुलावलिकयोः ईदृशे दशा-सन्निपाते कस्यचित् उपक्रमस्य उपायस्य गतिः विषयः स्यात् ? तथाहि मालविकाया बकुलावलिकायाश्च अस्या विपद उद्धारविषये कश्चित् उपायं परिचिन्तयस्व इति भावः ।

(भ) कथं केन प्रकारेण भविष्यति कापि गतिरिति शेषः । अपितु न कापि गतिरत्र सम्भविष्यतीति भावः । तत्रैव हेतुमाह—यदित्यादिना । सारभाण्डगृहके कोषागारे व्यापृता नियुक्ता माधविका तदाख्या देव्याः परिचारिका देव्या धारिण्या सन्दिष्टा आज्ञप्ता, किमित्याह—ममेत्यादि । अङ्गुलीयकमुद्राम् अङ्गुरीयकचिह्नं मम नामाङ्कित-मङ्गुरीयकम् इत्यर्थः । अदृष्ट्वा अनालोक्य न मालविका मोक्तव्या विगतबन्धना कर्त्तव्या, अनेन वाक्येन अन्वयव्यतिरेकतः देव्या अङ्गुलीयकमुद्रादर्शनमेव मालविका-बकुलावलिकयोः मोचने हेतुरित्यायाति, तच्च असम्भवमिव अस्मासु प्रतिभातीति मालविकाबकुलावलिकयोः मोचनं दुष्करमेवेति भावः ।

(म) सपरामर्शं प्रकृतविषयमाश्रित्य चिन्तासहकारेण इत्यर्थः । अत्र अस्मिन्

---

এবিষয়ে কি কোনপ্রকার উপায় সম্ভাবিত হইতে পারে ? ( ব )

বিদূ। কিরূপে হইবে ? যেহেতু দেবী কোষাগারে নিযুক্তা মাধবিকাকে আদেশ করিয়াছেন,—আমার নামাঙ্কিত অঙ্গুরীয়ক না দেখিলে তুমি মালবিকা ও বকুলাবলিকাকে মুক্তি দিও না। ( ভ )

বিদূ। (বিচিন্ত্য।) অত্থি এত্থ উবাও। [অস্ত্যত্র উপায়:]। (য)

রাজা। কো উণ? (র)

বিদূ। (সদৃষ্টিক্ষেপম্।) কোবি অদিট্ঠো সুণিস্সদি, কপ্পে দে কহেমি। (ইত্যুপশ্লিষ্য কর্ণে) এব্বং বিঅ। [কোঽপ্যদৃষ্ট: শ্রোষ্যতি, কর্ণে তে কথয়ামি। এবমিব] (ইত্যাবেদয়তি)। (ল)

---

বিষয়ে কিং কর্ত্তব্যং বিধেয়ম্। কর্ত্তব্যজ্ঞানশূন্য: সংবৃত্তোঽস্মি ইতি ত্বমেব কর্ত্তব্যমবধারয় ইতি ভাব:।

(য) অত্র অস্মিন্ মালবিকাবকুলাবলিকয়ো রুদ্ধারবিষয়ে উপায়ং অস্তীতি শেষ:।

(র) ক: কীদৃশ: উপায়: অস্তীতি শেষ:।

(ল) সদৃষ্টিক্ষেপম্ ইতস্ততো দৃষ্টিপাতেন সহ অদৃষ্ট: অগোচরে স্থিত: কোঽপি জন: শ্রোষ্যতি আকর্ণয়িষ্যতি উচ্চৈ: কথ্যমানমুপায়মিতি শেষ:। অতএব নীচৈ: কথয়েয়মিতি ভাব:। তে তব কর্ণে কর্ণসমীপে অস্ফুটস্বরেণ ইতি ভাব:। কথয়ামি। উপশ্লিষ্য কর্ণসমীপে মিলিতো ভূত্বা, এবমিব ইতি অস্ফুটমুক্তস্য বিষয়স্য প্রকারনির্ব্বচনপরম্। তচ্চ বচনম্ অন্যশ্রবণাশঙ্কয়া এব অস্ফুটমুক্তমিতি ন সাধারণৈ: শ্রূয়তা, তদীদৃশং যথা "অহং সর্পেণ দষ্ট:, তচ্চ অঙ্গুরীয়কং নাগমুদ্রাসনাথং স্পর্শমাত্রেণ বিষবেগাপনোদকমতো দেবী যাচিতা এব দাস্যতি তদাদায় চ তয়োর্ম্মোচনং কর্ত্তব্য"মিতি।

---

রাজা। (নিশ্বাস ত্যাগপূর্ব্বক চিন্তাসহকারে।) সখে! এ বিষয়ে কর্ত্তব্য কি? (ম)

বিদূ। (বিশেষ চিন্তা করিয়া।) এক উপায় আছে। (য)

রাজা। কিরূপ? (র)

বিদূ। (ইতস্ততঃ দৃষ্টিনিক্ষেপ সহকারে) কোন ব্যক্তি অলক্ষ্যে থাকিয়া শুনিতে পাইবে। অতএব আপনার কর্ণে কহিব। (এই বলিয়া কর্ণসমীপে আগমনপূর্ব্বক) "এইরূপ।" (এই বলিয়া বক্তব্য প্রকাশ)। (ল)

राजा। (सहर्षम्)। सुष्ठु प्रयुज्यतां सिद्धये। (ब)

(प्रतीहारी प्रविश्य)। देव! पवादसअणे णिसस्सा रत्तचन्दणधारिणा परिअणहत्थगदेण चलणेण भअवदीए कहाहिं विणोदिज्जमाणा चिट्ठदि। [देव! प्रवातशयने निषस्सा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति।] (श)

राजा। तस्मादस्मत्प्रयाणयोग्योऽयमवसरः। (ष)

विदू। ता गच्छदु भवं। अहं वि देवीं पेक्खिदुं अरित्त-

---

(ब) सहर्षं कर्त्तव्यज्ञानशून्यतादशायां सुचारुगतेरुपालम्भात् हर्षातिरेकः। सुष्ठु साधु कल्पितमिति भावः। सिद्धये कार्य्यसाधनाय प्रयुज्यतां प्रस्तूयतां, तथाहि एतत्-प्रयोग एव प्रकृतसिद्धिहेतुर्भविष्यतीति भावः।

(श) प्रवातशयने प्रकृष्टः वातः वायुः यत्र तथाभूते स्वच्छपवनवीजिते शयने शय्यायां निषस्सा आसीना रक्तचन्दनधारिणा व्यथाशान्तये घृष्टरक्तचन्दनविलिपितेन परिजनहस्तगतेन परिचारिकाकरसंवाह्यमानेन चरणेन उपलक्षिता देवीति शेषः। भगवत्या पण्डितकौशिक्या कथाभिः आलापैः विनोद्यमाना तर्प्यमाणा तिष्ठति।

(ष) तस्मात् विस्रब्धावस्थायाः देव्याः वर्त्तमानत्वात् अयं वर्त्तमानः अवसरः अवकाशः काल इत्यर्थः, अस्माकं प्रयाणस्य उपस्थानस्य योग्यः उपयुक्तः, इदानीमस्माकं तत्र उपस्थानं युज्यते इति सरलार्थः।

---

রাজা। (সহর্ষে) সাধুসঙ্কল্প, (এখন) কার্য্যসিদ্ধির জন্য প্রয়োগ কর। ব)

(প্রবেশান্তে) প্রতীহারী। মহারাজ! দেবী স্বচ্ছ-পবনবীজিত শয্যায় শয়ন করিয়া আছেন। পরিচারিকারা করে রক্তচন্দন লিপ্ত করিয়া তাহার পাদসংবাহন করিতেছে, কৌশিকী কথোপকথন দ্বারা তাঁহাকে বিনোদিতা করিতেছেন। (শ)

রাজা। অতএব ইহাই আমাদের প্রস্থানযোগ্য অবসর। (ষ)

पाणी भविस्सं। [तत्, गच्छतु भवान्। अहमपि देवीं प्रेक्षितुं अरिक्तपाणि-र्भविष्यामि।] (स)

राजा। जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु। (ह)

विदू। तह। [इति कर्णे।] एव्वं विअ होदि। (इति निष्क्रान्तः)
[तथा। एवमिव भवति।] (च)

राजा। जयसेने! प्रवातशयनमार्गमादेशय। (क)

प्रती। इदो इदो देवो [इत इतो देवः।] (ख)

---

(स) तत् तर्हि, देवीं राज्ञीं प्रेक्षितुं द्रष्टुम् अरिक्तपाणिः अशून्यहस्तः यत्किञ्चिदुप-हारजुष्टहस्त इत्यर्थः। शून्येन हस्तेन आशीर्व्वादाहार्यायास्तस्या अभ्यर्थनाया अनुचितत्वात् फलादिकं किमपि आदायैव तत्र गमिष्यामि इति भावः।

(ह) अस्माकं रहस्यं गोपनीयं व्यापारं जयसेनायाः तदाख्यायाः प्रतीहार्य्या विदितं ज्ञातं कुरु, तेनैव तदानुकूल्यस्य सम्भाव्यत्वात्, अन्यथा प्रातिकूल्याचरणं वा स्यात् इति भावः।

(च) तथा एवं करोमि इति शेषः। इति कर्णे वक्तव्यं ब्रवीतीति शेषः।

(क) प्रवातशयनस्य देव्यधिष्ठितस्य प्रकृष्टवातयुक्तशय्यागृहस्य मार्गं पन्थानम् आदेशय बोधय, यथा तत्र गच्छेयमिति भावः।

(ख) इतः इतः अस्मिन् मार्गे देवः आगच्छतु इति शेषः। सर्व्वनाम्नः सर्व्व-विभक्तिभ्यस्तसिलो विधानात् सप्तम्यर्थे तसिल्, तृतीयार्थे इति केचित्।

---

বিদু। তা হ'লে আপনি গমন করুন। আমিও দেবীকে দর্শন করিবার জন্য কিঞ্চিৎ উপহার হস্তে লইয়া গমন করি। (স)

রাজা। জয়সেনাকেও আমাদের এই গোপনীয় ব্যাপার বিদিত করুন। (হ)

বিদু। আচ্ছা, করিতেছি। (কর্ণে)—"এইরূপ হইবে।" (এই বলিয়া নিষ্ক্রমণ।) (ক্ষ)

রাজা। জয়সেনে! দেবীর পবনবীজিত শয্যাগৃহের পথ প্রদর্শন কর। (ক)

[ ततः प्रविशति शयनस्था देवी, परिव्राजिका विभवतश्च परिवारः। ] (ग)

देवी। भअवदि! रमणिज्जं कहावत्थु। तदो तदो?
[ भगवति! रमणीयं कथावस्तु। ततस्ततः? ] (घ)

परि। [ सदृष्टिक्षेपम् ]। देवि! अतःपरं पुनः कथयिष्यामि। अत्रभवान् विदिशेश्वरः प्राप्तः। (ङ)

देवी। अम्मो भट्टा? [ इत्युत्थातुमिच्छति। ] ( अहो भर्त्ता? ) (च)

---

(ग) शयनस्था शय्यायां स्थिता, विभवतः ऐश्वर्य्यानुसारेण परिवारः परिचारिका-प्रभृतिकं, विभवत एव छत्रधारिणीप्रभृतीनाम् अतिरिक्तपरिजनानां जायमानत्वात्।

(घ) भगवति इति परिव्राजिकायाः सम्बोधनम्, कथावस्तु भवदुक्तसन्दर्भार्थः, रमणीयं मनोहरं, प्रीतिमेव मे सम्पादयतीति भावः, एतच्च वक्तुर्व्वचनप्रशंसया उन्मुखीकरणाभिप्रायेण इति मन्तव्यम्। ततः ततः किं वृत्तं तत् कथय इति भावः।

(ङ) सदृष्टिक्षेपं राजागमनदिशि दृष्टिं निक्षिप्य इत्यर्थः। अतः परम् एतस्मात् वस्तुनः परवर्त्तिवृत्तान्तं पुनः वारान्तरे कथयिष्यामि भविष्यत्काले वक्ष्यामि ननु इदानी-मिति शेषः। कथमित्याह—अत्रेत्यादि। अत्रभवान् माननीयः विदिशेश्वरः विदिशानाथः अग्निमित्रः प्राप्तः उपस्थितः, तथाहि इदानीं वृत्तान्तरपरिहारेण तस्य उपगतस्य अभ्यर्थनादिकमेव कर्त्तव्यं "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इत्यादि स्मरणात्।

(च) अहो भर्त्ता स्वामी! अहो आश्चर्य्ये, तच्च सहसा तस्य अनाशंसितागमनात्। उत्थातुं शय्यां परित्यज्य अभ्यर्थनार्थमुत्थिता भवितुम् इच्छति देवीत्यन्वयः।

---

প্রতী। এদিকে এদিকে, মহারাজ! ( খ )

( অনন্তর শয়নস্থা দেবী, পরিব্রাজিকা ও যথাযোগ্য অপরাপর পরিজন সকলের প্রবেশ। ) ( গ )

দেবী। ভগবতি! অতি মনোহর কথা। তারপর, তারপর? ( ঘ )

পরি। (সদৃষ্টিক্ষেপে।) সময়ান্তরে পুনরায় কহিব। মাননীয় মহারাজ বিদিশেশ্বর আসিয়াছেন। ( ঙ )

राजा। अलमङ्गमुपचारयन्त्रणया। (छ)

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि।
चरणं रुजा परीतं कलभाषिणि माञ्च पीड़यितुम् ॥२॥

[ अन्वयः। कलभाषिणि! अनुचितनूपुरविरहं तपनीयपीठिकालम्बि रुजा परीतं चरणं मां च पीड़यितुं न अर्हसि। २। ]

---

(छ) अलम् अनर्थम् उपचारयन्त्रणया अभ्यर्थनार्थं प्रस्तुतेन उत्थानादिकर्म्मणा जातया यन्त्रणया यातनया इति शेषः, अलं निष्प्रयोजनम्। तथाहि मा तावत् उत्थानादिक्लेशं स्वीकुरु इति भावः।

२। अथ उत्थानादिजनितेन देव्याः क्लेशेन आत्मन एव क्लेशमाह—अनुचितेत्यादिना। हे कलभाषिणि! अव्यक्तमधुरवादिनि! तथात्वञ्च कुलजनोचितं वस्तु। अनुचितः अनभ्यस्तः अयोग्यः वा नूपुरस्य मञ्जीरस्य विरहो विप्रयोगः यस्मिन् तत्, तथाहि चिरमेवास्याः चरणयोः नूपुरालङ्कृतिरभ्यस्ता सा चेदानीं व्यथापरिहाराय परिहृता सौष्ठवविरहमुत्पादितवतीति भावः। तपनीयपीठिका सुवर्णपादपीठं तदालम्बि तदाश्रितं तत्र विन्यस्तमित्यर्थः। रुजा परीतं वेदनायुक्तं चरणं पादं माञ्च पीड़यितुं व्यथयितुं न अर्हसि, तथाहि उत्थानेन तव पादयोर्व्वेदना भविष्यति तेन च ममापि पीड़ा सम्भविता इति अस्मात् विरम्यतामिति भावः। एतेन देव्यामात्मनः सुतरां प्रीतिरुपदर्शिता तत्क्लेशेन आत्मनः क्लेशानुभवकीर्त्तनात्। अत्र पीड़यितुमिति क्रियायाः कर्म्मतासम्बन्धेन चरणं माञ्च इति पदार्थद्वयसम्बन्धात् तुल्ययोगिता उभयोरेव प्रकृतत्वात्। आर्य्या जातिः।

---

দেবী। অহো আর্য্যপুত্র! (এই বলিয়া উত্থান করিতে উদ্যত।) (চ)

রাজা। অভ্যর্থনার নিমিত্ত উত্থানাদি ক্লেশস্বীকারে আবশ্যকতা নাই। (ছ)

তোমার চরণে কখন নূপুরবিরহ শোভা পায় না। উহা এখন বেদনা-দূরীকরণার্থ স্বর্ণপীঠিকায় ন্যস্ত হইয়াছে। অয়ি মধুরভাষিণি! উত্থান করিয়া

ধারি। जेदु अज्जउत्तो। [ জয়তু আর্য্যপুত্রঃ। ] (জ)

পরি। विजयतां देवः। (ঝ)

রাজা। [ পরিব্রাজিকাং প্রণম্যোপবিশ্য চ। ] देवि! অপি সহ্যা বেদনা? (ঞ)

ধারি। अज्ज अत्थि मे विसेसो। [ অদ্য অস্তি মে বিশেষঃ। ] (ট)

[ ততঃ প্রবিশতি যজ্ঞোপবীতসংবীতাঙ্গুষ্ঠঃ সম্ভ্রান্তো বিদূষকঃ। ] (ঠ)

---

(জ) আর্য্যপুত্রঃ স্বামী অগ্নিমিত্র ইত্যর্থঃ। জয়তু সর্ব্বোৎকর্ষেণ বর্ত্ততাম্।

(ঝ) বিজয়তাং জয়যুক্তো ভবতু মহারাজেতি শেষঃ।

(ঞ) বেদনা পাদব্যথা সহ্যা সোঢ়ুং যোগ্যা। অপিঃ প্রশ্নে। চরণবেদনা কিঞ্চিদুপশান্তা নবা ইতি প্রশ্নার্থঃ।

(ট) মে মম বিশেষঃ উপশমঃ পাদবেদনায়া ইতি শেষঃ। অস্তি। তথাহি বেদনা পূর্ব্বাপেক্ষয়া সুতরামুপশান্তা ইতি ভাবঃ।

(ঠ) অথ কৃত্রিমভুজঙ্গদংশনাভিনয়েন বিদূষকপ্রবেশমাহ—তত ইত্যাদিনা। যজ্ঞোপবীতেন কণ্ঠস্থিতপবিত্রসূত্রেণ উপসংবীতং বদ্ধং বিষবেগোপশমনার্থমিব বেষ্টিতম্ অঙ্গুষ্ঠং যেন তথাভূতঃ, সম্ভ্রান্তঃ সসম্ভ্রমঃ প্রাণভয়েনেব সুতরাং চঞ্চল ইত্যর্থঃ।

---

এই বেদনাক্রান্ত চরণ ও ( তদ্দর্শনে ব্যথিত হৃদয় ) আমাকে আর ক্লেশ প্রদান করিও না। (৩)

ধারিণী। আর্য্যপুত্রের জয় হউক। ( জ )

পরি। মহারাজের সর্ব্বথা জয় হউক। ( ঝ )

রাজা। ( পরিব্রাজিকাকে প্রণামপূর্ব্বক উপবেশন করিয়া। ) দেবি! চরণ-বেদনার ত কিঞ্চিৎ উপশম হইয়াছে? (ঞ)

ধারি। অদ্য কিছু উপশম হইয়াছে। (ট)

( অনন্তর অঙ্গুষ্ঠে যজ্ঞোপবীত বেষ্টিত করিয়া সসম্ভ্রমে বিদূষকের প্রবেশ। ) ( ঠ )

विदू। परित्ताअदु, परित्ताअदु भवं। सप्पेण ह्मि दट्टो। [परित्रायतां परित्रायतां भवान्। सर्पेणास्मि दष्टः।] (ङ)

[सर्वे विषण्णाः।] (ढ)

राजा। कष्टं कष्टम्! क्व भवान् परिभ्रान्तः? (ण)

विदू। देवीं देक्खिस्सं त्ति आआरपुप्फग्गहणकारणादो पमदवणं गदोह्मि। [देवीं द्रक्ष्यामीति आचारपुष्पग्रहणकारणात् प्रमदवनं गतोऽस्मि।] (त)

धारि। हद्धी हद्धी! अहं ज्जेव बह्मणस्स जीविदसंसअणिमित्तं जादह्मि। [हा धिक् हा धिक्! अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि।] (थ)

---

(ङ) सर्पेण दष्टः अस्मि अहमिति शेषः।

(ढ) सर्व्वे धारिणीप्रभृतयः जनाः विषण्णाः विदूषकस्य सुतरामनङ्गलाशङ्कया इति भावः।

(ण) कष्टं कष्टम् अतिशये द्विरुक्तिः। क्व कस्मिन् स्थाने परिभ्रान्तः भ्रमणं कृतवान्, कस्मिन् स्थाने त्वं सर्पेण दष्टोऽसीति भावः।

(त) देवीं धारिणीं द्रक्ष्यामि आलोकयिष्यामि इति कृत्वा आचारपुष्पग्रहणकारणात् शून्यहस्तेन दर्शनस्य निषेधात् पुष्पं संगृह्य आगमिष्यामि देवीदर्शनाय इति बुद्ध्या पुष्पसंग्रहहेतोः प्रमदवनं गतः अस्मि।

---

বিদূ। রক্ষা করুন, রক্ষা করুন। আমাকে সর্পে দংশন করিয়াছে! (ড)

(সকলের বিষাদ।) (ঢ)

রাজা। কি কষ্ট, কি কষ্ট! কোথায় তুমি পরিভ্রমণ করিতেছিলে? (ণ)

বিদূ। দেবীর সহিত সাক্ষাৎ করিবার জন্য উপহার-পুষ্পসংগ্রহমানসে প্রমদবনে গিয়াছিলাম। (ত)

विदू। तहिं असोअत्थवअकारणादो पसारिदे दक्खिणहत्थे कोडरणिग्गदेण सप्परूवेण कालेण दट्ठोह्मि। णं एदाणि दुवे दंसणपदाणि। (इति दंशं दर्शयति।) [तस्मिन् अशोकस्तवककारणात् प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि। नन्वेते द्वे दंशनपदे।] (द)

---

(थ) हा धिक् इति विषादे। अहमेव नान्यः कोऽपि जनः, इदन्तु स्वस्य विषादातिशयकारणमुपन्यस्तम्। ब्राह्मणस्य विप्रस्य विदूषकस्य, ब्राह्मणपदेन तदुपन्यासः प्रकृतहन्तस्य भूयः पापजनकत्वशंसनाय। जीवितस्य संशयः सन्देहः तस्य निमित्तम् अयं जीविष्यति वा नवा इति सन्देहहेतुः जातः अस्मि, तथाहि अहं दुर्भगा पापिनी च यत् ब्राह्मणस्यास्य जीवनं मत्त एव संशयमारूढम् इति भावः। निमित्तशब्दस्य अजहल्लिङ्गत्वात् "श्रुतयः प्रमाणम्" इत्यादिवत् निमित्तमित्यत्र लिङ्गव्यत्ययेऽपि विधेयता युक्ता। जातास्मि इति क्रिया च उद्देश्यमेवाभिधत्ते उद्देश्यस्यैव क्रियाश्रयत्वादिति, तत्र स्त्रीलिङ्गसमन्वयोऽपि। तथाच प्राचीननिबन्धोऽपि—"उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य" इति।

(द) अशोकस्तवकस्य अशोकपुष्पगुच्छस्य कारणात् तत्र प्रमदवने दक्षिणहस्ते दक्षिणकरे प्रसारिते चालिते कोटरात् अशोकवृक्षाङ्गस्थितकुहरात् निर्गतेन वहिर्गतेन सर्परूपेण भुजङ्गरूपिणा कालेन कृतान्तेन मज्जीवनापहारिणा इत्यर्थः। एतेन जीवने नैराश्यं व्यज्यते। दष्टः अस्मि अहमिति शेषः। ननु इति राजसम्बोधने, एते दृश्यमाने द्वे दंशनपदे दंशनस्थाने, तथाहि स सर्पः, विषदन्तेन स्थानद्वयं मे दष्टं यत् तदिदमिति भावः। इति दंशं कृत्रिमतया प्रवर्त्तितं क्षतं दर्शयति सर्पदंशत्वेन विज्ञापयति।

---

धारि। হা ধিক্, হা ধিক্! আমিই ব্রাহ্মণের জীবনবিনাশের কারণ হইলাম। (থ)

বিদূ। প্রমদবনে অশোকপুষ্পের জন্য দক্ষিণহস্ত প্রসারিত করিলে, সর্পরূপী কাল কোটর হইতে বিনির্গত হইয়া, আমাকে দংশন করিল। এই দুই দংশনচিহ্ন। (এই বলিয়া চিহ্ন প্রদর্শন।) (দ)

परि। तेन हि दंशच्छेदः पूर्वकर्म्मेति श्रूयते। स तावदस्य क्रियताम्। (ध)

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम्।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः॥ ४॥

[ अन्वयः। दंशस्य छेदः दाहः वा क्षतस्य आरक्तमोक्षणम् एतानि दष्टमात्राणाम् आयुष्याः प्रतिपत्तयः। ४। ]

---

(ध) तेन हि तथा वृत्तेन व्यापारेण, दंशस्य दंशनाधारीभूतस्य अवयवस्य छेदः कर्त्तनं पूर्व्वकर्म्म विषचिकित्सायाः प्रथमं कर्त्तव्यम् इति श्रूयते, तदङ्गुष्ठम् इदानीं छेत्तव्यं तेन एव विषचिकित्सा कृता भविष्यतीति भावः। सः दंशच्छेदः, अस्य विदूषकस्य क्रियताम्।

४। अथ विषचिकित्सायाः शास्त्रोक्तानि उपायान्तराण्यप्याह—छेद इत्यादिना। दंशस्य दंशनाधारस्य अङ्गस्य छेदः कर्त्तनं तेन तदङ्गसाहचर्य्यात् विषस्य अपगमात् न अङ्गान्तरे संक्रमणप्रसक्तिरिति भावः। वा अथवा दाहः दष्टस्थानस्य वह्न्यादिना दहनं ततोऽपि तदङ्गेन सहैव विषस्यापि अग्निना दाहात् न संक्रमणम्। क्षतेः क्षतस्थानात् रक्तस्य दैहिकशोणितस्य मोक्षणम् अपसारणं, तेनापि रक्तेन वहिर्म्मुखेन सह विषस्यापि वहिर्म्मुखतया निर्गमात् रोगाभावः इति भावः। एतानि उक्तरूपाणि वस्तूनि दष्टमात्राणाम् अचिरदष्टानां यत्किञ्चिद्दंशनविषयीभूतानां वा जनानाम् आयुष्याः आयुषि हिताः आयुष्करा इत्यर्थः। प्रतिपत्तयः उपाया भवन्तीति शेषः। अतएव अस्यापि छेदाद्यन्यतमं वस्तु रक्षणोपाय इति भावः। अत्र छेदादिषु वहुषु एकस्य आयुष्य-प्रतिपत्तित्वप्रख्यापनात् तुल्ययोगितालङ्कार इति केचित्।

---

পরিব্রাজিকা। শুনা যায়—বিষচিকিৎসার প্রথম কার্য্য দষ্টস্থানের ছেদন, বিদূষকের তাহা এখন করুন। (ধ)

দষ্টস্থানের ছেদন, দাহন অথবা ক্ষতস্থানের সম্যক্‌রূপে রক্তমোক্ষণ; দংশনমাত্রে এই সকলই জীবনরক্ষার উপায় হইয়া থাকে। (৪)

राजा। संप्रति विषवैद्यानां कर्म्म। जयसेने! ध्रुवसिद्धिः चिप्रमाहूयताम्। (न)

प्रती। जं देवो आणवेदि। (इति निष्क्रान्ता।) [यद्देव आज्ञापयति]। (प)

विदू। अहो! पावेण मिच्चुणा गिह्वीदोह्मि! [अहो! पापेन मृत्युना गृहीतोऽस्मि!] (फ)

राजा। मा कातरो भूः। अविषोऽपि कदाचिद्दंशो भवेत्। (ब)

---

(न) सम्प्रति ईदृशावस्थायामित्यर्थः। विषवैद्यानां विषचिकित्सकानां कर्म्म प्रयोजनं वर्त्तत इति शेषः। ध्रुवसिद्धिः तदाख्यः विषवैद्यः चिप्रं सत्वरम् आहूयताम् सम्बोध्यताम्, तस्य विषविद्यायामतिप्रकर्षात् अनतिविलम्बेनैव विषचिकित्साचमत्वात् "ध्रुवा सिद्धिः यस्य" इति व्युत्पत्त्या इयं संज्ञा इति मन्तव्यम्।

(प) अहो विषादे। पापेन ब्राह्मणस्य मारणप्रयत्नात् पापकारिणा मृत्युना यमेन गृहीतः धृतपूर्व्वः अस्मि, तथाहि नास्ति अस्मात् मे रचणोपाय इति भावः।

(फ) देव महाराजेति शेषः।

(ब) कातरः जीवने नैराश्यावलम्बनात् विह्वलान्तःकरणः मा भूः नैव जायस्व। तत्रैव हेतुमाह—अविष इत्यादिना। दंशः सर्पचतं कदाचित् समयविशेषे अविषः विषशून्यः अपि भवेत् सम्भवेत्। तथाहि तवायं दंशः सविषः निर्व्विषः वा इति निश्चयमकृत्वैव किमिति भूयो विह्वलतामाश्रयसि इति, नहि सविषत्वश्याप्यं दंशत्वं, तदवलम्बस्व स्वास्थ्यमिति भावः।

---

রাজা। সম্প্রতি বিষবৈদ্যের প্রয়োজন। জয়সেনে! ধ্রুবসিদ্ধিনামক বিষবৈদ্যকে শীঘ্র ডাকিয়া আন। (ন)

প্রতী। যে আজ্ঞা মহারাজ! (নিষ্ক্রমণ।) (প)

বিদূ। অহো! পাপ মৃত্যুকর্ত্তৃক গৃহীত হইলাম। (ফ)

রাজা। কাতর হইও না। সময়বিশেষে দংশন নির্ব্বিষও হইয়া থাকে। (ব)

विदू। कह्हं ण भाइस्सं ? सिमसिमाअन्ति मे अङ्गाइं। ( इति विषवेगं रूपयति )। [ कथं न भेष्यामि ? सिमसिमायन्ते मे अङ्गानि। ] (भ)

धारि। हा दंसिदं असुहं विआरेण ! अवलम्बध बह्मणं। [ हा, दर्शितमशुभं विकारेण ! अवलम्बध्वं ब्राह्मणम्। ] (म)

( परिव्राजिका ससम्भ्रममवलम्बते। ) (य)

---

(भ) कथं केन हेतुना न भेष्यामि जीवनभयं न कुर्य्याम्, मे मम अङ्गानि सिम-सिमायन्ते ग्लानिविशेषात् अवशतामिव लभन्ते, तत्र विषवेगकर्म्मैव अतो नेदमविषं दंशनमिति निश्चयेन विह्वलता मे न अनिमित्ता इति भावः। "सिम्‌सिम" शब्दोऽव्यक्तानुकरण "चट्‌चट्" प्रभृतिशब्दवत् अवस्थाविशेषमनुभावयति तस्मादायिप्रत्ययो "डाच् लोहितादिभ्यस्त्वर्थे" इति नियमात्। विषवेगं विषजन्यां दुरवस्थां रूपयति अभिनयति। "वैवर्ण्यं वेपथुर्दाह" इत्यादि तदवस्था उक्ताः।

(म) हा विषादे, विकारेण विषवेगजन्यवैवर्ण्यादिना, अशुभं ब्राह्मणस्य भावि-अमङ्गलं दर्शितं विज्ञापितम् एतद्दर्शनेन ब्राह्मणस्य महदनिष्टमनुमीयते इति भावः। अथवा विकारेण विषजनितेन आभ्यन्तरिकवैषम्येण जातेन अशुभं वाह्यकम्पादिकं दर्शितं प्रकाशितं, तथाहि तद्दर्शनेनास्य भूयो नाम आभ्यन्तरिकवैषम्यं ज्ञानविषयता-मापद्यते इति भावः। तत् ब्राह्मणं अवलम्बध्वं धारयध्वम् इदानीं वैषम्यात् स्वयं स्वदेहधारणाक्षमत्वादिति भावः।

(य) परिव्राजिका कौशिकी। ससम्भ्रमं सम्भ्रान्तभावेन, अवलम्बते धारयति विदूषकमिति शेषः।

---

বিদূ। কিজন্য ভয় করিব না ? আমার অঙ্গ সকল ক্রমশই বিকৃত-ভাবাপন্ন (অবশ, ঝিম্ ঝিম্) হইতেছে। (এই বলিয়া বিষবেগ অভিনয়।) (ভ)

ধারি। আহা ! সাঙ্ঘাতিক বিকার দৃষ্ট হইতেছে। ইহাঁকে তোমরা সকলে ধর। (ম)

( পরিব্রাজিকার সসম্ভ্রমে ধারণ। ) (য)

विदू। ( राजानं विलोक्य। ) **भो! भवदो बल्लादोवि पिअवअस्सा-म्हि। तं विआरिअ अवुत्ताए मे जणणीए जोगक्खेमं वहेसु।** [ भोः! भवतो बाल्यादपि प्रियवयस्योऽस्मि। तं विचार्य्य अपुत्राया मे जनन्या योग-क्षेमं वह ]। (र)

राजा। **मा भैषीर्गौतम! स्थिरो भव। अचिरात्त्वां वैद्य-श्चिकित्सिष्यति। (ल)**

---

(र) बाल्यादपि शैशवादेव अपरिवार्य्यं, अनेन प्रीतिदार्ढ्यमुद्भावितम्। प्रियवयस्यः प्रियो बन्धुरस्मि तत् आबाल्यं प्रियत्वं विचार्य्य मनसि कृत्वा अपुत्रायाः मदनन्तरं पुत्र-हीनायाः मदेकपुत्राया इति भावः। मे मम जनन्याः मातुः योगम् अनागतस्य आनयनं क्षेमं स्थितस्य परिरक्षणं च वह धारय, तथाहि ममाभावे यथा सा न विपद्येत तथा त्वया कर्त्तव्यमिति भावः। योगेन युक्तः क्षेमः तं, मध्यपदलोपिसमासात् उभयोरेव साहचर्य्येण करणप्रार्थना प्रतीयते न तु प्रत्येकमिति, तेन एकं त्यक्त्वा अपरस्य करणे न प्रार्थितसिद्धिरिति भावः।

(ल) गौतमेति विदूषकस्य नाम, नाम्ना सम्बोधनञ्च अधिकप्रीतिं पिशुनयति, तच्च आत्मनः तस्मिन् अधिकप्रीतिदर्शनायाश्वासातिशयप्रदानाय। प्रियजनरक्षणार्थमेव चेष्टातिशयप्रवृत्तेर्योग्यत्वात्। मा भैषीः जीवनभयं मा कार्षीः। स्थिरः विकारशून्यः, मानसिकचाञ्चल्यरहितः भव। अविलम्बेन, नातिचिरमेव त्वया पुनः स्वास्थ्यं लब्धव्यं तत् किमिति वृथा विह्वलोऽसीति भावः।

---

বিদূ। (রাজাকে অবলোকন করিয়া।) আমি আপনার বাল্য-কাল হইতে প্রিয়বয়স্য। ইহা স্মরণ রাখিয়া অতঃপর মদীয় পুত্রহীনা জননীর সর্ব্বপ্রকার তত্ত্বাবধান করিবেন। ( র )

রাজা। গৌতম! ভীত হইও না, শীঘ্রই বৈদ্য তোমার চিকিৎসা করিবে। স্থির হও। (ল)

( जयसेना प्रविश्य । ) देव ! आणविदो धुवसिद्धी विसवेदि—इह ज्जेव्व गोदमो आणीअदुत्ति । [देव ! आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति—इहैव गौतम आनीयतामिति । ] (व)

राजा । तेन हि प्रतिगृहीतमेनं तत्रभवतः सकाशं प्रापय । (श)

जय । तहा । [ तथा । ] (ष)

विदू । ( देवीं विलोक्य । ) भोदि ! जीवेअं ण वा । जं मए अत्तभवन्तं सेवमाणेण दे अवरद्धं तं मरिसेहि । [ भवति ! जीवेयं न वा । यन्मया अत्रभवन्तं सेवमानेन ते अपराद्धं तन्मृष्यस्व ] । (स)

---

(व) आज्ञापितः भर्त्रा आदिष्टः, ध्रुवसिद्धिः तदाख्यः विषवैद्यः विज्ञापयति निवेदयति इह मत्सन्निधाने एव, आनीयताम् इति वाक्यार्थः कर्म्म ।

(श) तेन तत्सन्निधाने अवश्यं नेतव्यत्वेन । प्रतीगृहीतम् अवलम्बितम् एनं गौतमम् अवलम्बनं विना विह्वलतातिशयेन पतनसम्भवात् । अत्र भवतः माननीयस्य ध्रुवसिद्धेः माननीयत्वप्रख्यापनं राज्ञः अपि तदादेशपरिरक्षणसामञ्जस्यरक्षणार्थम् । सकाशं प्रापय नय ।

(स) भवति इति देव्याः सम्बोधनम्, जीवेयं न वा, जीवनं मे सन्देहविषय इत्यर्थः । अत्रभवन्तं माननीयं राजानं सेवमानेन आराधयता मया यत् अपराद्धं अपराधः कृतः तत् मृष्यस्व क्षमस्व । तथाहि वयस्यतया राज्ञः भवतीनामपि कति अपराधाः मया कृताः तद्दोषा न स्मर्त्तव्य इति भावः ।

---

( জয়সেনার প্রবেশ ) জয় । ধ্রুবসিদ্ধি মহারাজের আজ্ঞা পাইয়া জানাইয়াছেন,—গৌতমকে এখানে আনয়ন কর । (ব)

রাজা । আচ্ছা, ইহাকে ধারণ করিয়া মাননীয় ধ্রুবসিদ্ধির নিকট লইয়া যাও । (শ)

জয় । যে আজ্ঞা । (ষ)

धात्रि। दीहाउ होहि। [दीर्घायुर्भव]। (ह)

( निष्क्रान्तो विदूषकः प्रतीहारी च )

राजा। प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं न मन्यते। (च)

( प्रविश्य जयसेना। ) जेदु भट्टा। धुवसिद्धो विसवेदि—उदकुम्भविहाणेण सप्पमुद्दिअं किंपि कप्पिदव्वं ता अस्सेसीअदुत्ति। [जयतु भर्त्ता। ध्रुवसिद्धिर्विज्ञापयति। उदकुम्भविधानेन सर्पमुद्रिकं किमपि कल्पयितव्यं। तदन्विष्यतामिति।] (क)

---

(ह) दीर्घायुर्भव, तथाहि सर्व्वदोषविस्मरणेन दीर्घायुष्कतां ते प्राप्तकालं याचे इति भावः।

(च) प्रकृतिभीरुः स्वभावतो भीतः अतिभीरुस्वभाव इति यावत्, एतच्च हेतुविधया उपन्यस्तम् विशेषणमिति। काव्यलिङ्गवैचित्रम्। तपस्वी वराकः कालक्रमेण अतिदीनभावः। यथार्थनाम्नः सार्थकसंज्ञस्य सिद्धाव्यभिचारिण इत्यर्थः। ध्रुवसिद्धेरपि तदाख्यस्य विषवैद्यस्यापि व्युत्पत्तिरुक्तपूर्व्वा। सिद्धिम् आरोग्यजननक्षमतां न मन्यते जानाति। तथाहि अत्रास्य स्वभावभीरुत्वमेव हेतुरिति भावः।

(क) विज्ञापयति वक्ष्यमाणमिति शेषः। उदकुम्भविधानेन विषचिकित्साप्रकारविशेषानुसारेण सर्पसुद्रिकं सर्पमुद्रासम्बन्धि नागमुद्राङ्किताङ्गुरीयकसम्बन्धि इत्यर्थः।

---

বিদূ। ( দেবীর প্রতি দৃষ্টিপাত করিয়া। ) মহারাণী! বাঁচি কি না বাঁচি বলিতে পারি না। মহারাজের সেবা করিতে গিয়া আপনার নিকট যে অপরাধ করিয়াছি, তাহা মার্জ্জনা করিতে হইবে। (স)

ধারি। দীর্ঘায়ু হউন। (হ)

[ বিদূষক ও প্রতীহারীর নিষ্ক্রমণ। ]

রাজা। স্বভাবতঃ ভীরু বেচারা গৌতম সার্থকনামা ধ্রুবসিদ্ধি-হইতেও সিদ্ধিলাভের আশা করে না। (ক্ষ)

धारि। एदं सप्पमुद्दिअं अङ्गुलीअअं। पच्छा मह हत्थे देहि णं। [एतत् सर्पमुद्रिकं अङ्गुलीयकं। पश्चान्मम हस्ते देहि एनं।] (ख)

[इति अङ्गुरीयकमर्पयति। प्रतीहारी गृहीत्वा प्रस्थिता।] (ग)

राजा। जयसेने! कर्म्मसिद्धावाशु प्रतिपत्तिमानय। (घ)

---

किमपि प्रकारान्तरं कल्पयितव्यं सम्पादयितव्यं, तत् अन्विष्यतां सर्पमुद्रा इति शेषः। तथाहि इदानीं नागमुद्रया प्रयोजनं सा च देया इति भावः।

(ख) एतत् सर्पमुद्रिकं नागमुद्रासनाथम् अङ्गुरीयकं, पश्चात् विषवेगशमनानन्तरं मम हस्ते देहि एतत् सर्पमुद्रिकमङ्गुरीयकमिति शेषः। इति उक्त्वा अङ्गुरीयकं प्रतीहार्य्याः करे समर्पयति।

(ग) गृहीत्वा धारिणीहस्तात् आदाय उक्तमङ्गुरीयकमिति शेषः। प्रस्थिता प्रस्थातु-मुपक्रान्ता, प्रादिकर्म्मणिक्तप्रत्ययः।

(घ) कर्म्मसिद्धौ गौतमस्य विषवेगशमने सम्पन्ने इत्यापाततः। ध्वन्यर्थश्च माल-विकावकुलावलिकयोः पातालगृहात् मोचनरूपकार्य्यस्य सम्पत्तौ इति आशु सत्वरं प्रतिपत्तिं संवादं आनय। प्रकृतनिष्पत्तौ मां विज्ञापय इति भावः। एतेन अत्यर्थ-मुत्कण्ठा व्यज्यते। "प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च। संप्राप्ते च प्रबोधे च पदप्राप्तौ च योषिति" इति मेदिनी।

---

(জয়সেনার প্রবেশান্তে।) জয়। মহারাজের জয় হউক, জয় হউক। ধ্রুবসিদ্ধি জানাইয়াছেন,—জলকুম্ভবিধানানুসারে সর্পমুদ্রাযুক্ত কোনও বস্তুর প্রয়োজন অতএব তাহা সংগ্রহ কর। (ক)

ধারি। আমার এই অঙ্গুরীয় সর্পমুদ্রাবিশিষ্ট। পশ্চাৎ আমার হস্তে ইহা প্রদান করিও। (এই বলিয়া অঙ্গুরীয়ক দিল)॥ (খ)

(প্রতীহারী অঙ্গুরী গ্রহণ করিয়া প্রস্থান করিল।) (গ)

রাজা। জয়সেনে! কার্য্যসিদ্ধি হইলে শীঘ্র ইহা মহারাণীর হস্তে আনিয়া দিও। (ঘ)

जय। जं देवो आणवेदि। * [यद्देव आज्ञापयति।] (इति निष्क्रान्ता।) (ङ)

परि। यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः। (च)

राजा। भूयादेवम्। (छ)

(जयसेना प्रविश्य।) जेदु देवो। णिवूत्तविसवेगो गोदमो

---

(ङ) देवः महाराजः यत् वस्तु आज्ञापयति आदिशति, आशु एव संवादमानयामि इति भावः।

(च) यथा याहक् मे मम हृदयम् आचष्टे कथयति प्रत्याययति इत्यर्थः। तथा तेन प्रकारेण गौतमः विदूषकः निर्विषः विषशून्यः, नूनं गौतमो विषज्वालामुक्तः जात इति मन्ये इति भावः।

(छ) एवं भवत्या उक्तरूपं गौतमस्य निर्व्विषत्वरूपं वस्तु इत्यर्थः। भूयात् आशिषि लिङ् प्रार्थनायां वा।

---

জয়। যে আজ্ঞা মহারাজ। (এই বলিয়া নিষ্ক্রমণ)। (ঙ)

পরি। আমার মন যেরূপ বলিতেছে, তাহাতে গৌতম বিষজ্বালাবিমুক্ত হইবেন। (চ)

রাজা। এইরূপই হউক। (ছ)

---

* 'जयसेने! कर्म्मसिद्धा'वित्यादि राजवचनस्य केचित् व्याख्यातारः अर्थान्तरं कल्पयन्ति यथा—'प्रतिपद्यते आनीयते अस्यामिति प्रतिपत्तिः ताम् आनयनयोग्यस्थानं राज्ञीसमीपमित्यर्थः। 'जं देवो' इत्यत्र 'शीघ्रमेव मया एषा सर्पमुद्रिका राज्ञीसमीप-मानयिष्यते' इति भावार्थः प्रतिपत्तव्यः इति। एतन्मतमनुसृत्यैव अस्माभिः वङ्ग-भाषानुवादस्थले कार्य्यसिद्ध हইলে ইহা মহারাণীর হস্তে আনিয়া দিও इति निवेशितम्। किन्तु अस्मत्कृतटीकामते কার্য্যসিদ্ধ হইলে আমাকে শীঘ্র সংবাদ দিও इत्यनुवादो-ऽवगन्तव्यः।

मुहुत्तेण पकिदित्थो संवुत्तो। [ जयतु देवः। निवृत्तविषवेगो गौतमो मुहूर्त्तेन प्रकृतिस्थः संवृत्तः। ] (ज)

धारि। दिट्ठिआ वअणीआदो मुत्तह्मि। [ दिष्ट्या वचनीयान्मुक्तास्मि। ] (झ)

प्रती। एसो उण अमच्चो वाहतओ विराणवेदि—'राअकज्जं वहु मन्तिदव्वम्। ता दंसणेण अणुग्गहं इच्छामि' त्ति। [एष पुनरमात्यो वाहतको विज्ञापयति—'राजकार्य्यं बहु मन्त्रयितव्यम्। तत् दर्शनेनानुग्रहमिच्छामीति।] (ञ)

धारि। गच्छदु अज्जउत्तो कज्जसिद्धीए। [ गच्छतु आर्य्यपुत्रः कार्य्यसिद्धये। ] (ट)

---

(ज) निवृत्तः प्रशान्तिं गतः विषवेगः विषजनिता ज्वाला यस्य तथाभूतः प्रशान्तविषवेगस्य इत्यर्थः। मुहूर्त्तेन स्वल्पकालमात्रेण प्रकृतिस्थः स्वस्थः संवृत्तः, नागमुद्रासनाथाङ्गुरीयकप्रक्रियाचरणमात्रेण एव गौतमस्य विषज्वालातो निष्कृतिरभवदिति भावः।

(झ) दिष्ट्या भाग्येन, वचनीयात् निन्दातः मुक्ता अस्मि, मत्कारणात् सर्पदष्टस्य ब्राह्मणस्य यदि अनिष्टमभविष्यत् तदा मम महती निन्दा पापञ्च अभविष्यदिति भावः।

(ञ) वाहतकः तदाख्यः अमात्यः सचिवः, विज्ञापयति वक्ष्यमाणमिति शेषः। बहु अनेकं राजकार्य्यं राज्यकर्म्म मन्त्रयितव्यं आलोचयितव्यम् तत्रभवता राज्ञा सह राजकार्य्यस्य बहुलपरामर्शः कर्त्तव्य इति भावः। तद्दर्शनेन साक्षात्कारदानेन अनुग्रहम् इच्छामि राज्ञ इति शेषः।

---

(জয়সেনার প্রবেশ) জয়। মহারাজের জয় হউক। গৌতমের বিষজ্বালার উপশম হইয়াছে ও মুহূর্ত্তমধ্যেই স্বাস্থ্য লাভ ঘটিয়াছে। (জ)

ধারি। সৌভাগ্যক্রমে আমি অপবাদ হইতে মুক্ত হইলাম। (ঝ)

প্রতী। অমাত্য বাহতক নিবেদন করিতেছেন,—অনেক রাজকার্য্য

राजा। देवि! आतपाक्रान्तोऽयमुद्देशः शीतक्रिया चास्या रुजः प्रशस्ता।-तदन्यत्र नीयतां शयनीयम्। (ठ)

धारि। बालिआओ! अज्जउत्तवअणं अणुचिट्ठध। [बालिकाः! आर्य्यपुत्रवचनमनुतिष्ठत।] (ड)

परिजनः। तह। [तथा।] (ढ)

---

(ट) कार्य्यस्य राजकार्य्यस्य सिद्धये साधनाय गच्छतु, राज्ञां सर्व्वविषयातिक्रमेण राजकार्य्यस्य कर्त्तव्यविधौ प्राशस्त्यात् तदनुपेक्षणीयमिति भावः।

(ठ) अयं उद्देशः इदं स्थानम् आतपेन सूर्य्यकिरणेन आक्रान्तः आस्कन्दितः, अस्याः तव वर्त्तमानायाः रुजः अस्वास्थ्यस्य शीतक्रिया शीतलतासम्पादनकर्म्म प्रशस्ता प्रशंसनीया, प्रयोजनीया इति भावः तत् तस्मात् अन्यत्र एतस्मात् स्थानात् अपरत्र शयनीयं शय्या नीयतां परिजनैः अपसार्य्यताम्। अन्यथा आतपाक्रमणात् अस्वास्थ्यवृद्ध्यापत्तेः।

(ड) बालिकाः! बालपरिचारिकाः! एतत् परिचारिकासु स्नेहप्रकाशनाय। अथवा राजसम्पर्ककाले अनतिरूढ़रागबोधाभ्यः बालिकाभ्य एव परिचारिकाभ्यः लज्जालाभ-सम्भावनासम्भवात् तासामेव तत्र व्यवहार इति निपुणाः। आर्य्यपुत्रवचनं शयनस्य अन्यत्र परिचालनरूपं वस्तु अनुतिष्ठत, शयनीयम् आतपाक्रान्तदेशादपरत्र नयत इत्यर्थः।

(ढ) तथा तथैव कुर्म्मः शयनीयमन्यत्र अपसारयाम इत्यर्थः।

---

মহারাজের সহিত আলোচনা করিতে হইবে। সেইজন্য তাঁহার দর্শনলাভ-রূপ অনুগ্রহ কামনা করি। (ঞ)

ধারি। আর্য্যপুত্র! রাজকার্য্যসাধনের নিমিত্ত গমন করুন। (ট)

রাজা। দেবি! এই স্থান সূর্য্যকিরণাক্রান্ত হইয়াছে। এ দিকে বেদনা যেরূপ, তাহাতে শীতক্রিয়া প্রশস্ত। অতএব শয্যা স্থানান্তরিত করা হউক। (ঠ)

ধারি। পরিচারিকাগণ! তোমরা আর্য্যপুত্রের কথানুসারে কার্য্য কর। (ড)

পরিজন। আচ্ছা। (ঢ)

( निष्क्रान्ता देवी परिव्राजिका परिजनश्च । ) (ण)

राजा । जयसेने ! मां गूढ़ेन पथा प्रमदवनं प्रापय । (त)

जय । इदो इदो देवो । [ इत इतो देवः । ] (थ)

राजा । जयसेने ! समाप्तकरणीयो ननु गौतमः ? । (द)

जय । अधइं । [ अथकिम् । ] (ध)

राजा । इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।

सन्दिग्धमेव सिद्धौ कातरमाशङ्कते हृदयम् ॥५॥

[ अन्वयः । इष्टाधिगमनिमित्तम् एकान्तसाध्यम् अपि प्रयोगं सिद्धौ सन्दिग्धम् एव मत्वा हृदयं कातरम् आशङ्कते । ]

---

(त) गूढ़ेन गुप्तेन पथा मार्गेण प्रमदवनं विलासोद्यानं प्रापय नय । प्रमदवनस्य गुप्तं मार्गमादिशेत्यर्थः ।

(द) समाप्तं शेषं गतं करणीयं कर्त्तव्यकर्म्म मालविकावकुलावलिकयोः मोचनरूपं वस्तु यस्य तथाभूतः सम्पादितकर्त्तव्य इत्यर्थः, तथाहि अपि विदूषकः मालविकां वकुलवलिकाञ्च पातालगृहरोधात् मोचयितुमशकदिति प्रश्नः ।

(ध) अथकिम्, गौतमः समाप्तकरणीय एव जात इति भावः ।

५ । अथ विदूषकस्य कर्त्तव्यसिद्धौ राज्ञः शङ्काकारणमाह—इष्टेत्यादिना । इष्टस्य अभीष्टवस्तुनः अधिगमस्य लाभस्य निमित्तं हेतुभूतम् अवश्यं फलोपधानसमर्थम् इत्यर्थः । प्रयोगं व्यापारम् उपायभूतं वस्तु इत्यर्थः । एकान्तसाध्यम् अवश्यमेव साधयितुं योग्यमपि मत्वा ज्ञात्वा, एकान्तसाध्यं मत्वापि इति वान्वयः । कातरं प्रियजनामङ्गलाशङ्कया

---

[ দেবী, পরিব্রাজিকা ও পরিজনবর্গের নিক্রমণ । ] (ণ)

রাজা । জয়সেনে ! আমাকে গুপ্ত পথে প্রমদবনে লইয়া চল । (ত)

জয় । এদিকে, এদিকে, মহারাজ ! (থ)

রাজা । জয়সেনে ! গৌতমের কর্ত্তব্য-কর্ম্ম সমাধা হইয়াছে ? (দ)

জয় । হাঁ । (ধ)

(प्रविश्य विदूषकः।) वड्ढदु भवं। सिद्धाइं दे मङ्गलकम्माइं।
[वर्द्धतां भवान्। सिद्धानि ते मङ्गलकर्म्माणि।] (न)

राजा। जयसेने! त्वमपि नियोगमशून्यं कुरु। (प)

---

कातर्य्ययुक्तं हृदयं मम अन्तःकरणमित्यर्थः। सन्दिग्धमेव सन्देहयुक्तमेव सत् प्रयोगः सफलो भविता नवा इत्येवं संशयाकुलं सदित्यर्थः। सिद्धौ कर्म्मणः साफल्यविषये आशङ्किते शङ्कितं भवति, तथाहि "स्नेहः पापमाशङ्कते" इति नयेन साफल्यस्य अवश्यं योग्यतायामपि न मे हृदयं प्रत्येतीति भावः। अयमभिप्रायः—विदूषको यथा क्रियाप्रक्रमं कृतवान् तत्र नास्ति वैफल्यस्य सम्भावनापि, तथापि यदहं तत्सम्बन्धं पृच्छामि तत्र केवलम् इष्टवस्तुनि हृदयस्य स्वतो जाता शङ्कैव हेतुरिति। अत्र प्रयोगस्य एकान्तसाध्यत्वज्ञानरूपे कारणे सत्यपि तत्कार्य्यविरुद्धस्य सन्देहस्य उत्पत्तिकथनात् विशेषोक्तिः कार्य्यविरुद्धसद्भाववर्णनमूला। सन्दिग्धमेव इत्येवशब्देन निश्चय-व्यावर्त्तनात् परिसंख्येति वैचित्र्यविदः। कातरत्वस्य आशङ्कां प्रति हेतुताप्रत्ययेन काव्यलिङ्गम्। आर्य्या जातिः।

(न) वर्द्धतां मङ्गलयुक्तो भवतु। ते तव मङ्गलकर्म्माणि शुभमयानि मालविका-वकुलावलिकयोः मोचनादिकार्य्याणि, सिद्धानि सम्पन्नानि, कृतो मया त्वदभिलषितः मालविकावकुलावलिकयोर्मोचनव्यापार इति भावः।

(प) नियोगम् आत्मनः कर्त्तव्यं प्रतीहारीजनोचितं शुद्धान्तरक्षाकर्म्म, अशून्यं स्वेनाधिष्ठितं कुरु स्वीयकर्त्तव्ये व्यापृता भव इत्यर्थः। एतच्च प्रतीहार्य्या अपसारण-

---

রাজা। অভীষ্ট বিষয়ের প্রাপ্তিনিমিত্ত প্রযোজিত উপায় একান্ত ফলোপধায়ক হইলেও, তদ্দ্বারা কার্য্যসিদ্ধি হইবে কি না, সংশয়াকুল হইয়াই মন ব্যাকুল ভাবে আশঙ্কা করে॥ ৫॥

(বিদূষকের প্রবেশ)। বিদূ। আপনার জয় হউক। ভবদীয় মঙ্গল কর্ম্মসকল সিদ্ধ হইয়াছে। (ন)

जय। जं देवो आणवेदि। (इति निष्क्रान्ता।) [यद्दे व आज्ञापयति।] (फ)

राजा। गौतम! क्षुद्रा माधविका, न खलु किञ्चिद्विचारितमनया। (ब)

विदू। देवीए अङ्गुलीअअमुद्दिअं देक्खिअ कहं विआरेदि? [देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति?] (भ)

राजा। न खलु मुद्रामधिकृत्य ब्रवीमि। एतयोर्द्वयोः किं-

---

अभिप्रेत्य। रहस्यालापानां सर्व्वेषां प्रतीहारीसमीपे कर्त्तुमयोग्यतया तदपसारणानन्तरमेव तदौचित्यात्।

(ब) माधविका तदाख्या पातालगृहरक्षाधिकारे नियुक्ता देव्याः परिचारिका, क्षुद्रा स्वल्पबुद्धिः अनधिगतबुद्धिनैपुण्या इत्यर्थः। खलु यस्मात् अनया माधविकया किञ्चित् भवती नैपुण्यप्रयोगमधिकृत्य इत्यर्थः। न विचारितं विशेषेण चिन्तितं, प्रकृतम् अज्ञात्वा भवतः कृत्रिमक्रियामुग्धा एव मालविकां वकुलावलिकाञ्च मोचितवतीति भावः। यद्यसौ अल्पमतिर्न स्यात् तदा कथमीदृशं कठोरं रक्षाविधौ नियुक्तापि त्वच्चातुर्य्यमोहेन ते परित्यजेदिति भावः।

(भ) देव्याः धारिण्याः अङ्गुरीयकमुद्रां तन्नामाङ्कितमङ्गुरीयकं दृष्ट्वा कथं केन प्रकारेण विचारयति चातुर्य्यं मे जानाति, तथाहि देवीपरिजनो देव्या निर्द्दिष्टमङ्गुरीयकं दृष्ट्वा यत् इमे मोचितवती तत्र नास्ति तस्या बुद्धिलाघवावकाशः यथानिर्द्देशं कर्म्मणः करणात्।

---

রাজা। জয়সেনে! তুমি এক্ষণে স্বীয় কর্ত্তব্যকর্ম্মে ব্যাপৃত হও। (প)

জয়। যে আজ্ঞা মহারাজ। ( এই বলিয়া নিষ্ক্রমণ। ) (ফ)

রাজা। গৌতম! মাধবিকার বুদ্ধি অতি সামান্য। সেই জন্যই সে কোনরূপ বিচার করিল না। (ব)

বিদূ। দেবীর অঙ্গুরীয়মুদ্রিকা দেখিয়া আর কি বিচার করিবে? (ভ)

निमित्तो मोक्षः, किंवा देव्या परिजनमतिक्रम्य भवान् सन्दिष्ट इत्येव तया प्रष्टव्यम्? (म)

विदू। णं पुच्छिदोह्मि। पुणो मन्दस्स मे तस्सिं पच्चुप्पण्णा मदी। [ ननु पृष्टोऽस्मि। पुनर्मन्दस्य मे तस्मिन् प्रत्युत्पन्ना मतिः। ] (य)

---

(म) मुद्रां देव्याः मुद्राङ्कितमङ्गुरीयकम् अधिकृत्य आश्रित्य न ब्रवीमि न माधविकायाः क्षुद्रत्वमनुसन्दधामि इत्यर्थः। तथाहि देव्याः अङ्गुरीयकं दृष्ट्वा कथमिमे माधविका मोचितवतीत्यत्र न तस्या बुद्धिहीनतां कल्पयामि इति भावः। किन्तु एतयोः मालविका-वकुलावलिकयोः मोक्षः बन्धनात् मुक्तिः, किंनिमित्तः किंहेतुकः, कस्मात् हेतोः राज्ञी इमे मोचयितुमादिष्टवती, किं वा कथं वा देव्या धारिण्या परिजनं स्वीयपरिचारिकादिकम् अतिक्रम्य परित्यज्य भवान् राजवयस्यो जनः सन्दिष्टः आदिष्टः, इत्येव एतन्मात्रमेव तया माधविकया प्रष्टव्यं प्रष्टुं योग्यम्। तथाहि माधविका यत् तयोः सहसा बन्धनमोक्षस्य परिजनातिक्रमेण भवतः तत्क्रियायां नियोगस्य च कारणमपृष्ट्वा ते मोचितवती इत्येतत् बुद्धिहीनतायां प्रमाणमिति भावः।

(य) ननु सम्बोधने, तच्च सम्बोधनं स्वोत्कर्षप्रकाशाभिनयमनुकूलयति। पृष्टः अस्मि तया भवता सम्भावितं वस्तु इति शेषः। पुनः किन्तु, मन्दस्य मूर्खस्य मे मम, विपरीतलक्षणया अतिनिपुणस्य इत्यर्थः। तस्मिन् समये प्रत्युपन्ना कालक्रमेण सहसा जाता मतिः बुद्धिः आसीदिति, तत्प्रश्नस्य उत्तरमहमपि प्रत्युत्पन्नमतित्वप्रकर्षेण उपपादितवानस्मि इति भावः।

---

রাজা। আমি মুদ্রাসম্বন্ধে বলিতেছি না। কিজন্ত দেবী তাহাদের দুইজনের মুক্তির আদেশ দিলেন এবং পরিজনদিগকে ত্যাগ করিয়া কি নিমিত্তই বা তোমাকে ইহা করিতে বলিলেন, তাঁহার এ বিষয় জিজ্ঞাসা করা উচিত ছিল না কি? (ম)

বিদূ। মহারাজ! জিজ্ঞাসা করিয়াছিল বৈ কি? কিন্তু আমি মূর্খ হইলেও, সে সময়ে আমার তৎকালোচিত বুদ্ধির উদয় হইয়াছিল। (য)

राजा। कथ्यताम्। (र)

विदू। भणिदा मए—देव्वचिन्तएहिं विण्णाविदो राआ। सोवसग्गं वो णक्खत्तं। ता अवस्सं सव्वबन्धमोक्खो करीअदुत्ति। [भणिता मया—दैवचिन्तकैर्विज्ञापितो राजा। सोपसर्गं वो नक्षत्रम्। तदवश्यं सर्व्वबन्धमोचः क्रियतामिति।] (ल)

राजा। (सहर्षं।) ततस्ततः? (व)

---

(र) कथ्यतां कथं प्रत्युत्पन्नमतित्वप्रभावेण उत्तरं कृतवानसि तदुच्यतामित्यर्थः।

(ल) भणिता कथिता सा माधविकेति शेषः। दैवचिन्तकैः नियतिप्राज्ञैः ज्यौतिषिकैरित्यर्थः। विज्ञापितः उक्तः। किमित्याह—सोपसर्गमिति। वः युष्माकं गौरवे बहुत्वम्। नक्षत्रं ग्रहः सोपसर्गं सोपद्रवम्, अनिष्टजननसामर्थ्यवदित्यर्थः। अथवा नक्षत्रं जन्मनक्षत्रं सोपस॰ पापग्रहापविद्धं, तथा सति सर्व्वविधामङ्गलसम्भवात् अत्यन्तानिष्टफलकमिति भावः। तत् तस्मात् अवश्यं सर्व्वबन्धनानां मोचः मोचनं क्रियतामिति भणिता इति अन्वयः। तेनैव तद्दोषोपशमनात् अनिष्टापगमो भविष्यतीति भावः। "उपसर्गः स्मृतो रोगभेदोपप्लवयोरपी"ति विश्वः। जन्मताराया: पापग्रहापविद्धत्वे दोषस्य शास्त्रिकं प्रमाणं यथा—"ईहा देहार्थहानिः स्याज्जन्मर्क्ष उपतापिते" इति। शान्तिपर्व्वणि बन्धमोचेण शान्तिप्रमाणं यथा—"बन्धमोक्षे सर्व्वशान्तिर्नृपाणामुपजायते" इति।

(व) सहर्षं हर्षसाहचर्य्येण, हर्षश्च विदूषकस्य चतुरतया आत्मकर्म्मसाधनीयमदर्शनजन्यः। ततस्ततः तदनन्तरं किमभवदिति शेषः। द्वित्वं हर्षातिशयसम्भ्रमे।

---

রাজা। কি উত্তর দিয়াছিলে, বল? (র)

বিদূ। আমি বলিলাম, জ্যোতির্বিদ্ রাজাকে জানাইয়াছে—'আপনার জন্মনক্ষত্র উপসর্গ—(পাপগ্রহ) গ্রস্ত হইয়াছে। তজ্জন্য সমুদায় বন্দীর মোচন অবশ্য করিতে হইবে।' (ল)

রাজা। (সহর্ষে) তারপর, তারপর? (ব)

विदू। तं सुणिअ देवीए इरावदीचित्तं रक्खन्तीए 'राआ किल मोएदि' त्ति अहं संदिट्ठोति। तदो जुज्जदि त्ति ताए संपादिदो अत्थो। [तत् श्रुत्वा देव्या इरावतीचित्तं रक्षन्त्या 'राजा किल मोचयती'ति अहं सन्दिष्ट इति। ततो युज्यत इति तया सम्पादितोऽर्थः।] (ग)

राजा। (विदूषकं परिष्वज्य।) सखे! प्रियोऽहं खलु तव। (घ)

---

(ग) तत् श्रुत्वा देवचिन्तकेन उक्तं तत् वस्तु आकर्ण्य देव्या धारिण्या इरावत्याः तदाख्यायाः राज्ञ्याः चित्तं मनः रक्षन्त्या तन्मनःसमनुवर्त्तनं कुर्व्वत्या इत्यर्थः। राजा देवः अग्निमित्र एव मोचयति मालविका-वकुलावलिके बन्धनात् परित्यजति इति प्रतिपाद्य इति शेषः। अहं राजपरिजनः विदूषकः सन्दिष्टः आदिष्टः। तथाचाय-मभिप्रायः—इरावती अशोकपादपतले राज्ञा सह मालविकायाः प्रेमप्रकारं प्रत्यक्षीकृत-वती, तत्र च वकुलावलिका तत्सहकारिणी तेन मालविकाया वकुलावलिकायाय उपरि तस्या भूयान् कोपः समजनि, सञ्जातकोपया च इरावत्या विज्ञापिता धारिणी तच्चित्तरक्षणाय स्वपरिजनमपि मालविकां वकुलावलिकासहचरितं पातालगृहे निरुद्धवती। अथ इदानीं यदि स्वयमेव तस्या मोचनं साधयेत तदा इरावती तत्र महान्तं विरागमेव धारयेत् इति मोचनस्य राजकर्त्तृकत्वभावनया आत्मनि इरावत्या विरागप्रतिबन्धे यत्नवती देवी राजपरिजनं गौतममेव मां नियुक्तवतीति, अन्यथा शङ्कात्र न कार्य्या इति। ततः ईदृशवाक्यकथनानन्तरं युज्यते समञ्जसं भवति भवती वचनमिति शेषः। इति उक्त्वा, तया माधविकया, अर्थः तयोः मोचनरूपव्यापारः सम्पादितः निष्पादितः। सुतरामिदं प्रत्युत्पन्नमतित्वं नाम विदूषकस्य येन चातुर्य्याभिमानमयं कर्त्तुं पारयति इति भावः।

---

বিদূ। এই কথা শুনিয়া দেবী, ইরাবতীর মন রক্ষা করিয়া 'মহারাজই বন্ধনমুক্ত করিবেন' এইরূপ স্থির করাতে রাজপরিজন বলিয়া আমিই বন্ধন মোচনার্থ আদিষ্ট হইলাম। এই কথায় সে 'ইহা সম্ভব বটে' এরূপ মত প্রকাশ করিয়া উপস্থিত বিষয়ে সম্মত হইল (বন্ধন মোচন করিয়া দিল)। (শ)

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्य्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ ६ ॥

[ अन्वयः । सुहृदां बुद्धिगुणेनैव अर्थदर्शनं न हि, स्नेहेन सूक्ष्मः कार्य्यसिद्धिपथः अपि उपलभ्यते । ६ ]

---

(ष) परिष्वज्य आलिङ्ग्य । अहं खलु निश्चितं तव प्रियः प्रीतिविषयः, अन्यथा एतावत् मृषावचनादिकमपि आश्रित्य न मत्प्रियाचरणप्रवृत्तिः स्यादिति भावः ।

६ । अथ मत्प्रीतिरेव त्वां तथा प्रत्युत्पन्नमतित्वमुपदिशदित्यभिप्रेत्याह— नहीत्यादिना । सुहृदां बन्धूनाम् अर्थदर्शनं सुहृज्जनेष्टवस्तुज्ञानं बुद्धिगुणेनैव मतिप्रकर्षमात्रेणैव नहि भवति, तथाहि यत्त्वम् अस्मदिष्टं वस्तु साधयितुमुपक्रान्तः सूक्ष्मं पन्थानं कमपि लब्धवान् तत्र न केवलं तव बुद्धिप्रकर्ष एव हेतुतामावहतीति भावः । तत् किमत्र कारणमित्याकाङ्क्षायां साधारणमुखेन स्नेहहेतुकत्वं प्रतिपादयति—कार्य्येत्यादिना । किन्तु स्नेहेनापि प्रियजनस्य प्रणयविशेषेणापि सूक्ष्मः अतिगहनः सहसा लक्षयितुमशक्य इत्यर्थः । कार्य्यसिद्धिपथः कर्म्मणः साफल्यसम्पादनमार्गः उपलभ्यते प्राप्यते । तथाहि प्रियस्य कार्य्यसाधनोपक्रमे साभिनिवेशं तदुपायचिन्तनात् सूक्ष्मतमोपायाविर्भावो भवतीत्यत्र स्नेह एव प्रधानहेतुरिति भवतोऽपि मयि स्नेहातिरेकादयमुपायः प्रतिभात इति भावः । अत्र सुहृत्सामान्यानाम् अर्थदर्शने बुद्धिप्रभावमात्रप्रयोज्यत्वनिराकरणेन स्नेहप्रयोज्यत्वव्यवस्थापनेन च वस्तुना विशेषस्य विदूषकस्य तथा तथा कर्म्मणः प्रत्यायनात् अप्रस्तुतप्रशंसालङ्कारः सामान्यादप्रस्तुतात् विशेषस्य प्रस्तुतस्य प्रतीतिरूपः । अत्र केचित् किन्तुशब्दस्य द्वितीयार्द्धे अनिर्द्देशात् वाच्यानभिधानदोषमाहुः ।

---

রাজা । ( বিদূষককে আলিঙ্গন করিয়া । ) সখে ! আমি নিশ্চয়ই তোমার প্রিয় । (ষ)

প্রিয় সুহৃদ্‌গণের কেবল বুদ্ধিগুণেই স্বস্ববন্ধুজনের অভীষ্ট কার্য্যসাধন হয় না ; স্নেহদ্বারাও অভীষ্ট কার্য্যসিদ্ধির অভাবনীয় পন্থা আবিষ্কৃত হইয়া থাকে ॥৬॥

विदू। तुवरदु भवं। समुद्दघरए सहीसहिदं मालविअं ठाविअ भवन्तं पच्चुग्गदोह्मि। [त्वरतां भवान्। समुद्रगृहके सखी-सहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि] (स)

राजा। अहमेनां सम्भावयामि। गच्छाग्रतः। (ह)

विदू। एदु एदु भवं। (परिक्रम्य।) एदं समद्दघरं। [एतु एतु भवान्। एतत् समुद्रगृहम्।] (च)

राजा। (साशङ्कम्।) वयस्य! एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते

---

(स) भवान् त्वरतां सत्वरीभवतु। समुद्रगृहके समुद्रवत् गृहं तदेव समुद्रगृहकं तस्मिन् समुद्रवत् विस्तृतत्वात् शीतलत्वात् दुरवगाहत्वाच्च तत्सदृशे, एतेन मालविकया सह सम्भोगयोग्यतायां निर्ब्बाधिता तत्र प्रतीयते। सखीसहितां वकुलावलिका सहचरितां मालविकां स्थापयित्वा बन्धनमोचनानन्तरं तत्र प्रापय्य भवन्तं प्रत्युद्गतः अभ्यर्थयितुम् आगतः अस्मि, अतस्तत्र सत्वरमेव गच्छतु भवानिति भावः।

(ह) एनां मालविकां सम्भावयामि अभ्यर्थयामि, सत्वरमेव तत्र गत्वा तस्याः सम्भावनां रचयामि इत्यर्थः। एतेन मालविकायामादरातिशयो व्यक्तः। अग्रतः गच्छ त्वमिति शेषः।

(च) परिक्रम्य किञ्चित् गत्वा, पटान्तरे प्रविश्य इत्याधुनिकनियमेन, प्राचीननियमे तु तथात्वे पूर्व्वांशस्य अङ्कत्वापत्तिरुदेति सर्व्वपात्रनिष्क्रमणात्। एतत् दृश्यमानं समुद्रगृहम्।

---

বিদূ। আপনি এক্ষণে সত্বর হউন। আমি সমুদ্রগৃহমধ্যে সখীর সহিত মালবিকাকে রাখিয়া আপনার নিকট আসিয়াছি। (স)

রাজা। আমি ইহাঁর অভ্যর্থনা করিতেছি। তুমি অগ্রে অগ্রে গমন কর। (হ)

বিদূ। আসুন, আসুন। ( পরিক্রম করিয়া ) এই সমুদ্রগৃহ। (ক্ষ)

परिचारिका चन्द्रिका सन्निकृष्टमागच्छति । इतस्तावदावां भित्तिगूढ़ौ भवाव: । (क)

विदू । अहो ! कुम्भीलएहिं कामुएहिं च परिहरणीआ चन्द्रिआ । [ अहो ! कुम्भीलकै: कामुकैश्च परिहरणीया चन्द्रिका । ] (ख)

---

(क) साशङ्कं शङ्कितभावेन, शङ्का च इरावत्या: सख्या: प्रकृतवृत्तविज्ञाने महानिष्टसम्भावनात् । कुसुमावचये पुष्पचयने व्यग्रौ व्यापृतौ हस्तौ यस्या: तथाभूता पुष्पचयनव्यासक्ता ते तव सख्या: इरावत्या: । चन्द्रिका तदाख्या । सन्निकृष्टम् अतिसमीपम् आगच्छति उपसर्पति । सा यदि आवां पश्येत् तदा नूनं स्वस्य अधिकारिणीं विज्ञाप्य महानिष्टमुत्पादयेदिति भाव: । अत: इत: अस्मिन् स्थाने आवां भित्त्या कुड्येन गूढ़ौ प्रच्छादितशरीरौ भवाव: । यथा सा न द्रष्टुं समर्थयते इति भाव: । एतद्धि राज्ञोऽग्निमित्रस्य दक्षिणनायकस्वभावं सुतरां व्यक्तीकरोति, मालविकोपसर्पणेऽपि इरावतीचित्तरक्षणोपयोगिवस्तुप्रवर्त्तनात् ।

(ख) कुम्भीलकै: चौरै: कामुकै: कामप्रवृत्तिपरतन्त्रै: लम्पटैरित्यर्थ: । चन्द्रिका कौमुदी इरावत्या: तदाख्या परिचारिका च परिहरणीया दूरे रक्षणीया, तथाहि कुम्भीलक: अन्धकारे चोरयन्नेव नान्यैरुपलक्ष्यते, ज्योत्स्नाप्रदीप्ते च अन्यैरुपलक्ष्यमाण: निरुध्यते, कामुक: अपि तथा इति युज्यते एव कामुकस्य चौरवत् इरावतीमन्तरेण प्रच्छाद्य मालविकामुपसर्पतो भवत: चन्द्रिकापरिहार इति भाव: । चन्द्रस्य चन्द्रिका साधारणेषु चौरं प्रकाशयति, इयमपि चन्द्रिका इरावत्या राजानं प्रकाशयेत् इति साम्यम । अत्र चौरै: कामुकैश्च सामान्यै: ज्योत्स्नापरिहाररूपेण सामान्येन कामुकविशेषस्य राज्ञश्चन्द्रिकाख्यपरिजनपरिहारप्रत्ययात् अप्रस्तुतप्रशंसालङ्कार: । अप्रस्तुतयो: कुम्भीलकसामान्यकामुकयोर्द्वयोरेकपरिहरणक्रियासम्बन्धात् तुल्ययोगिता

---

রাজা । ( সাশঙ্কভাবে ) বয়স্য ! তোমার সখী ইরাবতীর পরিচারিকা চন্দ্রিকা, কুসুমচয়ন করিতে করিতে নিকটেই আগমন করিতেছে । সুতরাং আমরা উভয়ে এইস্থানেই ভিত্তির অন্তরালে লুক্কায়িত হইয়া অবস্থিতি করি । (ক)

( उभौ यथासमर्थितं कुरुतः। ) (ग)

राजा। **गौतम! कथं नु ते सखी मां प्रतिपालयति—एहि एनां गवाक्षमाश्रित्य यावदवलोकयामि।** (घ)

विदू। **तहा।** [तथा।] (ङ)

( उभौ विलोकयन्तौ स्थितौ। ) (च)

[ ततः प्रविशति मालविका बकुलावलिका च। ] (छ)

बकुला। **सहि! पणम भट्टारं।** [सखि! प्रणम भर्त्तारम्।] (ज)

---

लङ्कारः। चन्द्रिका इत्यत्र श्लेषेण अभेदाध्यवसायप्रत्ययादतिशयोक्तिश्च तेषामङ्गाङ्गिभावप्रत्ययेन सङ्करः।

(ग) उभौ राजा विदूषकश्च इत्येतौ द्वौ। यथासमर्थितं यथोक्तं भित्त्यन्तराले आत्मगोपनं कुरुतः। भित्तिगूढौ भवत इत्यर्थः।

(घ) ते तव सखी मत्सम्बन्धात् प्रिया मालविका कथं केन प्रकारेण मां प्रतिपालयति प्रतीक्षते, कीदृशावस्थया मदपेक्षां करोति इत्यर्थः। गवाक्षमाश्रित्य वातायनलग्नौ भूत्वा एनां मालविकाम् अवलोकयामि पश्यामि।

(ङ) तथा तदेव कुरु इत्यर्थः।

(च) उभौ राजविदूषकौ। विलोकयन्तौ गवाक्षमार्गेण पश्यन्तौ।

---

বিদূ। চোর ও কামুক ইহাদের উভয়েরই চন্দ্রিকা পরিহার করা অবশ্য কর্ত্তব্য। (খ)

( উভয়ের পূর্ব্বকথিতানুরূপ অনুষ্ঠান। ) (গ)

রাজা। তোমার সখী মালবিকা কি ভাবে আমার অপেক্ষা করিতেছেন—আইস, গবাক্ষ দিয়া ইহাকে অবলোকন করি। (ঘ)

বিদূ। আচ্ছা। (ঙ)

( অবলোকনকরত উভয়ের অবস্থান। ) (চ)

[ অনন্তর মালবিকা ও বকুলাবলিকার প্রবেশ ]। (ছ)

माल। णमो दे जो पासदो पिट्ठदो पेक्खीअदि। [ नमस्ते यः पार्श्वतः पृष्ठतः प्रेक्ष्यते। ] (झ)

राजा। शङ्के मे प्रतिकृतिं निर्दिशति। (ञ)

माल। (सहर्षं द्वारमवलोक्य।) हला! मं विप्पलम्भेसि। [ हला! मां विप्रलम्भयसि।] (ट)

---

(ज) भर्त्तारं स्वामिनम् अग्निमित्रं, प्रणम अभिवादयस्व। अन्यथा सम्मानव्यतिक्रमः स्यादिति भावः।

(झ) यः जनः पार्श्वतः पार्श्वे, पृष्ठतः पश्चात् च प्रेक्ष्यते दृश्यते, अनवरतकल्पनावशात् सर्व्वत्रैव दृष्टिविषयीभवति, ते तस्मै नमः अस्तु इति शेषः। केचित्तु शृङ्गार-लज्जाक्रमणात् अधिकवचनव्याघातात् नमस्ते इति वचनमात्रमेव मालविकायाः कल्पयन्ति, तदस्माकमपि मनोरमम्।

(ञ) मे मम प्रतिकृतिं चित्रितमूर्त्तिं मदीयमूर्त्तिसमन्वितं तैलचित्रादिकमित्यर्थः। निर्दिशति निध्यायति, चक्षुषा सानुरागं पश्यतीत्यर्थः। इति शङ्के मन्ये। एतेन तत्र स्वीयचित्रसद्भावः, मालविकायाश्चित्रदर्शनरूपकामजविकारोऽपि व्यज्यते, नायिकायाः नायकचित्रदर्शनाद्यासक्तिज्ञानं नायकस्यापि अनुरागवृद्धिहेतुरिति राजानुरागबाहुल्यस्य असमञ्जसताप्रदर्शनाय कविना एतदुपन्यस्तमिति केचित् ब्रुवते।

(ट) सहर्षं राज्ञा दर्शनयोग्यतां विभाव्य दर्शनजन्यसुखकल्पनातो हर्षः। द्वारं राजागमनयोग्यं द्वारभागम् अवलोक्य तदवलोकनानन्तरं राजानमदृष्ट्वा इति भावः। हलेति सखीसम्बोधने। मां विप्रलम्भयसि प्रतारयसि, तथाहि भर्त्ता अग्निमित्रः न

---

বকুল। সখি! মহারাজকে প্রণাম কর। (জ)

মাল। যিনি পার্শ্বে ও পশ্চাতে (সর্ব্বদা) দৃশ্যমান হইতেছেন, তাঁহাকে নমস্কার। (ঝ)

রাজা। বোধ হয় আমার প্রতিমূর্ত্তি লক্ষ্য করিয়া বলিতেছেন। (ঞ)

राजा। हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि। (ठ)

सूर्य्योदये भवति या सूर्य्यास्तमये च पुण्डरीकस्य।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढ़े ॥७

[ अन्वयः। पुण्डरीकस्य सूर्य्योदये या सूर्य्यास्तमये च भवति ते समवस्थे सुवदनायाः वदनेन क्षणात् ऊढ़े। ७ ]

वकुला। णं एसो चित्तगदो भट्टा। [ नन्वेष चित्रगतो भर्त्ता। ] (ड)

---

आगतः, तथापि यत् तत्प्रणामादिशकरणात् माम् उन्मुखीकरोषि तदन्याय्यमेव इति भावः।

(ठ) अत्रभवत्याः सुतरामादरणीयायाः, मालविकायाः हर्षविषादाभ्यां मदागमनसम्भावनया हर्षः, मददर्शनाच्च विषादः ताभ्यां प्रीतः सन्तुष्टः अस्मि, अनेन मयि सुतरामनुरागस्य प्रत्ययादिति भावः।

७। अथ प्रीतिकारणमनुवर्णयति—सूर्य्योदये इत्यादिना। पुण्डरीकस्य पद्मस्य श्वेतसरोरुहस्य इत्यर्थः। मुखस्य गौरवर्णतया पुण्डरीकस्येत्युक्तिः सङ्गता। सूर्य्योदये सूर्य्यस्य उदयवेलायां प्रातःसूर्य्यकिरणसम्पर्कें सतीत्यर्थः। या समवस्था सूर्य्यस्य अस्तमये अस्तमनवेलायां च या समवस्था भवति इत्युभयत्रैव अन्वेति। उदयवेलायां पुण्डरीकस्य विकाशरूपा अस्तमनवेलायाञ्च सङ्कोचरूपावस्था जायते इति प्रकृते प्रतिपत्तव्यम्। सुवदनायाः सुन्दराननायाः मालविकायाः विशेषणमात्रेण विशेष्यबोधनं वदनस्य साधारणजनवदनवैलक्षण्यद्योतनाय प्रकृते पुण्डरीकसादृश्यप्रतिपादनाय च इति मन्तव्यम्। वदनेन मुखेन ते समवस्थे प्रकारौ प्रकाशसङ्कोचरूपे हर्षविषादात्मिके इति भावः। क्षणात् क्षणमात्रेण ऊढ़े अवलम्बिते। तथाहि मालविकायाः क्षणमात्रेणैव पुण्डरीकसदृशवदनेन हर्षविषादभावसूचनात् तयोरय

---

'माल। ( सहर्षে দ্বার অবলোকন করিয়া ) সখি! আমাকে প্রতারিত করিতেছ? (ট)

রাজা। আমি ইহাঁর হর্ষ ও বিষাদে প্রীত হইলাম। (ঠ)

উভে। ( প্রণিপত্য। ) জেদু জেদু ভট্টা। [ জয়তু জয়তু ভর্ত্তা। ] (ঢ)

মাল। হলা! তদা সংভমদিট্ঠে ভট্টিণো রূবে জহা ণ বিতিণ্‌হম্হি, তহা অজ্জবি মএ ভাবিদো অবিতিণ্‌হদংসণো ভট্টা। [ হলা! তদা সম্ভ্রমদৃষ্টে ভর্ত্তু রূপে যথা ন বিতৃষ্ণাস্মি, তথা অদ্যাপি ময়া ভাবিতোঽবিতৃষ্ণদর্শনো ভর্ত্তা। ] (ণ)

---

মদ্ধেতুকত্বাত্ তদ্বিজ্ঞানাত্ মম প্রীত্যতিশয়ো জাত ইতি ভাবঃ। অত্র তে ইতি তচ্ছব্দেন পুণ্ডরীকাবস্থাপরামর্শাত্ অন্যাবস্থায়া অন্যেন বহনমশক্যমিত্যাপাততঃ বাক্যার্থপ্রতিপত্তৌ বাধাত্ পর্য্যবসানে সাদৃশ্যোপরাগেণ বাক্যার্থপ্রতিপত্ত্যা অসম্ভবদ্বস্তু-সম্বন্ধরূপনিদর্শনালঙ্কারঃ। তেন চ মুখস্য পুণ্ডরীকসাম্যং ব্যঙ্গ্যম্। সূর্য্যোদয় ইতি সূর্য্যাস্তময় ইতি চ দ্বিধা সূর্য্যপদপ্রয়োগাত্ কথিতপদতাদোষঃ। তস্যাস্তময়ে চ ইতি পাঠেন সমাধেয়ঃ। সমবস্থে ইত্যত্র সমশব্দপ্রয়োগাত্ অবস্থায়া উত্কর্ষঃ প্রীতিজনন-যোগ্যতা চ ব্যক্তা। আর্য্যা জাতিঃ।

(ড) এষঃ পুরতো বর্ত্তমানঃ চিত্রগতঃ চিত্রে লিখিতঃ ভর্ত্তা স্বামী অগ্নিমিত্রঃ। তথাহি নাহং ত্বাং প্রতারয়ামি অপিতু সত্যমেব তে বদামি ইতি ভাবঃ

(ঢ) উভে মালবিকা বকুলাবলিকা চ প্রণিপত্য চিত্রগতং ভর্ত্তারং প্রণম্য।

(ণ) তদা উদ্যানে প্রথমে দর্শনাবসরে, সম্ভ্রমেণ ত্বরয়া দৃষ্টে আলোকিতে ভর্ত্তুঃ স্বামিনঃ রূপে লাবণ্যে, যথা ন বিতৃষ্ণা আকাঙ্ক্ষাশূন্যা অস্মি ইদানীং তদ্দর্শনেন নাহং সুতরাং তৃপ্তা অভবমিতি, স্বল্পকালদর্শনাত্ সম্ভ্রমকল্পনাচ্চ ইতি ভাবঃ। তথা তদ্বত্ অদ্যাপি ইদানীং সম্ভ্রমশূন্যাবস্থায়াং চিত্রগতস্য তস্য স্থৈর্য্যেণ দর্শনকালেঽপৌৎস্যঃ।

---

সূর্য্যের উদয় ও অস্ত—এই উভয় সময়ে পদ্মের যে অবস্থা হয়, এই সুবদনার বদনমণ্ডল ক্ষণমধ্যে তৎসাদৃশ্য ধারণ করিয়াছে ॥৭॥

বকুলা। এই যে প্রতিকৃতিস্থ মহারাজ। (ড)

উভয়ে। ( প্রণিপাতপূর্ব্বক ) মহারাজের জয় হউক, মহারাজের জয় হউক। (ঢ)

विदू। सुदं भवदा ?। णं किं अत्तभोदी तुए जह दिट्ठा तह ण दिट्ठो भवम् ? मुद्धा दाणिं मञ्जुमा विम रअणभण्डं जोव्वणगव्वं वहेसि। [श्रुतं भवता ?। ननु किमत्रभवती त्वया यथा दृष्टा तथा न दृष्टो भवान् ? मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि। ] (त)

---

मया भर्त्ता अवितृष्णदर्शनः न विद्यते वितृष्णा अपरागः यत्र तादृशं दर्शनं ज्ञानं चाक्षुषप्रत्यक्षं वा यस्य तथाभूतं यद्विषयकेण दर्शनेन कदापि न वितृष्णा जायते तथाभूत इत्यर्थः। भावितः चिन्तितः, तथाहि आदौ तदानीं राज्ञा दर्शनेन सम्भ्रमसमुच्चलिता अहम् अधिककालं स्थैर्य्येण तमालोकयितुमशक्नुवाना अतृप्ता एवमेव निश्चितवती यत् अल्पकालदर्शनेन एव मम तृप्तिराहित्यम् सम्भ्रमवशादस्थिरदर्शनेन च ; किन्तु इदानीमपि तथा तृप्तिराहित्येन असेचनकतामेव राजनि निश्चिनोमि इति भावः। एतेन मालविकाया राजनि भूयाननुरागः राज्ञः सौन्दर्य्यप्रकर्षश्च व्यज्यते। एष हि उपक्रमः कवेर्नायकस्य रागातिशयसम्पत्तिमामन्त्रयचणाय, प्रियजनप्रीतिविज्ञानं हि समधिकमनुकूलयति प्रेमाणमिति लौकिको नियमः। सम्भ्रमदृष्टत्वं वितृष्णायां हेतुरिति पदार्थगतं काव्यलिङ्गं कथ्यते। अद्यापि इत्यादिभागेन विभावनेति केचिद् वदन्ति।

(त) भवता श्रुतम् आकर्णितम् अत्रभवत्या वचनमिति शेषः। प्रश्नात्मकमिदं वाक्यम्। ननुः प्रश्ने, त्वया अत्रभवती मालविका यथा येन प्रकारेण अनुरागसहकारेण इत्यर्थः। दृष्टा आलोकिता, यथा त्वमस्या उपरि प्रणयवान् जात इत्यर्थः। तथा तेन प्रकारेण अनुरागसहकारेण इत्यर्थः। भवान् न दृष्टः आलोकितः, अपि तु त्वया यथा अस्यामतिमात्रो रागः प्राप्तः तथा अनयापि त्वयीति भावः, प्रश्नविधया तदर्थप्रत्यायनेन अवश्यम्भावित्वं प्रकृतविषयस्य व्यवस्थाप्यते, इदानीं यौवनजनितप्रकर्षसमुपस्थितावपि इत्यर्थः। मञ्जुषा रत्ननिधानपेटिका रत्नभाण्डं रत्नसमन्वितपात्रविशेषमिव मुधा वृथा यौवनगर्वं यौवन-

---

মাল। তখন অশোককুঞ্জে তাড়াতাড়ি মহারাজের রূপ দেখিয়া আমার আশা মিটে নাই, কিন্তু এখন সুস্থভাবে তাঁহার প্রতিমূর্ত্তি দেখিয়াও দর্শনাশা পরিপূর্ণ হইতেছে না। (ণ)

राजा। सखे! कुतूहलवानपि निसर्गशालीनः स्त्रीजनः। पश्य। (थ)

---

जनितप्रकर्षातिरेकं वहसि धारयसि, तथाहि यथा मञ्जूषा स्वगर्भे धारितस्य रत्न-निचयस्य गौरवं न जानाति निरर्थकं वहत्येव तथा एव त्वमपि आत्मनो यौवनगर्व्वस्य महिमानं न जानासि, येन आत्मनि तथा नास्ति ते प्रकर्षज्ञानम्। अयमभिप्रायः—यत् मालविका तव यौवनजन्यं सौष्ठवमवलोकयन्ती त्वदधीना जाता इत्यत्र को हि नाम विस्मय इति। एतेन तस्यां तवेव तस्या अपि त्वयि जातरागत्वात् सम्भोगस्य अनायास-साध्यतया तदर्थं सयत्नो भवेति भावो व्यज्यते। उपमा स्पष्टा। मञ्जूषा वहति त्वन्तु वहसि इति उपमानोपमेययोः क्रियाव्यत्ययेनान्वयस्य कर्त्तव्यतया उपमागतो भग्नप्रक्रमत्व-दोषः। स च वाच्यभेदकल्पनया कथञ्चित् समाधेयः। लिङ्गभेदजन्यता तु भग्न-प्रक्रमतायां नाङ्गीक्रियते, लिङ्गभेदेऽपि उपमानोपमेयताप्रत्ययाव्याघातात्, साधारण-धर्म्मस्य उपमानोपमेयगतत्वप्रत्ययादेव तदुपपत्तेः। "मञ्जूषापि च मञ्जूषा पेटा च पेटिकेत्यपि" इति कोषविशेषः। केचित्तु मञ्जूषा यथा स्वगर्भस्थितरत्नभाण्डं वृथा वहति नतु तदुपभुङ्क्ते तथैव त्वमिदानीमपि आत्मनो यौवनं मालविकासम्पर्केण अनुपयुज्य वृथा वहसि, तत सत्वरमेव तामुपेत्य एतदुपभोगं कुरु इति भावमनुसन्दधते। परे च द्वितीयवाक्यमपि प्रश्नात्मकं ब्रुवते। तथाहि मञ्जूषा यथा रत्नभाण्डं वहन्ती वृथा धनगर्व्वं गच्छति, किं त्वमपि तथा निष्फलं यौवनगर्व्वं वहसि, अपि तु नैव, ललनाकुलललाम-भूताया मालविकाया अनुरागलाभेन यौवनगर्वस्ते सफल इति भाव इति।

(थ) सखे इति सम्बोधनं हृदयस्थितवस्तुकथनयोग्यताप्रदर्शनाय। "समप्राणः सखा मतः" इति परिभाषास्मरणात्। स्त्रीजनः नारीजनः कुतूहलवान् अनुराग-जन्यौतकण्ठाकुलोऽपि निसर्गेण प्रकृत्यां शालीनः लज्जाशीलः, तथाहि लज्जावशादेव

---

বিদূ। শ্রবণ করিলেন ত? আপনি ইহাকে যেরূপ ভাবে দর্শন করিয়াছিলেন, ইনি কি আপনাকে সেরূপভাবে দেখিতেছেন না? পেটিকা যেমন বৃথাই রত্নভাণ্ড বহন করে, আপনিও সেইরূপ এখন বৃথাই যৌবন-গর্ব্ব বহন করিতেছেন। (ত)

कार्त्स्न्येन निर्वर्णयितुञ्च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम्।
न च प्रियेष्वायतलोचनानां
समग्रवृत्तीनि विलोचनानि ॥८॥

[अन्वयः। आयतलोचनानां विलोचनानि प्रियेषु कार्त्स्न्येन रूपं निर्व्वर्णयितुं च इच्छन्ति, न च समग्रवृत्तीनि तत्पूर्व्वसमागमानाम्। ८]

---

रमण्यः निजान्तरगतमनुरागमपि न प्रकाशयन्ति, परं गुप्तमेव रक्षितुं चेष्टन्ते, तत एव निसर्गशालीनायाः मालविकाया भावमुन्नेतुं सम्यक् नालमस्मीति भावः। अत्र सामान्या-दप्रस्तुतात् प्रस्तुतस्य विशेषस्य प्रत्ययात् अप्रस्तुतप्रशंसालङ्कारः। पश्य आलोचय, दृशि-ज्ञानसामान्यार्थकत्वात्, वक्ष्यमाणमिति शेषः।

८। तमेवार्थं काव्यप्रदर्शनेन सहेतुकं करोति—कार्त्स्न्येनेत्यादिना। आयतानि सुदीर्घाणि लोचनानि नेत्राणि यासां तासां प्रशस्तनेत्राणां नारीणां विलोचनानि नेत्राणि, तैः नयनैः पूर्व्वं समागमः सम्मेलनं तत्करणकं प्रत्यक्षं येषां प्राक् चक्षुःकरणकप्रत्यक्ष-विषयीभूतानां प्रणयिजनानामित्यर्थः। रूपं सौन्दर्य्यं कार्त्स्न्येन सामग्र्येण निरवशेष-मित्यर्थः। निर्व्वर्णयितुं द्रष्टुम् इच्छन्ति वाञ्छन्ति, पूर्व्वदर्शनजन्यप्रीत्यतिशयेन पुनरपि दर्शनाशाया अविरतमेव उज्जृम्भणात् एकवारदर्शनेन अपरितोषादिति भावः। किन्तु तानि प्रियेषु प्रणयिजनेषु समग्रवृत्तीनि अप्रतिवन्धव्यवहाराणि न च भवन्तीति शेषः। तथाहि असमक्षं स्थिता दर्शनवेलायां निर्बाधमालोकयिष्ये न कस्यापि प्रतिबन्धकस्य बाधां सहिष्ये इत्येवं कल्पनाशतसङ्कुलापि प्रणयिनी दर्शनवेलायां न प्रभवति सुतरां शालीनतया एव निर्बाधमीक्षितुं प्रियजनमिति भावः। अत्रापि अप्रस्तुतस्त्रीसामान्यात् विशेषभूताया मालविकायाः प्रत्ययादप्रस्तुतप्रशंसालङ्कारः गतसमन्वयेन च अर्थान्तरन्यास एव। तत्पूर्व्वेत्यादौ व्यधिकरणबहुव्रीहिः सोढव्यः। वृत्तमुपजातिर्नाम।

---

রাজা। সখে! স্ত্রীজাতি কুতূহলসম্পন্ন হইলেও, স্বভাবতঃ লজ্জাযুক্ত হইয়া থাকে। (থ)

माल। हला! का एषा पासपरिवत्तिदवअणेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाअदि? [ हला! का एषा पार्श्वपरिवर्त्तितवदनेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते? ] (ट)

वकुला। णं इअं पासगदा इरावदी [ नन्वियं पार्श्वगता इरावती ] (ध)

माल। सहि! अदक्खिणो विअ मे भट्टा पडिभादि, जो सव्वं देवीअणं उज्झिअ एक्काए मुहे बद्धलक्खो। [ सखि! अदक्षिण इव मे भर्त्ता प्रतिभाति, यः सर्वं देवीजनम् उज्झित्वा एकस्या मुखे बद्धलक्ष्यः। ] (न)

---

(ट) एषा चित्रे दृश्यमाना, का किम्परिचया, पार्श्वं परिवर्त्तितं वक्रभावेण परिचालितं वदनं मुखं येन तथाभूतेन पार्श्वचालिताननेन भर्त्रा स्वामिना स्निग्धया स्नेहबहुलया दृष्ट्या कटाक्षपातेन, निध्यायते साभिनिवेशमीक्ष्यते। एतेन जिज्ञासितायां उपरि भर्त्तुरान्तरिको रागः सुमहान् व्यज्यते, स चायं परत एव व्यक्तीभवति, निध्यायते इत्यनेन साभिनिवेशदर्शनं गम्यते।

(ध) इयं त्वया जिज्ञासिता भर्त्रा निध्यायमाना इत्यर्थः। इरावती तदाख्या राज्ञः प्रिया इत्यर्थः।

(न) मे मम भर्त्ता स्वामी राजा अग्निमित्र इत्यर्थः। अदक्षिण इव दक्षिणनायकभावमुक्त इव, दाक्षिण्यशून्य इव इत्यर्थः। प्रतिभाति प्रतीयते, तथाहि अनेन व्यवहारेण

---

সমাগমের জন্য উৎকণ্ঠিত হইলেও অঙ্গনারা স্বভাবতঃ লজ্জাবতী; দেখ—আয়তলোচনা রমণীগণের লোচন সম্যক্‌রূপে দৃষ্টপূর্ব্ব প্রিয়জনের রূপ নিরীক্ষণে ইচ্ছা করিয়া থাকে; কিন্তু তাহাতে লজ্জাবশতঃ সমর্থ হয় না ॥৮॥

মাল। সখি! মহারাজ মুখ ফিরাইয়া কাহাকে স্নিগ্ধদৃষ্টি সহকারে দর্শন করিতেছেন? (দ)

বকুলা। পার্শ্ববর্ত্তিনী ইনিই ইরাবতী? (ধ)

बकुला। (आत्मगतम्।) चित्तगदं भट्टारं परमत्थदो संकप्पिअ असूअदि। भोदु, कीड़िस्सं दाव एदाए। (प्रकाशम्।) हला! भट्टिणो वल्लहा एसा? [चित्रगतं भर्त्तारं परमार्थतः सङ्कल्प्य असूयति। भवतु, क्रीड़िष्यामि तावदेतया। हला! भर्त्तुर्वल्लभैषा?] (प)

---

राज्ञो दक्षिणनायकत्वमपलाप्यते इति भावः। कथमित्याकाङ्क्षायामाह—यदित्यादि। यत् यस्मात् सर्व्वं देवीजनं धारिणीप्रभृतिकान् महिषीजनान् उज्झित्वा परित्यज्य प्रीतिविषयात् अपवाह्य एकस्याः केवलाया अस्या इरावत्या एव मुखे बद्धलक्ष्यः बद्धदृष्टिः जात इति शेषः। तथाहि दक्षिणनायको हि "अनेकमहिलासु समरागो" भवति अस्य च इरावत्यामीदृशासक्तिरन्यपरिहारेण तत्त्वमेव विघटयतीति एतत् तथाप्रत्यये हेतुरिति भावः। एतेनायमपि भावो मालविकाया बुद्धिस्थः प्रतीयते, यथा अपरनारीजनपरिहारेण यथायमिरावत्यामनुलग्नः तथा मामुज्झित्वापि वा स्यात्, ततो महत् कष्टमुपस्थास्यते इति। अयं साधारणनारीजनोचिता प्रणयेर्ष्या प्रदर्शिता कविना, सा च आत्मपरिहारमुखेन अनाख्याय परप्रत्याख्यानमुखेन प्रयुक्ता नायिकौदार्य्यं प्रकाशयति।

(प) चित्रगतम् आलेख्ये चित्रितम् अप्रकृतमित्यर्थः। भर्त्तारं राजानं परमार्थतः याथार्थ्येन सङ्कल्प्य मत्वा चित्रगतस्यापि प्रकृतत्व बुद्धा इत्यर्थः। असूयति दाक्षिण्यगुणशालिन्यपि तस्मिन् अदाक्षिण्यदोषमारोपयति इत्यर्थः। असूया नाम गुणेष्वपि दोषाविष्करणमिति परिभाषास्मरणात्। भवतु, एतया मालविकया अतिमुग्धया इत्यर्थः। क्रीड़िष्यामि कौतुकवाक्प्रयोगेण परिहासं रचयिष्यामि इत्यर्थः। अस्याः अप्रकृतधारणामपि अन्यथा अप्रतिपाद्य एतत्प्रकारानुगुणपरिहासवचनेन कौतुकं विधास्यामीति भावः। एषा दृश्यमाना इरावती भर्त्तुः स्वामिनः अग्निमित्रस्य वल्लभा प्रियतमा, अतएव अन्यनारीजनपरिहारेण अस्यामेवं बद्धलक्ष्यो भर्त्ता इति भावः।

---

माल। সখি! মহারাজকে আমার দাক্ষিণ্যশূন্য বলিয়া মনে হইতেছে। কেননা, তিনি সমুদায় দেবীদিগকে ত্যাগ করিয়া একজনেরই মুখের প্রতি চাহিয়া আছেন। (ন)

মাল। **তদো কিং দাণিং অত্তাণং আআসইস্সং ?** ( ইতি সাসূয়ং পরাবর্ত্ততে। ) [ ততঃ কিমিদানীম্ আত্মানমায়াসয়িষ্যামি ? ] (ফ)

রাজা। **সখে ! পশ্য পশ্য।**

**ভ্রূভঙ্গভিন্নতিলকং স্ফুরিতাধরোষ্ঠং**
**সাসূয়মাননমিতঃ পরিবর্ত্তয়ন্ত্যা।**
**কান্তাপরাধকুপিতেষ্বনয়া বিনেতুঃ**
**সংদর্শিতেব ললিতাভিনয়স্য শিক্ষা ॥৮॥**

---

(ফ) ততঃ এবং সতি, সকলাপেক্ষয়া ইরাবত্যা এব রাজপ্রিয়ত্বে সতীত্যর্থঃ। কিং কথম্ ইদানীম্ আত্মানং স্বম্ আয়াসয়িষ্যামি কষ্টাৎ কষ্টতরং ভাবং নেষ্যামি, আয়াসস্য ফলাশাবিরহাদিতি ভাবঃ। তথাহি রাজা ইরাবত্যামাসক্তঃ সকলনারীজনপরিহারেণ, তৎ কথমপি ময়ি তস্যানুরাগঃ অসম্ভাব্য এব, অতো যাবদেব তদ্বিষয়কাশাং করিষ্যামি তাবদেব নৈরাশ্যজনিতকষ্টস্য প্রাবল্যমনুকূলয়েয়মিতি তাৎপর্য্যম্। ইতি উক্তবাক্যমুক্ত্বা, সাসূয়ং সক্রোধং পরাবর্ত্ততে চিত্রদর্শনাৎ চক্ষুরপসার্য্য দিগন্তরে মুখম্ অপসারয়তি। এষ হি প্রণয়কোপো মালবিকায়া রাজানুরাগমধিকমনুকূলয়তি, সুষ্ঠু প্রক্রান্তমত্র কবিনা।

---

বকুলা ( আত্মগত ) মালবিকা চিত্রিত মহারাজকে প্রকৃত স্বামী মনে করিয়া অসূয়া প্রকাশ করিতেছে। আচ্ছা, ইহার সহিত একটু কৌতুক করি। ( প্রকাশ্যে ) সখি ! ইরাবতী যে মহারাজের সর্ব্বাপেক্ষা প্রিয়তমা। (প)

মাল। তবে আর আত্মাকে কেন কষ্ট দিতেছি ( এই বলিয়া অসূয়াসহকারে মুখ ফিরাইলেন। ) (ফ)

রাজা। সখে ! দেখ, দেখ,—অসূয়ার উদ্রেকে ভ্রূভঙ্গীবশতঃ তিলক

[ अन्वयः। अनया भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं सासूयमाननमितः परिवर्त्तयन्त्या विनेतुः कान्तापराधकुपितेषु ललिताभिनयस्य शिक्षा संदर्शिता इव। ९ ]

विदू। अणुणअसज्जो दाणिं होहि। [ अनुनयसज्ज इदानीं भव। ] (ब)

---

९। अथ मालविकायाः प्रणयकोपसन्दर्शनेन भावविशेषं व्यनक्ति—भ्रूभङ्गत्यादिना। अनया मालविकया भ्रुवोः भङ्गेन आकुञ्चितभावसम्पादनेन भिन्नं भग्नतां गतं सम्भ विश्लिष्टमित्यर्थः। तिलकं तिलकलक्षणं यस्य तथाभूतं, क्रोधापगमे विशेषतः प्रणयकोपे भ्रुवोर्भङ्गो नियतः। स्फुरितं कम्पितम् अधरोष्ठं निम्नवर्त्ती दन्तच्छदः अधर इत्यर्थः, यस्य तथाभूतं कम्पिताधरम् आननं मुखं सासूयं निर्द्दोषेऽपि मयि दोषारोपेण क्रोधयुक्तं यथा तथा इतः अस्याः दिशः परिवर्त्तयन्त्या अन्यतो नयन्त्या। कान्तस्य प्रियजनस्य अपराधात् दोषात् अन्याय्याचरणादित्यर्थः। यानि कुपितानि क्रोधाः तेषु स्वामिनो दोषप्रयुक्तकोपेषु, बहुवचनं क्रोधस्य आत्यन्तिकताप्रदर्शनाय, साधारणकोपे भ्रूभङ्गादिसमुद्भवाभावात्। विनेतुः शिक्षकस्य गणदासस्य इत्यर्थः। ललिताभिनयस्य कोमलाभिनयकलायाः शिक्षा विधिपूर्व्वकं ग्रहणं सन्दर्शिता विज्ञापिता इव, तथाहि इयं यथा कोपभावं प्रकाशयति तथा मन्ये वस्तुत एवेयं क्रुद्धा जाता, कोपावस्थायां योग्यानां प्रायेण सर्व्वेषामेव भावाना समन्वयात्, तथापि महदेव रामणीयकमिति महदाश्चर्य्यमिति भावः। अत्र सन्दर्शनक्रियाया इवशब्देन सम्भावनाप्रत्ययात् वाच्या क्रियोत्प्रेक्षा। अधरोष्ठमित्यत्र अधरशब्दस्य ओष्ठशब्दस्य च भिन्नाकारशब्दस्य अर्थाभेदस्य आपाततः प्रत्ययात् पर्य्यवसाने भिन्नार्थकत्वप्रतीत्या पुनरुक्तवदाभासालङ्कारः। अनयोरङ्गाङ्गिभावजन्यः सङ्करश्च। वृत्तं वसन्ततिलका नाम।

---

বিগলিত হইয়াছে এবং অধরোষ্ঠ প্রস্ফুরিত হইতেছে। এতদবস্থার এখান হইতে মুখ ফিরাইয়া লওয়াতে বোধ হইতেছে, ইনি শিক্ষক গণদাসের নিকট অন্য স্ত্রীর সংসর্গবশতঃ অপরাধ করিলে তাহার প্রতি যেরূপ কোপ প্রদর্শন করিতে হয়, তাহার যে মনোহর অভিনয় শিক্ষা করিয়াছেন, তাহাই যেন প্রদর্শন করিলেন ॥৯॥

माल। अज्जगोदमो एत्थ एव्व सेवदि णं ? (इति पुन: स्थानान्तराभिमुखी भवितुमिच्छति। ) [ आर्य्यगौतम: अत्रैव सेवते एनाम् ? ] (भ)

वकुला। (मालविकां रुद्धा) णहि णहि। कुविदा दाणिं तुमं ? [ नहि नहि। कुपिता इदानीं त्वम् ? ] (म)

---

(व) इदानीम् अत्रभवत्या: ईदृशे अत्युत्कटे कोपे प्ररूढ़े इत्यर्थ:। अनुनय: क्रोधशान्त्यर्थं प्रियवचनादिप्रयोग: तदर्थं सज्ज: सोद्योग: भव। तथाहि इत:परं यदा अस्या: पाणिग्रहं करिष्यसि तदनन्तरम् ईदृशव्यवहारा बहव: बहुश एव समुपस्थास्यन्ते तत्प्रतीकाराय साम्प्रतमेव त्वया उपायचिन्ता कर्त्तव्या इति भाव:। अथवा एषा तत्रभवती कुपिता परावृत्ता जाता तदिदानीमनुनयव्यतिरेकेण नालं भविष्यसि पुनरस्या: पूर्वानुरागं लब्धुं तद्गच्छ तत्सन्तोषसाधकमुपायं रचय इति भाव:।

(भ) आर्य्यगौतम: विदूषक: अत्र चित्रफलके एनाम् इरावतीं सेवते अनुनयवार्त्तादिना सन्तोषयति, एतेन इरावत्यामेव राज्ञो महती आसक्तिर्व्यज्यते, राजप्रियस्य विदूषकस्य राजमनोभावानुसारेण एव वर्त्तनसम्भवात्। तथाहि राज्ञो हृदयावरुद्धस्य इरावत्यां प्रत्यक्षीकृत्य तद्दिशं परिहाय दिगन्तरमाश्रित्यापि तत्प्रमाणमेव पश्यामीति सुतरामसह्यमिति भाव:। स्थानान्तराभिमुखी अन्यदिगभिमुखी।

(म) नहि नहि, नार्हसि अन्यतो गन्तुमिति शेष:। राज्ञ उपरि ईदृशस्ते विद्वेषो मौखिकोऽपि न युज्यते इति भाव:। त्वं कुपिता क्रोधयुक्ता असि किं ? तथाहि नास्ति कोपकारणमत्र किमपि चित्रे तथा दर्शनमप्रकृतविषयकमेवेति शान्तिं लभस्व इति भाव:।

---

विदू। আপনি তবে এক্ষণে অনুনয় প্রকাশার্থ প্রস্তুত হউন। (ব)

মাল। এদিকেও আর্য্য গৌতম ইহাকে সেবা করিতেছেন। (এই বলিয়া পুনরায় স্থানান্তরাভিমুখী হইবার ইচ্ছা প্রকাশ।) (ভ)

বকুলা। (মালবিকাকে প্রতিরোধ করিয়া।) যাইও না, যাইও না, তুমি এক্ষণে কি কুপিতা হইয়াছ ? (ম)

माल। जदि चिरं कुबिदं एव्व मं मन्तेसि, एस पच्चाणीअदु कोवो। [यदि चिरं कुपितामिव मां मन्त्रयसि, एष प्रत्यानीयतां कोपः।] (य)

राजा। उपेत्य। (र)

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे।
ननु तव साक्षादयमहमनन्यसाधारणो दासः॥ १०॥

[अन्वयः। हे कुवलनयने, मे चित्रार्पितचेष्टया किमेतत् कुप्यसि? ननु अयं तव साक्षात् अनन्यसाधारणः दासः। १०]

---

(य) चिरम् अत्यर्थं कुपितां क्रोधयुक्तां मां मन्त्रयसि कथयसि, तत् एषः जातपूर्व्वः कोपः मम क्रोधः प्रत्यानीयताम्, अपसार्य्यताम्, तथाहि इदानीं राजलाभ एव मे कोपोपशमनोपाय इति तदेव क्रियतामिति व्यज्यते।

(र) उपेत्य मालविकामुपसृत्य।

१०। उपसरणानन्तरं मालविकां प्रति उक्तिमाह—कुप्यसीत्यादिना। हे कुवलयनयने पद्मायतलोचने। मे मम चित्रार्पितया आलेख्यलिखितया चेष्टया व्यवहारेण किं कथम् एतत् ईदृशं कुप्यसि क्रोधं व्रजसि? तथाहि त्वया चित्रे मम यो व्यवहारो दृश्यते स शिल्पिना कल्पनासहायेन एव लिखितः नतु प्रकृतः, तत् कथमस्थाने कोप इति भावः। अथ कथं वा न कुप्यामि तव अनभिमतौ शिल्पिना तादृशघटनासम्भवात् इत्याकाङ्क्षायामाह नन्वित्यादि अस्तु वा चित्रे चित्रिता मूर्त्तिरिरावतीगतं प्रणयं प्रकाशयन्ती, तथापि साक्षात् प्रत्यक्षतः अयम् उपगतः अहं तव अनन्यसाधारणः अन्यजनाधीनः दासः भृत्यः अस्मि, तथाहि अहं केवलं तवैव आदेशवाही नतु इरावतीप्रभृतीनामिति वृथाकल्पनया दुःखं मा वह इति भावः। अत्र साक्षादित्यनेन चित्रगतायाः मूर्त्तेर्व्यपोहप्रत्ययात् परिसंख्या। कुवलयनयने इत्यत्र उपमा। निरपेक्षतया चानयोः संसृष्टिः। आर्य्याजातिः।

---

माल। যদি আমাকে অত্যন্ত কুপিতা বলিয়াই জানিয়াছ, তাহা হইলে এই কোপ অপসারিত কর। (য)

বকুলা। জেদু জেদু ভট্টা। [ জয়তু জয়তু ভর্ত্তা। ] (ল)

মাল। ( আত্মগতম্। ) কহং চিত্তগদো ভট্টা মএ অসূইদো ? ( ইতি সপ্রণয়বদনমঞ্জলিং করোতি )। [ কথং চিত্রগতো ভর্ত্তা ময়া অসূয়িতঃ ? ] (ব)

[ রাজা মদনকাতর্য্যং রূপয়তি। ] (শ)

বিদূ। কিং ভবং উদাসীণো বিঅ দিসদি ? [ কিং ভবানুদাসীন ইব দৃশ্যতে ? ] (ষ)

---

(ল) অত্র মালবিকায়া জয়বাদপ্রক্রমাভাবো বিহ্বলতামিব সূচয়তি তস্যাঃ।

(ব) কথং কিং চিত্রগতঃ আলেখ্যচিত্রিতঃ ভর্ত্তা রাজা ময়া অসূয়িতঃ কোপভাবেন লক্ষিতঃ নতু প্রকৃতঃ, তথাহি যদহমালেখ্যচিত্রিতব্যাপারবীক্ষণেন দক্ষিণপ্রধানস্যাপি রাজ্ঞোঽদাক্ষিণ্যং সম্ভূয় দোষানুসন্ধানং কৃতবতী তদতিমাত্রমন্যাষ্যমেবেতি কৃতানুতাপঃ। সপ্রণয়ং প্রেমসূচকং বদনং তদানীন্তনমুখভাবঃ যত্র তথাভূতম্ অঞ্জলিং করোতি, অসূয়িতস্য রাজ্ঞঃ প্রসাদনায় ইতি শেষঃ।

(শ) মদনেন মানসাভিলাষাপরাখ্যেন কামেন জাতং যৎ কাতর্য্যং দীনতা তৎ রূপয়তি অভিনয়তি, বাহ্যচিহ্নৈ র্মদনবেদনাং জ্ঞাপয়তি ইত্যর্থঃ।

(ষ) কিং কথং ভবান্ উদাসীনঃ প্রকৃতে কর্ম্মণি অনভিনিবিষ্ট ইব দৃশ্যতে, তথাহি

---

রাজা। (মালবিকার সমীপে যাইয়া)। (র)

অয়ি কমললোচনে! বল, কিজন্য আমার চিত্রগত চেষ্টা দ্বারা কুপিতা হইতেছ ? এই আমি সাক্ষাৎকারে উপস্থিত হইলাম। আমি তোমারই একমাত্র দাস ॥১০॥

বকুলা। মহারাজের জয় হউক। (ল)

মাল। ( স্বগত ) তবে কি আমি চিত্রস্থিত মহারাজের প্রতি অসূয়া প্রদর্শন করিয়াছিলাম ? ( এই বলিয়া অনুরাগপূর্ণ বদনে অঞ্জলি বন্ধন করিলেন। (ব)

( রাজা কামব্যথার অভিনয় করিলেন। ) (শ)

राजा । अविश्वसनीयत्वात् सख्यास्ते (स)

विदू । अत्तभोदीए कहं तव अविस्सासो ? [ अत्रभवत्यां कथं तवाविश्वासः । ] (ह)

राजा । श्रूयताम्—

पथि नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणात्
सरति सहसा वाह्वोर्मध्यं गतापि सखी तव ।
मनसिजरुजा क्लिष्टस्यैवं समागममायया
कथमपि सखे विस्रब्धं स्यादिमां प्रति मे मनः ॥ ११ ॥

[ अन्वयः । तव सखी नयनयोः पथि स्थित्वा स्थित्वा क्षणात् तिरोभवति वाह्वोर्मध्यं गतापि सहसा सरति सखे मनसिजरुजा क्लिष्टस्य एवं मे मनः समागममायया इमां प्रति कथमपि विश्रब्धं स्यात् । ११ ]

---

आदौ यथा अनुरागः प्रकाशितस्तथा इदानीं दर्शनगतायामस्याम् उपेक्षा न युज्यते, परं सम्मेलनमेवेति तदेव कर्त्तव्यमिति भावः ।

(स) ते तव सख्याः मालविकायाः अविश्वसनीयत्वात् विश्वसितुमशक्यत्वात्, अहम् उदासीन इव दृश्ये इति शेषः । तथाहि सख्यास्ते मनोभावस्य सर्व्वथा सत्यतानिर्द्धारणमशक्यमिति तस्या ममोपरि भूयान् अनुरागो वर्त्तते नवा इति सन्देहारूढतया यत्नवैफल्यमाशङ्क्य निर्व्यापारी वर्त्ते इति भावः । एतद्धि मालविकाया मुखेन साक्षादेव अनुरागवार्त्ताश्रवणलालसया कामिजनस्वभावसुलभभावावेदकम् इति मन्तव्यम् ।

(ह) अत्रभवत्यां सख्यां मालविकायां, कथं केन हेतुना तव अविश्वासः विश्वासविरहः, यत्त्वमेव अविश्वसनीयतां व्यवस्थापयसि तव को हेतुरिति ज्ञातुमिच्छामीति भावः । अत्रभवत्यामित्यनेन अविश्वासयोग्यता निराकृता ।

---

विदू । আপনাকে নিশ্চেষ্টের ন্যায় দেখিতেছি কেন ? (ষ)

রাজা । তোমার সখীকে যে বিশ্বাস করা যায় না । (স)

বিদূ । ইহার প্রতি আপনার অবিশ্বাস কেন ? (হ)

११। अथ गद्येन श्रूयतामिति प्रक्रम्य श्रोतव्यमविश्वासहेतुमाह—पथीत्यादिना। तव सखी मत्सम्बन्धात् सौहार्द्दभागिनी नयनयोः चक्षुषोः पथि गोचरे स्थित्वा स्थित्वा कल्पनारचितमूर्त्त्या अवस्थाय अवस्थाय चणात् चणकालेन तिरोभवति अन्तर्धत्ते, न चिरं स्थिता मां प्रीणयति, ततः कथं मत्सन्तोषाय मुहूर्त्तमपि स्थिरतामनापद्यमानायाः तस्या मयि अनुरागलेशमपि स्थिरं कल्पयामीति भावः। बाह्वोः भुजयोः ममेति शेषः, मध्यम् अन्तरं गतापि प्राप्तापि तदानीमेव मया गाढ़मालिङ्गितापि सहसा अकस्मात् सरति अन्यत्रैव व्रजति, तथाहि चिरमेव मया ते सखी सङ्कल्पवशात् सम्मुखे दृश्यते आलिङ्ग्यते किन्तु सा मयि न करुणालेशमपि प्रकाशयति इत्येव तव मद्विषयकप्रणय-विरहसम्भावनहेतुरिति भावः। एवम् इत्यम्भाविन मनसिजरुजा कामजपीड़या मदन-व्याधिना इत्यर्थः। क्लिष्टस्य विद्रावितस्य मे मम मनः अन्तःकरणं समागमे सम्मेलन-विषये मायया कपटेन उभयोः कथमपि स्थिरसङ्गतिः यथा न स्यात् तथा तथा प्रक्रमेण इमां प्रति कथमपि केनचिदपि प्रकारेण स्वयं विश्वासानयनाय चेष्टमानस्यापि इति भावः। विस्रब्धं विश्वासयुक्तं न स्यात्। तथाहि एतावत्कालं सङ्कल्पजनितसमागमे-ऽपि यया विरोधः कृतः सा यत् साचात् समागमे निर्व्विवादमेव स्वीकारवती प्रणयवती चेति न कथमपि विश्वासो मे जायते, अतएव तद्विषये मम औदासीन्यमिति भावः स्पष्टः। अत्र बाह्वोर्मध्यं गतापि इत्यपिशब्देन अन्यावस्थायाम् अपसरणस्य अनुषङ्गतः प्रत्ययात् अर्थापत्तिरलङ्कारः। उत्तरार्द्धप्रतिपाद्यमर्थं प्रति पूर्व्वार्द्धप्रति-पाद्यार्थस्य हेतुताप्रत्ययेन काव्यलिङ्गमिति च। "माया तु शठता शाठ्य"मिति कोषः। वृत्तं हरिणी नाम।

---

রাজা। শ্রবণ কর ;—তোমার সখী আমার দর্শনপথে অবস্থান করিয়া করিয়া মুহূর্ত্ত মধ্যে অদৃশ্যা হইয়া থাকেন, বাহুর মধ্যগতা হইয়াও হঠাৎ পলায়ন করেন। আমি মদনব্যথায় পীড়িত, সুতরাং মিলনে এইরূপ প্রতারণায় আমার মন আর কিরূপে ইহার প্রতি বিশ্বস্ত থাকিতে পারে? ॥১১॥

बकुला। सहि! बहुसो किल भट्टा विप्पलद्धो। ता अत्ता विस्ससणिज्जो करीअदु। [सखि! बहुशः किल भर्त्ता विप्रलब्धः। तदात्मा विश्वसनीयः क्रियताम्। ] (च)

माल। सहि! मह उण मन्दभग्गाए सिविणसमागमो वि भट्टिणो दुल्लहो आसि। [सखि! मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्त्तुर्दुर्लभ आसीत्। ] (क)

---

(च) बहुशः बहून्, वारान् वारार्थे शस्। विप्रलब्धः प्रतारितः तेन सङ्कल्पमाहात्म्येन दृष्टया त्वया नयनपथादपसरणादिना इति शेषः। तत् तस्मात् बहुवारान् प्रतारणात् हेतोः आत्मा विश्वसनीयः विश्वासयोग्यः क्रियतां, तेन तेन प्रतारणेन अविश्वस्तो राजा यथा विश्वस्ततां लभते तथा इदानीं प्रक्रम्यतामिति भावः, एतेन प्रणयसहकारिण राजानमुपगच्छेति बकुलावलिकाभिप्रायो व्यक्तः।

(क) मन्दभाग्यायाः दुर्भगायाः एतच्च भर्त्तुः समागमस्य दुर्लभत्वं प्रति हेतुः, स्वप्ने निद्रावस्थायामनुभवे समागमः सम्मेलनमपि का कथा साक्षात्समागमस्य इति भावः। भर्त्तुः स्वामिनः दुर्लभः अतिदुःखलभ्यः अलभ्य एव वा आसीत्, तथाहि यदयं दृष्टो जातः तदतिपुण्यफलमेव जानामीति भावः। एतेन राजप्रशस्तिरपि कृता भवति। केचित्तु विरहवशाज्जातया उत्कण्ठया निद्राविरहेण स्वप्ने राजसमागमाभावं व्याचक्षते, तदपि प्रकृते नायुक्तम्। एतेन राज्ञः सुतरां काम्यत्वमेव स्फुटीकृतम्, तथाहि अविरतमेवास्य चिन्ताकारिण्या अपि यत् न प्रत्यक्षं जातं तत एव न विज्ञापयितुमपारयं निजप्रणयं तत्र क इव दोषोऽत्र मम, किन्तु परस्परमिलनप्रतिबन्धकस्य दैवस्यैवेति गूढाभिप्रायः।

---

বকুলা। সখি! মহারাজকে অনেকবার বঞ্চনা করিয়াছ, অতএব আত্মাকে বিশ্বাসযোগ্য কর। (চ)

মাল। আমি মন্দভাগিনী, স্বামীর সহিত স্বপ্নেও মিলন আমার পক্ষে দুর্লভ ছিল। (ক)

वकुला। एदु भट्टा, देहि से उत्तरं। [एतु भर्त्ता, देह्यस्या उत्तरम्। ] (ख)

राजा। उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम्।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः॥ १२॥

[ अन्वयः। उत्तरेण किं मया तव सख्यै पञ्चबाणाग्निसाक्षिकम् आत्मैव दत्तो रहः सेविता सेव्यः न॥ १२ ]

---

(ख) भर्त्ता राजा, एतु आगच्छतु, अभ्यर्थनायां लोट्। अस्या मालविकाया अनया उक्तस्य वचनस्य इत्यर्थः। उत्तरं योग्यं प्रतिवचनं देहि त्वमिति शेषः। देहीत्यत्र कथयतु इति पाठान्तरमेव श्रेयः, एतु इति पदोपन्यासेन प्रथमपुरुषप्रक्रमात् अनन्तरमेव तस्यैव कर्त्तुः मध्यमपुरुषप्रक्रमस्य असाधुत्वात्।

१२। अथ राजा प्राप्तकालं मालविकाम् उद्दिश्य वकुलावलिकामाह—उत्तरेण इत्यादि। सम्बोधनादिकमन्तरेण वागुपक्रमो राज्ञः समुत्कण्ठां व्यनक्ति। उत्तरेण एतस्याः वाक्यस्य प्रतिवाक्यप्रयोगेण, किम् अपि तु न किमपि प्रयोजनमिति भावः। मया तव सख्यै मालविकायै आत्मा निजदेह एव स्वभाव एव वा पञ्चबाणः कामः स एव अग्निः अनलः साक्षी यत्र तथाभूतं बहुव्रीहौ कप्रत्ययः, दत्तः विसृष्टः अग्न्यादिकं साक्षीकृत्य यद्दानं क्रियते तत् पुनरनावर्त्तनीयतां धत्ते। तथाहि अहं कामवेदना-दलितान्तःकरण एवं विकृतो जातः यथा तव सखी एव मे कर्त्तव्याकर्त्तव्यमिदानीम् उपदेष्टुं क्षमा नान्यः कोऽपि जनः एकान्ततस्तस्यैव ते सखीजनस्य इदानीं मत्-प्रभुत्वात् इति भावः। पञ्चबाणपदेन कामसम्बोधनं पञ्चभिरेव बाणैः स्वस्य पीड़नादत्यन्त-पीड़ाविज्ञापनाय, तेन च तत्र अग्नित्वारोपोऽपि सहेतुकः, पञ्चबाणे अग्नित्वारोपात्, अनल इव सन्ततं पञ्चबाणो मम हृदयं दहतीति प्रतीयते। ननु आत्मदानं सेवकतया सेव्यतया च सम्भवति अत्र कीदृशभावेन आत्मदानमित्याकाङ्क्षया व्याख्यातमेवार्थं स्पष्टीकर्तुमाह—न सेव्य इति। स च मम आत्मा न सेव्यः अस्याः सेवालाभे योग्यः, तत्

---

বকুলা। আসুন মহারাজ! ইহাঁর বাক্যে উপযুক্ত উত্তর করুন। (খ)

वकुला। **अणुगहीदह्म।** [ अनुगृहीताः स्मः। ] (ग)

विदू। ( परिक्रम्य ससम्भ्रमम्। ) **बउलावलिए! एसो बालासोअरुक्खस्स पल्लवाइं लङ्घेदि हरिणो। एहि णिवारेम णं।** [ वकुलावलिके! एष वालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः। एहि निवारयाव एनम्। ] (घ)

---

किमित्याह—सेविता इति। रहः निर्ज्जने सेविता परिचारक एव, तथाहि अहमात्मानं परिचारकतया एव मालविकायै दत्तवान् नतु सेव्यतया, अतो न मयि सुतरामनुनयप्रदर्शनं युज्यते इति भावः। पञ्चबाणाग्नीत्यत्र रूपकम्।

(ग) अनुगृहीताः कृतप्रसादाः स्मः वयमिति शेषः। बहुवचननिर्द्देशेन मालविकापक्षपातिनां सर्व्वेषामेव कौशिक्यादीनामपि सन्तोषो व्यक्तः। अनेन बहूनां सन्तोषप्रदर्शनात् विषयस्यास्य राज्ञा अपरिहेयतां प्रतिपाद्य स्वार्थः अनुकूलितः। केचित्तु वाम्मद्य्ये ति बहुवचनमाहुः।

(घ) परिक्रम्य इतस्ततो गत्वा, ससम्भ्रमं सम्भ्रमसहकारेण, एषः अदूरे दृश्यमानः हरिणः कुरङ्गः वालाशोकवृक्षस्य क्षुद्राशोकतरोः वालविशेषणं हरिणस्य लङ्घनयोग्यतासंरक्षणाय, पल्लवानि किसलयान् लङ्घयति भक्षयितुमुपक्रमते, एहि एनं हरिणं निवारयावः आवां तत्र गत्वा इति शेषः। एष हि वचनोपक्रमः सम्प्रति राज्ञा सह मालविकाया विस्रम्भसहकारेण दर्शनालापादिक्रियानुकूल्यार्थं, तयोः स्थितौ लज्जादिसम्भ्रमेण निर्वाधप्रणयव्यापारस्य अप्रकाशिष्यमाणत्वादिति विदूषकस्य नैपुण्यमिदम्।

---

राजा। उत्तরের প্রয়োজন কি? মদনরূপ অগ্নিকে সাক্ষী রাখিয়া আমি আত্মাই তোমার সখীকে দান করিলাম। আমার সেবা করিতে হইবে না, আমিই নির্জ্জনে ইহার সেবা করিব। ॥১২॥

বকুলা। অনুগৃহীত হইলাম। (গ)

বিদূ। ( পরিক্রমণ করিয়া সম্ভ্রমের সহিত ) বকুলাবলিকে! ঐ হরিণ

बकुला। तह। [तथा।] इति प्रस्थिता। (ङ)

राजा। वयस्य! एवमेवास्मिन् रक्षणक्षणे अवहितेन त्वया भवितव्यम्। (च)

विदू। एव्वं वि गोदमो संदिसेअदि। [एवमपि गौतमः सन्दिश्यते।] (छ)

---

(ङ) तथा भवदुक्तमेव करोमि इति विदूषकाभिप्रायं ज्ञात्वा बकुलावलिकाया उक्तिः। एतद्धि राजमालविकागतस्य शृङ्गारस्य महदानुकूल्यं करोति, निर्ज्जनताया: शृङ्गारसमुद्दीपकत्वात्। एतत्समानाकारकं वस्तु दृश्यते अभिज्ञानशकुन्तले प्रियंवदान- सूयये राजशकुन्तलागतस्य शृङ्गारस्य समुद्दीपनाय प्रस्तुतं यथा अनसूया "प्रियंवदे एष तपस्विमृगपोतक इतस्ततो दत्तदृष्टिः प्रभ्रष्टो मातरम् अन्वेषयति, तत् संयोजयाव एनं"। प्रियंवदा "हला चपलः खलु एष न एनं संयोजयितुम् एकाकिनी पारयामि तत् अहमपि सहायतां करोमि" इति। प्रस्थिता प्रस्थातुं प्रवृत्ता, प्रादिकर्म्मणि क्तप्रत्ययः।

(च) एवम् एव यथा इदानीं कालं बुद्धा निर्ज्जनतासम्पादने सावधानेन त्वया स्थीयते तथा इत्यर्थः। अस्मिन् रक्षणक्षणे रहस्यविषयस्य रहस्यतारक्षणयोग्यकाले त्वया अवहितेन सावधानेन भवितव्यं, तथाहि यथा इमं वृत्तान्तं कोऽपि न जानीयात् तथा त्वया विधातव्यमिति भावः।

(छ) एवं भवता उक्तरूपेण, अपिः काकुप्रश्ने, गौतमः तदाख्यः मल्लक्षणः जनः सन्दिश्यते आदिश्यते, अपितु नैव अस्मिन् विषये अहं सन्देष्टव्यः, यतः स्वयमेवाहं ईदृशस्य विषयस्य त्वदनुकूलस्य रक्षणाय प्रवृत्तो भवेयमिति भावः। अथवा गौतमः

---

ক্ষুদ্র অশোক বৃক্ষটীর পত্র ভক্ষণ করিতে যাইতেছে। আইস, উহাকে নিবারণ করি। (ঘ)

বকুলা। তাহাই হউক। (এই বলিয়া প্রস্থান করিল)। (ঙ)

রাজা। বয়স্য! গুপ্তভাবরক্ষাকালেও তোমাকে এইরূপেই সাবধান থাকিতে হইবে। (চ)

वकुला। (परिक्रम्य।) अज्ज गोदम ! अहं अप्पआसे चिट्ठामि। तुमं दुवाररक्खओ होहि। [आर्य्य गौतम ! अहमप्रकाशे तिष्ठामि। त्वं द्वाररक्षको भव।] (ज)

विदू। जुज्जदि। [युज्यते।] (झ)

(निष्क्रान्ता वकुलावलिका।) (ञ)

विदू। इमं दाव फलिअत्थम्भं संस्सिदो होमि। (तथा कृत्वा)

---

गौर्व्वाहीक इतिवत् गोपदस्य गोसदृशे लक्षणा, स एव एवं सन्दिश्यते नतु अहं तथा यतस्त्वम् एवम् अवश्यकर्त्तव्यं विषयं प्रत्यपि अतिमन्दमिव मां सन्दिशसीति भावः। अथवा एवं तव ईदृशसन्देशेन गौतमः गोसदृश एव सन्दिश्यते कथ्यते मल्लक्षणो जन इति शेषः, अत्रापि अपिः प्रश्ने, तथाहि एवमुक्त्वा त्वं किं मम गोत्वमेव प्रतिपादय-सीति भावः।

(ज) परिक्रम्य किञ्चिदपसृत्य, अप्रकाशे अन्तराले, अन्यस्य अदृश्ये प्रदेशे, कश्चिदत्र आगच्छति न वा इति ज्ञातुमिति शेषः। अथवा निर्ज्जनतां लब्ध्वा राजमालविकयोः कीदृशो व्यवहारः प्रसर्पति तत्प्रत्यक्षीकरणाय इति स्त्रीणां तथा स्वभावस्य स्वतः सिद्धत्व-दर्शनात्। द्वाररक्षकः द्वारे कोऽपि आगच्छति न वा तत्परीक्षकः भव, अनेनापि वचनेन वकुलावलिकाया उक्तौ द्वितीयाभिप्रायः व्यज्यते द्वाररक्षायाः विदूषकेण क्रियमाणत्वात् अन्यतो जनागमनसम्भावनाविरहात्।

(झ) युज्यते युक्तियुक्तमेव तत, त्वम् अप्रकाशे तिष्ठ अहमपि द्वारे तिष्ठामीति सम-ञ्जसमेव तत्।

---

বিদূ। ইহাও কি আবার গৌতমকে শিখাইতে হইবে? (ছ)

বকুলা। (পরিক্রমণ করিয়া) আর্য্য গৌতম! আমি অন্তরালে অবস্থান করি, আপনি দ্বাররক্ষক হউন। (জ)

বিদূ। যুক্তিযুক্ত বটে। (ঝ)

(বকুলাবলিকা প্রস্থান করিল) (ঞ)

अहो ! सुहप्फरिसदा सिलाविसेसस्स । ( इति निद्रायते । ) [ इमं तावत् स्फटिकस्तम्भं संश्रितो भवामि । अहो ! सुखस्पर्शता शिलाविशेषस्य । ] (ट)

[ मालविका ससाध्वसा तिष्ठति ] (ठ)

राजा । विसृज सुन्दरि सङ्गमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ १२ ॥

[ अन्वयः । सुन्दरि ! चिरात् प्रभृति तव प्रणयोन्मुखे सहकारतां गते मयि सङ्गमसाध्वसं विसृज, त्वमतिमुक्तलताचरितं परिगृहाण ॥ ] १२

---

(ट) इमं द्वारे स्थितं स्फटिकस्तम्भं स्फटिकनिर्म्मितं स्तम्भं संश्रितः शयनाय आश्रितः भवामि । तथा कृत्वा स्फटिकस्तम्भम् आश्रित्य । अहो ! शिलाविशेषस्य प्रस्तरमयस्तम्भभेदस्य सुखस्पर्शता सुखस्पर्शविषयता, तथाहि इमं स्पृष्ट्वा अत्यर्थं सुखं मम जायते इति भावः । निद्रायते निद्रां लभते निपूर्व्वस्य द्राधातोः भावे प्रत्ययः, अथवा विदूषक इति कर्त्तृपदापेक्षया निद्रातीति निद्राः कर्त्तरि क्विपि पदं, स इव आचरतीति क्यङ् (आर्षः), एतेन तस्य तदानीं निद्रायाः प्रक्रममात्रेण निद्रितसादृश्यमेव समञ्जसतां व्रजति । एतञ्च कविना इरावत्यादीनामबाधप्रवेशसामञ्जस्याय प्रक्रान्तम् ।

(ठ) ससाध्वसा कुमारीजनसुलभसङ्गमादिभयाविष्टा तिष्ठति । एतेन राज्ञस्तदानीं बहिः कामभावप्रकाशो वक्तव्यः, तद्दर्शनेनैव मालविकाया भयोद्रिक्तसङ्गतेः ।

१२ । अथ निर्ज्जनतालाभेन स्वीयमनोभावविकाशने अनुनयविशेषं राजा मालविकामुद्दिश्य प्रयुङ्क्ते—विसृजेत्यादिना । हे सुन्दरि लावण्यवति ! सम्बोधनमिदं राज्ञः

---

বিদূ। তবে এই দ্বারস্থিত স্ফটিকস্তম্ভেরই আশ্রয় লই। ( সেইরূপ করিয়া ) আহা ! শিলাবিশেষের কি সুখস্পর্শতা ! ( এই বলিয়া নিদ্রার অভিনয় )। (ট)

( ভয়যুক্তা মালবিকার অবস্থান )। (ঠ)

माल। देवीभआदो अत्तणो वि पिअं कादुं ण पारेमि।
[ देवीभयादात्मनोऽपि प्रियं कर्त्तुं न पारयामि। ] (ड)

---

कामभावसूचकं, मालविकायाः सौन्दर्य्यप्रकर्षसूचनेन तदनुनयानुकूलञ्च। सङ्गमात् मया सह समागमविशेषात् साध्वसं भयं विसृज परिहर। तथाहि मया समागमेन तव किमपि अनिष्टं नोत्पत्स्यते अतः कथं वृथा अनिष्टाशङ्कया भीतिं व्रजसीति भावः। एतेन मया सह सङ्गता भव तेन तव इष्टमेव सम्भाव्यमिति इष्टसाधनताज्ञापनेन प्रवृत्तिरनुकूलिता भवतीति तात्पर्य्यम्। चिरात् प्रभृति बहुकालं यावत् तव प्रणयोन्मुखे प्रेमपरायणे त्वत्प्रणयाकाङ्क्षानुपजीव्य वर्त्तमाने इत्यर्थः। सहकारतां सहकारतरुत्वं तत्साद्दश्यमित्यर्थः। गते आश्रिते मयि मल्लक्षणे जने त्वम् अतिमुक्तलतायाः माधवीलतायाः आचरितं व्यवहारं परिगृहाण आश्रय, तथाहि यथा माधवीलता सहकारतरोः सर्व्वाङ्गं संवेष्ट्य तिष्ठति तथैव त्वं ममाङ्गं समाश्लिष्य मत्प्रीतिकरी भव इति भावः। अत्र एकस्य अन्यधर्म्मवहनयोग्यताविरहात् सहकारतापदेन सहकारतुल्यताप्रत्ययेन अतिमुक्तलताचरितपदेन तत्सदृशाचरितप्रत्ययेन च असम्भवद्वस्तुसम्बन्धरूपा निदर्शनालङ्कारः। प्रथमपादे सहकारस्य असकृत् आवृत्त्या वृत्त्यनुप्रासश्चेति संसृष्टिः। द्रुतविलम्बितं वृत्तम्।

(ड) देव्याः महिष्याः धारिण्याः, भयात्, तस्या अनिष्टमाशङ्का इत्यर्थः। आत्मनः स्वस्यापि का कथा भवत इति भावः। प्रियं सुखकरं त्वत्समागमरूपं वस्तु इत्यर्थः। कर्त्तुं सम्पादयितुं न पारयामि, तथाहि त्वं यथा मयि प्रीतिमान् अहमपि ततोऽधिकं त्वयि तथापि केवलं देवी ज्ञात्वा महदनिष्टमुत्पादयिष्यतीति स्मरणेन नालमस्मि अभिलषितं लब्धुमिति भावः। अपिशब्देन अर्थापत्त्या राज्ञः प्रियसाधननिराकरणं

---

রাজা। সুন্দরি! সঙ্গমভয় ত্যাগ কর, আমি বহুদিন হইতে তোমার প্রণয়োৎসুক, (আজ) সহকারতা লাভ করিয়াছি; তুমিও আমার প্রতি মাধবীলতার ন্যায় আচরণ কর। (১৩)

राजा । अयि ! न भेतव्यम् । (ढ)

माल । ( सोपालम्भम् । ) जो ण भाअदि सो मए भट्टिणीदंसणे दिट्ठसमत्थो भट्टा । [ यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्त्ता । ] (ण)

राजा । दाक्षिण्यं नाम बिम्बोष्ठि वैम्बिकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥१४॥

[ अन्वयः । बिम्बोष्ठि ! दाक्षिण्यं नाम वैम्बिकानां कुलव्रतं, दीर्घाक्षि ! तन्मे ये प्राणाः ते त्वदाशानिबन्धनाः ॥ ] १४

---

प्रतीयते । एतेन आत्मनः राजसमागमविषये महती आकाङ्क्षा व्यक्ता, तच्च न मुख्यभावेन इति सुतरां नैपुण्यं कुमार्य्याः कवेश्च दशाभिज्ञस्य ।

(ढ) अयीति कोमलामन्त्रणे, न भेतव्यं देव्याः शङ्कया नातो विरतिरुचिता इति भावः ।

(ण) सोपालम्भं साधिक्षेपं, यः भवल्लक्षणः जनः न बिभेति देव्या न भयं गच्छति स भर्त्ता राजरूपः भवान् भट्टिन्याः इरावत्याः दर्शने अशोककुञ्जे इरावतीसाक्षात्कारकाले दृष्टसामर्थ्यः परीक्षितशक्तिः, तथाहि इरावतीदर्शनमात्रेणैव यस्त्वं मदन्तिके महतीं भीतिमाप्तवान् स यदेवं वदसीति महदाश्चर्य्यमिवेति साकूतवचनम् । भर्त्तृपदेन तत्र भर्त्तुरपि एवमवस्था मम तु परिचारिकायास्तथात्वम् अवश्यमेव युज्यते इति प्रतीयते ।

१४ । अथ मालविकाया उपालम्भकारणस्य कर्त्तव्यतां दर्शयन् दूषणीयतां

---

মাল। দেবীর ভয়ে আমি নিজেরও প্রীতিকর কার্য্য করিতে পারিতেছি না। (ড)

রাজা। অয়ি! ভয় নাই। (ঢ)

মাল। ( তিরস্কারের সহিত। ) যিনি ভয় করেন না, সেই মহারাজের ক্ষমতাও ইরাবতী ঠাকুরাণীর সমক্ষেই আমি দেখিয়াছি। (ণ)

तदनुगृह्यतां चिरानुरक्तोऽयं जनः। ( इति संश्लेषमुपजनयति। ) (त)

---

निराकुर्व्वन् अनुनयमपि सम्पादयति—दाक्षिण्यमित्यादिना। बिम्ब इव ओष्ठौ यस्याः तथाभूता तस्याः सम्बोधनम्। अनेन सम्बोधनेन मालविकाया अधरचुम्बने राज्ञो रतिर्व्यज्यते। दाक्षिण्यम् अनेकनायिकासु समानुरागत्वम् औदार्य्यमिति च वैम्बिकानां बिम्बिकाख्यवंशजातानाम् अस्माकमित्यर्थः। नायकानामिति पाठे उत्कृष्टनायकानामित्यर्थः। कुलव्रतं कौलिको धर्म्मः, तथाहि कुलव्रतस्य अवश्यरक्षणीयतया अहं सर्व्वास्वेव नायिकासु समानुरागं गच्छामि अतएव इरावत्याः प्रणयिन्याः मनो रक्षितुम् अहं तदानीं तथा भावं गतवान् नतु भीतिहेतोरिति भावः। अथात्मनो दोषं निराकृत्य अनुनयमुपक्रमते—तन्मे इत्यादिना। हे दीर्घाक्षि, आयतनेत्रे! तत तथापि सर्व्वासु नायिकासु कुलधर्म्मानुरोधेन अनुरागसाम्यस्य योग्यत्वेऽपि इत्यर्थः। मे मम बिम्बिककुलोत्पन्नस्यापीत्यर्थः। ये प्राणाः ते त्वदाशानिबन्धनाः तव आशा आकाङ्क्षा एव निबन्धनं नितरां बन्धनभूताः येषां तथाभूताः, त्वदाकाङ्क्षामात्रसमुच्छ्वासा इत्यर्थः। तथाहि अन्यासु नायिकासु समानुरागस्य सत्त्वेऽपि यथा त्वयि मे भूयान् रागः न तथा अन्यत्र कुत्रापीति भावः। अत्र बिम्बोष्ठि इति समासगता लुप्तोपमालङ्कारः, अप्रस्तुतस्य वैम्बिकसामान्यात् राज्ञः विशेषस्य प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसा। बिम्बोष्ठि वैम्बिकानामिति व्यञ्जनानां सकृत्साम्यात् छेकानुप्रासः। आशायां बन्धनसाधनरज्जुत्वारोपात् रूपकम्।

(त) तत् तस्मात् मत्प्राणानां त्वदाशामात्रजीवित्वादित्यर्थः। चिरानुरक्तः चिरमनुरागवान् अयमनुग्रहे हेतुर्द्दर्शितः। संश्लेषं सम्यक् आलिङ्गनम् उपजनयति करोति।

---

রাজা। বিম্বোষ্ঠি! সমান অনুরাগপ্রদর্শন বিম্বিকবংশীয়দিগের কৌলিক নিয়ম। কিন্তু আয়তলোচনে! আমার প্রাণ তোমারই আশায় আবদ্ধ আছে। (১৪)

সুতরাং এই চিরানুরক্ত জনের প্রতি দয়া প্রদর্শন কর। ( এই বলিয়া আলিঙ্গন করিলেন )। (ত)

[ মালবিকা নাট্যে ন পরিহরতি। ] (থ)

রাজা। ( আত্মগতম্। ) রমণীয়: খলু নবাঙ্গনানাং মদনবিষয়াবতার:। এষা হি।—(দ)

হস্তং কম্পয়তে রুণদ্ধি রসনাব্যাপারলোলাঙ্গুলী:
স্বৌ হস্তৌ নয়তি স্তনাবরণতামালিঙ্গ্যমানা বলাত্।
পাতুং পক্ষ্মলনেত্রমুন্নময়ত: সাচীকরোত্যাননং
ব্যাজেনাপ্যভিলাষপূরণসুখং নির্ব্বর্ত্তয়ত্যেব মে ॥১৫॥

[ অন্বয়:। বলাত্ আলিঙ্গ্যমানা (এষা) হস্তং কম্পয়তে, রসনাব্যাপারলোলাঙ্গুলী: রুণদ্ধি, স্বৌ হস্তৌ স্তনাবরণতাং নয়তি, পক্ষ্মলনেত্রং আননং পাতুম্ উন্নময়ত: মে সাচীকরোতি, ব্যাজেন অপি অভিলাষপূরণসুখং নির্ব্বর্ত্তয়ত্যেব ॥ ] ১৫

---

(থ) নাট্যে ন অভিনয়েন পরিহরতি সংশ্লেষং মোচয়তি প্রাগাশংসিতভয়াদিতি ভাব:।

(দ) নবাঙ্গনানাং তরুণীজনানাম্ অনুপভুক্তপূর্ব্বাণামিতি বা অর্থ:। মদনবিষয়স্য কামবিষয়স্য অবতার: আবির্ভাব: রমণীয়: অতিমধুর:, তথাহি ইয়ং কামভাবমাপন্না ইতি ভাববিশেষৈরনুমীয়তে স চাতিমনোহারীতি ভাব:। এষা হি মালবিকা, ইদং হি কর্তৃতয়া পদ্যে অন্বেতি।

১৫। বলাত্ রভসা আলিঙ্গ্যমানা সমাশ্লিষ্যমাণা সতী এষা হস্তং স্বীয়করং কম্পয়তে মত্প্রবর্ত্তিতাবিনয়সংরোধনায় চালয়তি, করেণ মাং নিষেধতীত্যর্থ:। রসনায়া: কাঞ্চীগুণস্য ব্যাপারে শৈথিল্যসম্পাদনে লোলা: চঞ্চলা: অঙ্গুলী: রুণদ্ধি বারয়তি মমেতি শেষ:। স্বৌ আত্মীয়ৌ হস্তৌ করৌ স্তনয়ো: আবরণতাম্ আবরণসাধনতাং নয়তি প্রাপয়তি তাভ্যাং হস্তাভ্যাং দ্বিগুণিতাভ্যাং স্তনয়ো: প্রতিরোধং করোতি যথা মমাঙ্গে সম্যক্ তয়োর্লগ্নতা ন স্যাত্ করাদিসম্বাধয় ব্যাহন্যেত ইতি ভাব:। পক্ষ্মলে রোমরঞ্জিতে

---

( মালবিকা নাট্যে আলিঙ্গন পরিহার করিলেন। ) (থ)

রাজা। ( স্বগত ) নবীনকামিনীদিগের কামবিষয়ের আবির্ভাব বাস্তবিকই অতি মনোহর। এই মালবিকা—(দ)

( ততঃ প্রবিশতি ইরাবতী নিপুণিকা চ। ) (ধ)

---

সুপিচ্ছশোভিতে ইত্যর্থঃ। নিবে যত্র তথাভূতম্ আননং মুখং পাতুং চুম্বিতুং, পানক্রিয়োপন্যাসাত্ আননে মধুসত্তা ব্যজ্যতে, চুম্বনস্য অধরাবচ্ছেদেন কামিজনাভীষ্টত্বাত্ তত্র চ মধুনঃ প্রসিদ্ধেঃ। উন্নময়তঃ উন্নতং কুর্ব্বতঃ মে মম "ষষ্ঠী চানাদরে" ইতি ষষ্ঠী, মম তথাবিধম্ আগ্রহমনাদৃত্য ইত্যর্থঃ। প্রাচীকরোতি বক্রতাং নয়তি, মুখমন্যতঃ পরাবৃত্য মত্প্রক্রমং ব্যাঘাতয়তি ইত্যর্থঃ। অতঃ ব্যাজৈঃ ছলৈঃ অভিলাষস্য অভীষ্টবিষয়স্য পূরণসুখং নির্ব্বর্ত্তয়ত্যেব সম্পাদয়ত্যেব। তথাহি যদ্যপি বাহিরিয়ম্ অনিচ্ছাং প্রকাশয়তি তথাপি যদিয়ম্ অত্র নাতিমাত্রমাগ্রহহীনা ইতি প্রতীয়তে, সুতরাং ব্যাঘাতস্য অকরণাদিতি ইদমেব ইদানীং মে যথেষ্টং প্রারম্ভে কুমারীজনাত্ তস্মাদধিকস্য অসুলভত্বাদিতি ভাবঃ। অত্র চতুর্থপাদার্থং প্রতি প্রথমপাদত্রয়ার্থঃ হেতুবিধয়া উপন্যস্ত ইতি কাব্যলিঙ্গং, হস্তকম্পনাদ্যাত্মকানাং নিষেধকবস্তূনাং প্রতিকূলানামপি অনুকূলসুখানুবন্ধিত্বাত্ অনুকূলং, কম্পয়তে ইত্যাদীনাং বহূনাং ক্রিয়াণাম্ এককর্তৃকত্বাত্ দীপকালঙ্কারঃ। স্বৌ হস্তৌ স্তনাবরণতাং নয়তি ইত্যত্র স্বাবিত্যস্যোক্তিবিরহেঽপি হস্তে স্বীয়ত্বপ্রতীত্যব্যাঘাতাত্ "সদাশিবং নৌমি পিনাকপাণিম্" ইতিবত্ অধিকপদতাদোষঃ। কেচিত্তু যদি অত্র স্বৌ ইতি নোচ্যেত তদা রাজহস্তাবপি প্রতীয়েতে, তথাত্বে অনুকূলালঙ্কারস্য বৈচিত্র্যং ব্যাহতং স্যাত্, তস্য রাজানং প্রতি অপ্রতিকূলত্বাত্ অতো নাত্র দোষঃ, পরং বৈচিত্র্যপরিপোষকতয়া গুণ এবেতি বদন্তি। বৃত্তং শার্দ্দূলবিক্রীড়িতং নাম।

---

আমি বলপূর্ব্বক আলিঙ্গনে চেষ্টা করিলে হস্ত চালনা দ্বারা নিষেধ করিতেছে, রসনার গ্রন্থিমোচনে প্রবৃত্ত মদীয় কম্পিত অঙ্গুলীর প্রতিরোধ করিতেছে, স্বীয় হস্ত দ্বারা স্তনদ্বয় আবরণ করিতেছে এবং সুন্দরপক্ষ্মযুক্তনয়নশোভিত মুখখানি চুম্বনের জন্য উত্তোলন করিলে উহা ফিরাইয়া নিতেছে। এইরূপে ছল করিলেও আমার অভিলাষপূরণের সুখ-বিধানই করিতেছে। (১৫)

( অনন্তর ইরাবতী ও নিপুণিকা প্রবেশ করিলেন। ) (ধ)

इरा। हञ्जे णिउणिए ! सच्चं तुमं परिगदत्था चन्दिआए—समुद्दघर-अलिन्दसइदो एआई अज्जगोदमो दिट्ठो त्ति ? [ हञ्जे निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया—समुद्रगृहालिन्दशयित एकाकी आर्य्यगौतमो दृष्ट इति ? ] (न)

निपु। अससहा कहं भट्टिणीए विसवेमि ? [ अन्यथा कथं भट्टिन्यै विज्ञापयामि ? ] (प)

इरा। तेण हि तहिं एव्व गच्छम्ह संसआदो मुत्तं पिअवअस्सं पुच्छिदुं च। [ तेन हि तस्मिन्नेव गच्छाव, संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च। ] (फ)

---

(न) चन्द्रिकया तदाख्यया परिचारिकया, परिगतार्था विज्ञापितार्था कृता असि, किं समुद्रगृहे तदाख्ये भवने, आर्य्यगौतमः एकाकी असहायः आर्य्यपुत्ररहित इत्यभिप्रायः, अलिन्दे वहिर्द्वारवर्त्तिनि कृत्रिमचतुरस्रदेशे, शयितः निद्रितः, दृष्टः अवलोकितः इति, तथाहि सत्यमेव किं चन्द्रिका तव समीपे उक्तसंवादं कथितवती ? एतेन मालविकाया राजसमागमगतः संशय इरावत्या व्यज्यते, स्पष्टञ्चेदं परतः।

(प) अन्यथा अस्य सत्यत्वाभावे, कथं केन हेतुना भट्टिन्यै राज्ञाः विज्ञापयामि, निवेदयामि, तथाहि तव समीपे सत्यमेव इदं कथितं मया यत् चन्द्रिकया एवं विज्ञापितास्मीति भावः।

(फ) तेन तव विज्ञापनस्य सत्यतया, हि निश्चितं तत्रैव गच्छाव समुद्रगृहालिन्द एव गच्छाव, कथमित्याह—संशयादित्यादि, संशयात् जीवनसन्देहात् सर्पदष्टस्य प्रायेण जीवनस्थितिसम्भावनाया अभावात् जीवनसंशयः। अयं जीवेत वा न वा इत्याकारकसंशयविषयीभूतमित्यर्थः। मुक्तम्, प्रियवयस्यम् आर्य्यगौतमं प्रष्टुं जिज्ञासितुञ्च, चकारः

---

ইরা। অয়ি, নিপুণিকে! সত্যই কি তুমি চন্দ্রিকার নিকট অবগত হইয়াছ যে, সে আর্য্য গৌতমকে সমুদ্রগৃহের অলিন্দে একাকী শয়ন করিয়া থাকিতে দেখিয়াছে ? (ন)

নিপু। তাহা না হইলে কি আপনার নিকট বলিতে পারি ? (প)

निपु। सावसेसं विअ भट्टिणीए वअणं। [ सावशेषमिव भट्टिन्या वचनम्। ] (ब)

इरा। अस्सं च। चित्तगदं अज्जउत्तं पसादइदुं। [ अन्यच्च, चित्रगतम् आर्य्यपुत्रं प्रसादयितुम्। ] (भ)

निपु। अह दाणिं कहं णु भट्टा एव्वं अणुणीअदी ? [ अथेदानीं कथं नु भर्त्ता एवमनुनीयते ? ] (म)

---

अर्थान्तरसमुच्चायकः, तस्यैवार्थस्य अकथनात् निपुणिकायाः सावशेषतासमुद्भासनं वचनस्य।

(ब) भट्टिन्याः राज्ञ्याः वचनं प्रष्टव्येत्यन्तं वाक्यं सावशेषम् अकथितावशिष्टभागमिव प्रतिभातीति शेषः। तथाहि वाक्यान्तरं विना समुच्चयार्थकस्य चकारस्य असामञ्जस्यात्, को नाम अवशिष्टभागोऽस्य स कथ्यतामिति भावो वज्यते।

(भ) अन्यच्च अपरञ्च वचनम् उक्तावशिष्टमित्यर्थः, तच्चेदं चित्रगतम् आलेख्ये लिखितम् आर्य्यपुत्रं प्रसादयितुं प्रमार्ज्जयितुं तदानीं सुतरामनुनयेऽपि मम प्रस्थानेन जातस्य कोपस्य मार्ज्जनां कारयितुमित्यर्थः। प्रसन्नचित्तं कर्त्तुमिति यावत्, तव गच्छाव इति शेषः, उक्तरूपं वचनमेव मे अवशिष्टमव आसीदिति भावः।

(म) अथ अनन्तरं तदानीं तथा कोपव्यवहारकरणानन्तरमित्यर्थः। अथवा अथ-शब्दः प्रश्ने, पूर्व्वकल्पे तु प्रश्नार्थकशब्दाभावेऽपि अर्थतात्पर्य्यात् प्रश्नार्थता। नुशब्दस्तदर्थ वा "अथ स्यान्मङ्गले प्रश्ने कार्य्यारम्भेष्वनन्तरे" इति। इदानीं तदनुनयव्यवहाराभाव-

---

ইরা। তাহা হইলে, সংশয়িত (মৃত্যুপ্রায়) অবস্থা হইতে মুক্ত প্রিয়বয়স্য গৌতমের অবস্থা জানিবার জন্যও সেই স্থানেই গমন করি। (ফ)

নিপু। আপনার কথার যেন শেষ হয় নাই ? ( মনে হয় যেন আরও কিছু অবশিষ্ট আছে। ) (ব)

ইরা। হ্যাঁ, আরও চিত্রপটে অঙ্কিত মহারাজকে প্রসন্ন করিবার জন্যও বটে। (ভ)

इरा। मुद्धे! जारिसो चित्तगदो तारिसो एव्व अस्ससंकन्त-हिअओ अज्जउत्तो। केवलं उवआरादिक्कमं पमज्जिदुं अअं आरम्भो। [मुग्धे! यादृशश्चित्रगतस्तादृश एवान्यसंक्रान्तहृदय आर्य्यपुत्रः। केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः] (य)

---

वेलायामपीत्यर्थः। कथं केन हेतुना, भर्त्ता स्वामी एवं प्रक्रान्तरूपेण अनुनीयते प्रसादयितुं प्रवृत्तिः क्रियते, तथाहि तदानीं राजा यथा अनुनीतवान् तथा तदानीमेव तव प्रसादः युक्त आसीत् इदानीं तदनुनयाभावेऽपि यत्तवायं प्रसादनार्थं प्रक्रमः स चानुसन्धेयकारणको मे जात इति भावः।

(य) मुग्धे प्रकृतानभिज्ञे! सम्बोधनमिदं प्रक्रान्तस्य अनुनयस्य अभिप्रायाज्ञानेन मुग्धताप्रतिपादनाय। यादृशः यथारूपः चित्रगतः आलेख्ये लिखितः, तथाहि आलेख्ये यथा शिल्पिना मयि परमा प्रीतिरुपदर्शिता तादृश एव तद्वदेव इत्यर्थः। आर्य्यपुत्रः अन्यस्यां मदपेक्षया अपरस्यां रमण्यां संक्रान्तम् आसक्तं हृदयं मनः यस्य तथाभूतः, चित्रगत इत्यनेन स्वस्मिन् वास्तविकप्रीत्यसत्ता समुद्भाविता। अन्यसंक्रान्तेत्यत्र सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावः। उपचारस्य तत्कृतस्य पादपतनरूपस्य अनुनयस्य अतिक्रमः उल्लङ्घनं तं प्रमार्ज्जयितुं तज्जनितापराधक्षमापणं कारयितुम् अयम् आरम्भः उद्यमः तथाहि यदि चित्रलिखितवत् मयि वस्तुतोऽपि राजा प्रीतिमानभविष्यत् तदा एतदुपचारातिक्रमस्य क्षमापणाभावेऽपि मयि प्रीतिमरक्षिष्यत् इदानीन्तु यत्किञ्चिद्वा-जलाभो यदि तदा प्रीतिभङ्गमेव करिष्यते इति तदपराधक्षमापणमवश्यमेव कर्त्तव्यमिति ईदृशकर्त्तव्यानवधारणेन त्वं सुतरां मुग्धेति भावः। अथवा यद्यपि आर्य्यपुत्रस्य अन्यसंक्रान्तचित्ततया न अनुरागलाभाय प्रसादनं युज्यते, तथापि पादपतनरूपानुनय-लङ्घनरूपदोषप्रमार्ज्जनाय प्रसादनं युक्तमिति अनुनयः क्रियते इति भावः।

---

নিপু। মহারাজকে এখন এইরূপে অনুনয় করিতেছেন কেন? (য)

ইরা। সরলে! আর্য্যপুত্র চিত্রিতাবস্থায়ও যেমন, অন্যে আসক্তচিত্ত

निपु। इदो इदो भट्टिणी। [इत इतो भट्टिनी।] (र)

[उभे। परिक्रामतः।] (ल)

(प्रविश्य चेटी।) जेदु जेदु भट्टिणी। भट्टिणि! देवी भणादि— 'ण एसो मह मस्सरस्स कालो। तेण क्खु बहुमाणं वड्ढइदुं वअस्साए सह णिअलबन्धणे किदा मालविआ, जइ अनुमस्ससि अज्जउत्तस्स पिअं कादुं तहा करोमि। जं तुह इच्छिअं तं मे भणाहि त्ति।' [जयतु जयतु भट्टिनी। भट्टिनि! देवी भणति—'नैष मम मत्सरस्य कालः। तेन खलु बहुमानं वर्द्धयितुं वयस्यया सह निगड़बन्धने कृता मालविका। यद्यनुमन्यसे आर्य्यपुत्रस्य प्रियं कर्त्तुं तथा करोमि। यत् तवेष्टं तन्मे भणेति।'] (व)

---

(र) भट्टिनी राज्ञी, इतः इतः अनेन पथा आगच्छतु इति शेषः। एष हि व्यवहारो राज्ञां यत् परिचितेष्वपि प्रदेशेषु परिजनैः पथि प्रदर्शनमिति।

(ल) उभे निपुणिका इरावती च, परिक्रामतः गच्छतः।

(व) देवी राज्ञी धारिणी, भणति कथयति वक्ष्यमाणवाक्यार्थः कर्म्म। एषः कालः वर्त्तमानः समयः मम मत्सरस्य विद्वेषपरिपोषणस्य न, नेदानीं मम कोऽपि द्वेषः कस्याप्युपरि युज्यते इति भावः। तेन हेतुना, अयं हेतुः तथा करोमि इति पर्य्यवसित-वाक्यार्थं प्रति। बहुमानं सम्मानं तवेति शेषः। वर्द्धयितुं जनयितुं, त्वदीयं हृदयं रञ्जयितुमित्यर्थः। वयस्यया वकुलावलिकया सह निगड़बन्धने शृङ्खलाबन्धने मालविका कृता सा बद्धा इत्यर्थः। यदि अनुमन्यसे अनुमोदसे, आर्य्यपुत्रस्य प्रियं प्रीतिजनकं वस्तु कर्त्तुं सम्पादयितुं यदि मालविकाया बन्धनमोचनेन आर्य्यपुत्राभिमतेन आर्य्यपुत्रस्य

---

হইয়াও তেমনই। তবে শিষ্টাচার লঙ্ঘন করিয়াছি, সেই অপরাধমার্জ্জনার জন্যই এই উদ্যোগ। (য)

নিপু। এই দিকে এই দিকে ছোট রাণী। (র)

(উভয়ে গমন করিতে লাগিলেন।) (ল)

इरा। णाअरिए! बिण्णावेहि देविं—काओ वअं भट्टिणीं णिओजिटुं? परिअणणिग्गहेण मइ दंसिदो अणुग्गहो। कस्स वा पसादेण अअं जणो वड्ढदि त्ति। [नागरिके! विज्ञापय देवीम्।—का वयं भट्टिनीं नियोजयितुम्? परिजननिग्रहेण मयि दर्शितः अनुग्रहः। कस्य वा प्रसादेनायं जनो वर्द्धते इति।] (ञ)

---

सन्तोषसम्पादनं तवाभीष्टं स्यादित्यर्थः तदा तथा करोमि तस्या बन्धनमोचनेन आर्य्यपुत्रं सन्तोषयामि इत्यर्थः। तव यत् इष्टम् अस्मिन् विषये तव यत् अभिप्रेतं तत् मे भण कथय, तथैवाहं करिष्यामि इति भावः। एतेन इरावत्या इच्छाकृमेणैव यत् मालविका निगड़े पूरिता इति स्पष्टं प्रतीयते।

(ञ) देवीं विज्ञापय आवेदय वक्ष्यमाणं वस्तु इति शेषः। भट्टिनीं देवीं नियोजयितुम् आदेष्टुं वयं काः अपि तु न का अपि अतितरामयोग्या इत्यर्थः। तथाहि तस्या मोचने अमोचने वा देवी एव प्रमाणं कथमस्माकमप्यनुमोदनापेक्षा इति भावः। परिजनस्य स्वीयपरिजनभूतस्य मालविकारूपस्य जनस्य निग्रहेण मदेकापेक्षया बन्धनस्थापनेन मयि अनुग्रहः प्रसादः दर्शितः विज्ञापितः दृशिर्ज्ञानसामान्यार्थत्वम्, एतेन जानामि यत् भवती मयि अतिमात्रं स्निह्यतीति भावः। वा अथवा, कस्य जनस्य प्रसादेन अनुग्रहेण अयं मल्लक्षणः जनः वर्द्धते सौभाग्यसम्पदा जुष्टो भवति, तथाहि यदहमिदानीं राज्ञीपदमध्यासीना राज्ञः प्रीतिभाजनं जातास्मि तत्रापि देवीप्रसाद एव हेतुरिति मयि यद्भवत्या अनुग्रहो वर्त्तते तत्र कः सन्देहः अत एवंविधे स्थाने न मयि भवत्या अभ्यर्थना युज्यते, अत्र भवती एव कर्त्तव्याकर्त्तव्ययोः प्रमाणमिति भावः। अत्र स्पष्टं

---

চেটী। (প্রবেশ করিয়া) রাণীর জয় হউক। রাণি! 'মহারাণী বলিতেছেন—আমার পক্ষে কাহারও সহিত ঈর্ষ্যা করিবার এই সময় নয়, সুতরাং তোমার সম্মানবর্দ্ধনের জন্য সখীর সহিত মালবিকাকে নিগড়ে বন্ধন করিয়াছি। যদি তুমি আর্য্যপুত্রের প্রিয়সাধনে অনুমোদন কর, তবে সেইরূপ করি। তোমার যাহা অভিমত—আমাকে বল।' (ব)

चेटी। तह। [ तथा। ] ( इति निष्क्रान्ता। ) (ष)

निपु। ( परिक्रम्यावलोक्य च। ) एष दुवारे समुद्दगेहकस्स विपणि-गदो विअ बुसहो गोदमो आसीणो एव्व णिद्दाअदि। [ एष द्वारे समुद्रगेहकस्य विपणिगत इव वृषभः गौतमः आसीन एव निद्रायते। ] (स)

इरा। किं णु क्खु अच्चाहिदं ? सावसेसो विअ विसविआरो भवे। [ किंनु खलु अत्याहितम् ? सावशेष इव विषविकारो भवेत्। ] (ह)

---

मालविकाया मोचनानुमोदने तव सुतरामिरावत्या अनभिप्रायो व्यज्यते। देवीप्रसादादेव आत्मनः परमसौभाग्यवर्णने मालविकाया अपि तयालं भावीति व्यज्यते।

(ष) तथा एवमेव देवीं विज्ञापयिष्यामीति स्वीकारोक्तिः।

(स) समुद्रगेहकस्य द्वारे द्वारदेशस्थिते स्फटिकस्तम्भे इत्यर्थः। तत्रैव विदूषकस्य शयनार्थं स्थानपरिग्रहात्। विपणिः पण्यवीथिका तद्गतः तत्रस्थितः वृषभः बलीवर्द्द इव आसीन एव नतु शयानोऽपीत्यर्थः, एवशब्दः शयनव्यवच्छेदकः। निद्रायते स्वपिति, पदमिदं पूर्व्ववत् क्विबादिना साधनीयम्।

(ह) किं कीदृशम् अज्ञातम् अत्याहितं जीवानपेक्षि कर्म्म, "अत्याहितं महाभीतिः कर्म्म जीवानपेक्षि यत" इत्यमरः। विदूषकस्य सर्पदष्टतया प्रख्यातस्य विषवेगप्रभावतो

---

ইরা। নাগরিকে! দেবীকে নিবেদন কর যে, মহারাণীকে কার্য্যে নিয়োগ করিতে আমরা কে? তিনি পরিজনের নিগ্রহ করিয়া আমার প্রতি অনুগ্রহ প্রদর্শন করিয়াছেন। অথবা ( তাঁহার অনুগ্রহ ব্যতীত ) কাহার কৃপায়ই বা আমার মত লোক উন্নত হইতে পারে? (শ)

চেটী। আচ্ছা। ( এই বলিয়া প্রস্থান করিল। ) (ষ)

নিপু। ( পরিক্রমণ ও অবলোকন করিয়া ) এই যে বিপণিস্থিত বৃষভের ন্যায় গৌতম সমুদ্রগৃহের দ্বারে উপবিষ্ট হইয়াই নিদ্রিত হইয়াছেন! (স)

निपु। पसण्णमुहवण्णो दीसदि। अवि अ ध्रुवसिद्धिणा चिइ-स्सिदो। ता से असङ्कणिज्जं पावं। [ प्रसन्नमुखवर्णो दृश्यते। अपि च ध्रुवसिद्धिना चिकित्सितः। तदस्य अशङ्कनीयं पापम्। ] (च)

विदू। ( उत्खप्रायते। ) भोदि मालविए! [ भवति मालविके। ] (क)

---

निद्रानुमानात् इरावत्याः शङ्का, तदेव कारणमाह—सावशेष इवेत्यादिना। विषविकारः सर्पविषजन्यविकारः सावशेषः अवशिष्ट इव भवेत्, तथाहि सर्पदष्टस्य विदूषकस्य विषवेगो यदुपशान्त इति श्रूयते तन्न सत्यं तदद्यापि वर्त्तते तत्प्रभावेणैव तन्द्रा इम माक्रान्तवतीत्यनुमीयते इति भावः।

(च) निपुणिकाविषवेगविरुद्धवस्तुविज्ञापनेन इरावत्याः शङ्कामुच्छिनत्ति—प्रसन्नेत्यादिना। प्रसन्नः विकारमप्राप्तः मुखवर्णः वदनकान्तिः यस्य तथाभूतः, तथाहि अयं यदि विषवेगोपहतः स्यात् तदा प्रसन्नमुखवर्णो न स्यादिति तर्केण प्रसन्नमुखवर्णत्वरूप-हेतुदर्शनेन विषवेगोपघाताभावो निर्णीयते इति, अन्यथा न शङ्कनीयमिति भावः। अन्यदपि कारणमाह—अपि चेति। ध्रुवसिद्धिना तदाख्येन प्रसिद्धेन विषवैद्येन चिकित्सितः, तत्कर्त्तृकचिकित्साऽपि अवश्यं विषहन्त्रीति अस्यापि तच्चिकित्सितस्य विषापहृतिर्जातेति कुतः शङ्कावसरः। शङ्कामेव निषेधति,—तत् तस्मात् अस्य प्रसन्न-मुखवर्णत्वात् ध्रुवसिद्धिना चिकित्सितत्वाच्च, अस्य पापम् अनिष्टम् अशङ्कनीयं शङ्काया अपि अयोग्यं, का कथा वस्तुतः स्थितेः। विषशून्यजीवस्य चिह्नं यथा भावप्रकाशे—"प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम्। प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम्॥" इति।

---

ইরা। তবে কি কোন বিপদ্ ঘটিল? বিষ বিকারের যেন কিছু অবশেষ রহিয়াছে! (হ)

নিপু। মুখশ্রী প্রফুল্ল দৃষ্ট হইতেছে। এদিগে ধ্রুবসিদ্ধি চিকিৎসা করিয়াছেন। সুতরাং ইহাঁর কোন বিপদের আশঙ্কা নাই। (ক্ষ)

निपु। सुदं भट्टिणीए ?। कस्स एसो अत्तणिओअसंपादणे विस्ससणिज्जो हदासो। सव्वकालं इदो एव्व सोत्थिवाअस्स मोदएहिं कुक्खिं पूरिअ संपदं मालविअं सिविणावेति।
[श्रुतं भट्टिन्या ? कस्य एष आत्मनियोगसम्पादने विश्वसनीयो हताशः। सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायते।] (ख)

---

(क) उत्स्वप्नायते, स्वप्नावस्थाया प्रलापवाचं कथयति, उद्गतः स्वप्नो यस्य तथाविधः स इव आचरति, इति क्यङ् प्रत्यय आचारार्थे कर्त्तः। भवति मालविके! सम्बोधन-स्यास्य परवर्त्तिना विदूषकवाक्येनान्वयः।

(ख) भट्टिन्या श्रुतम् आकर्णितं विदूषकवाक्यमिति शेषः। एषः विदूषकरूपः हताशः विनष्टाशः, दुर्भग इत्यर्थः। आत्मनियोगस्य आत्मकर्त्तव्यस्य सम्पादने साधने कस्य जनस्य विश्वसनीयः विश्वासयोग्यः अपि तु न कस्यापोति शेषः। एतेन वयं सर्व्वदा इममात्मजनं ज्ञात्वा स्वार्थसाधनाय व्यापारयामः, किन्तु ईदृशविश्वासघातकतया नायं तथा विश्वास्य इति भावः। विश्वासघातकतामेव प्रमाणयति—सर्व्वकालमित्यादिना। सर्व्वकालं सर्वस्मिन्नेव समये इत एव युष्मत्समीपत एव स्वस्तिवाचनमोदकैः शुभवादविनिमय-लब्धमोदकविशेषैः कुक्षिं स्वीयम् उदरं पूरयित्वा साम्प्रतं मालविकाम् उद्दिश्य स्वप्नायते स्वप्नावस्थया प्रलपति, तथाहि युष्मत्समीपतो मोदकादिलाभेन इमस्य युष्मन्मङ्गलाकाङ्क्षा एव युज्यते नतु मालविकायाः, तथापि यदयं तद्विपरीतं प्रवर्त्तते तदेवानाय्यमस्य इति भावः।

---

বিদূ। ( স্বপ্ন দেখিতেছে ) ওগো মালবিকে! (ক)

নিপু। রাণী শুনিলেন কি ? এই হতভাগ্যকে কার্য্য ভার দিয়া কেই বা বিশ্বাস করিতে পারে ? সকল সময়েই আশীর্ব্বাদাদিদ্বারা আপনাদের নিকট হইতে প্রাপ্ত লড্ডুক দ্বারাই উদর পূরণ করিয়া এখন মালবিকাকে স্বপ্নে দেখিতেছে। (খ)

विदू। इरावदिं अदिक्कमन्तो होहि। [इरावतीमतिक्रामन्ती भव।] (ग)

निपु। एदं अच्चाहिदम्। इमं भुअङ्गभीरुअं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण दण्डकट्ठेण तम्भन्तरिदा भाअइस्सं। [एतदत्याहितम्। इमं भुजङ्गभीरुकं ब्रह्मबन्धुम् अनेन भुजङ्गकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भाययिष्यामि। (घ)

इरा। अरिहदि किदग्घो सप्पदंसणं। [अर्हति कृतघ्नः सर्पदंशनम्।] (ङ)

---

(ग) विदूषकस्य अवशिष्टं वाक्यमाह—इरावतीमित्यादि। अतिक्रामन्ती उल्लङ्घयन्ती भव, राजा यथा इरावत्यां सुतरामनुरक्तस्ततोऽपि अधिकतरां राज्ञः प्रीतिं लभस्व इति भावः। एतेन इरावत्यामेव राज्ञो महती प्रीतिर्व्यञ्जिता। अथवा इरावतीम् अतिक्रामन्ती तत्प्रतिरोधशतानि उपेक्षमाणा भव, तथाहि इरावती त्वया सह राज्ञः समागमाय विद्वेषं धारयति, तद्विद्वेषं यथा कथञ्चित् व्यर्थं कुर्व्वाणा आत्मनः कामफलं लभस्वेति भावः।

(घ) एतत् विदूषकेण स्वप्नावस्थाया उक्तं वस्तु, अत्याहितम् अशुभकरम्। तथाहि एतद्धि महदनिष्टमेव ज्ञापयति, राजसुहृदः विदूषकस्य मुखे मालविकामुद्दिश्य तथा वाक्यश्रवणात् राज्ञः प्रीतिस्तत्र सुतरां प्रतीतिरात्मप्रतीत्यवसादसम्भावनाया अनिष्टज्ञानम्। इमं दृश्यमानं भुजङ्गभीरुकं सर्पभीतं ब्रह्मबन्धुं निकृष्टं ब्राह्मणदेश्यं, बन्धुशब्दस्य सादृश्यवाचकत्वात् सादृश्यस्य च तद्भेदघटितत्वात् ब्राह्मणेतरत्वप्रतीतिस्तदर्थलाभः, अनेन एतत्सम्बन्धिना एव भुजङ्गकुटिलेन भुजङ्गवत् वक्रेण, भुजङ्गस्य कौटिल्यं गतिकाले, स्वभाववक्रता वा वाच्या, दण्डकाष्ठेन यष्टिखण्डेन, स्तम्भान्तरिता स्फटिकस्तम्भस्य अनेनैव अधिष्ठितस्य पार्श्वे अन्तर्हिता भूत्वा भाययिष्यामि भीतिं जनयिष्यामि।

---

বিদূ। ইরাবতীকে পরাজয় কর। (গ)

নিপু। এ যে মহাবিপদ্। আমি স্তম্ভের অন্তরালে থাকিয়া সর্পের ন্যায় বক্র এই দণ্ডকাষ্ঠ দ্বারা এই সর্পভীরু কুব্রাহ্মণকে ভয় দেখাইব। (ঘ)

( निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति । ) (च)

विदू । (सहसा प्रबुध्य ) । **अविहा, अविहा ! भो वअस्स ! सप्पो मे उवरि पड़िदो** [ अपिहा, अपिहा ! भो वयस्य ! सर्पो मे उपरि पतितः ] । (छ)

राजा । (सहसोपसृत्य) । **सखे ! न भेतव्यं, न भेतव्यम् ।** (ज)

माल । ( अनुसृत्य ) । **मा दाव सहसा णिक्कमदु भट्टा । सप्पो त्ति भणादि ।** [ मा तावत् सहसा निष्क्रामतु भर्त्ता । सर्प इति भणति । ] (झ)

---

(ङ) कृतघ्नः उपकारादिस्मृतिशून्यतया उपकारिण एव अनिष्टाचरणकारी अयमिति शेषः । सर्पदंशनं भुजङ्गाघातम् अर्हति, तथाहि अयं सर्पसदृशः कृतघ्नः तेन सर्पदंशनं यदस्य अभवत् तद्युक्तमेवासीदिति भावः । कृतघ्नत्वं सर्पदंशने हेतुः, तच्च विशेषणविधया उपन्यस्तम् । दानादिभिः सुतरामुपकारपरायणानामस्माकं अनिष्टाचरणस्यैव फलम् अस्य सर्पेण दंशनमिति तात्पर्य्यम् ।

(छ) प्रबुध्य निद्रां परित्यज्य, अपिहा अपिहा इति विषादातिशये, अविधा इति पाठे अप्रशस्तः प्रकारः अमङ्गलजनकं किमपि जातमिति भावः । मे मम उपरि सर्पः पतितः, भुजङ्गेन आक्रान्तोऽस्मि इति भावः । विदूषकस्य उपरि इरावती कुपिता यदसौ मालविकां प्रति राज्ञः प्रणयानुकूलं करोति इति अपि व्यज्यते ।

(झ) अनुसृत्य राज्ञः पश्चात् गत्वा, सहसा अविविच्य मा तावत् भर्त्ता राजा निष्क्रामतु निष्क्रान्तो भवतु । कथमित्याकाङ्क्षायामाह—सर्प इति । भणति कथयति

---

ইরা। এই কৃতঘ্নকে সর্পে দংশন করাই উচিত। (ঙ)

( নিপুণিকা বিদূষকের উপর দণ্ডাঘাত করিল। ) (চ)

বিদূ। ( সহসা জাগরিত হইয়া ) সর্ব্বনাশ ! সর্ব্বনাশ ! বয়স্য ! আমার উপর সাপ পড়িয়াছে। (ছ)

রাজা। ( সহসা নিকটে আসিয়া ) ভয় নাই, ভয় নাই। (জ)

इरा। हद्धी हद्धी! भट्टा इदो एव्व धावदि! [हा! धिक्, हा धिक्! भर्त्ता इत एव धावति।] (ञ)

विदू। (सप्रहासम्)। कहं दण्डकट्ठं एदं? अहं उण जाणि— जं मए केदअकण्डएहिं दंसं करिअ सप्पस्स अअसो किदं तं मे फलिदं त्ति। [कथं दण्डकाष्ठमेतत्? अहं पुनर्जाने—यन्मया केतककण्टकैः दंशं कृत्वा सर्पस्यायशः कृतं, तन्मे फलितमिति]। (ट)

---

विदूषक इति शेषः। तथाहि यदि सर्पः स्यात् तदा महानिष्टसम्भावना, अतः अनिष्ट परिहाराय अगमनमेव युक्तमिति भावः।

(ञ) हा धिक् कष्टे, इत एव अस्मात् निभृतस्थानादेव धावति विदूषकस्य आक्रन्दनाकर्णनमात्रेणैव तद्रक्षणाय तं प्रति प्रतिष्ठते, निभृतदेशात् राजनिष्क्रमणदर्शनेन तत्र मालविकया सह राजा वर्त्तते, तच्चासह्यं, प्रणयिनीनां प्रियेषु प्रियान्तरसङ्ग-मानुमानस्य असह्यता स्वतःसिद्धा, तत एव हाधिग्वादः।

(ट) सप्रहासम् अतिमात्रहास्येन सह, दण्डस्य सर्पत्वानुमानात् आत्मनो मुग्धताम् अनिष्टापगमञ्च सञ्चिन्त्य प्रहास एव युज्यते। कथं सम्भावनायाम्, एतत् मया सर्पत्वेन सम्भावितं वस्तु दण्डकाष्ठं, नतु सर्प इति भावः। पुनः किन्तु अहं जाने अनुमिनोमि, सामीप्ये वर्त्तमाना। इतोऽव्यवहितपूर्व्वमेव अहं निरधारयं, यत् केतककण्टकैः दंशं क्षतं कृत्वा अयशः अपवादः कृतं, तत् सर्पस्य अयशःसम्पादनजनितपापमित्यर्थः। फलितं फलमुखं जातं, तथाहि प्रसिद्धिरियं यत् सर्पदंशैः मिथ्याभाषणं सर्पस्य दंशमामन्त्रयति इति तदेव वा मे फलितं स्यादिति भावः।

---

माल। (অনুসরণ করিয়া) মহারাজ! হঠাৎ বহির্গত হইবেন না; সর্পের কথা বলিতেছে। (ঝ)

ইরা। হায় কি বিপদ! মহারাজ! এই স্থান হইতেই বাহির হইতেছেন! (ঞ)

বিদূ। (হাসিয়া) একি! এটা দণ্ডকাষ্ঠ! আর আমি ভাবিয়াছিলাম

( ततः प्रविशति पटाक्षेपेण बकुलावलिका )। (ठ)

बकुला। **मा क्खु भट्टा पविसदु। इह कुड़िलगई सप्पो विग्र दीसदि।** [ मा खलु भर्त्ता प्रविशतु। इह कुटिलगतिः सर्प इव दृश्यते। ] (ड)

इरा। ( राजानं सहसोपसृत्य। ) **अवि णिव्विग्घमणोरहो दिवा-संकेदो मिहुणस्स ?।** [ अपि निर्विघ्नमनोरथो दिवासङ्केतो मिथुनस्य ? ] (ढ)

---

(ठ) पटस्य यवनिकायाः अक्षेपेण अनपसारणेन, एतेन बकुलावलिकायाः परमार्त्तत्वं व्यज्यते। तदुक्तं—"पटीक्षेपो न कर्त्तव्य आर्त्तराजप्रवेशने" इति। आर्त्तत्वञ्च बकुलावलिकाया इरावतीदर्शनादिव जातं, तच्च अन्यथा व्यक्तं भवे एव।

(ड) इह अस्मिन् प्रवेशाय लक्षीकृते स्थाने कुटिला वक्रभावमापन्ना गतिः गमनं भावश्च यस्य तथाभूतः सर्पः भुजङ्गः दृश्यत इव, तथाहि अत्र गमनेन अनिष्टमेव सम्पत्स्यते अतो नात्र गन्तव्यम्, इरावती तत्र वर्त्तते इति भावव्यक्तिः।

(ढ) अपिः प्रश्ने, मिथुनस्य युगलस्य नायकस्य तव नायिकायाश्च मालविकायाः इत्यर्थः। दिवा दिवसे एव सङ्केतः उभयोः सम्मेलनाय कृतमिङ्गितं, निर्व्विघ्नः अप्रतिबन्धः केनचिदपि विघ्नेन अविघ्नितफलः मनोरथः कामना उभयोः सम्मेलनजन्यफलमित्यर्थः। यस्मिन् तथाभूतः, तथाहि उभयोः सम्मेलनफलं किं दिवसे एव सम्यक् सम्पन्नमिति भावः।

---

যে,—কেতকের কণ্টকদ্বারা দংশনচিহ্ন প্রস্তত করিয়া আমি যে সর্পের মিথ্যা দুর্নাম করিয়াছিলাম, তাহাই বুঝি বা ফলিল। (ট)

(অনন্তর যবনিকা অপনয়ন করিয়া বকুলাবলিকা প্রবেশ করিল।) (ঠ)

বকুলা। মহারাজ! প্রবেশ করিবেন না। এখানে বক্রগতি সর্পের ন্যায় দেখা যাইতেছে। (ড)

ইরা। ( সহসা রাজার নিকট অগ্রসর হইয়া ) দিবসের অভিসারে উভয়ের মনোরথ নির্ব্বিঘ্নে পূর্ণ হইয়াছে ত? (ঢ)

( सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः ) (ण)

राजा। **प्रिये! अपूर्वोऽयमुपचारः।** (त)

इरा। **बउलावलिए! भट्टाहिसारविसआ संपुस्सा दे पदूस्सा?।** [ वकुलावलिके! भर्त्तभिसारविषया सम्पूर्णा ते प्रतिज्ञा? ] (थ)

वकुला। **पसीदटु भट्टिणी। किं मए किदं त्ति देवो पुच्छिदव्वो। दद्दुरा वाहरन्ति त्ति किं देवो पुहविं वरिसिदुं सुमरेदि?** [ प्रसीदतु भट्टिनी। किं मया कृतमिति देवः प्रष्टव्यः। दर्दुरा व्याहरन्तीति किं देवः पृथिवीं वर्षितुं स्मरति? ] (द)

---

(त) प्रिये! सम्बोधनमिदं त्वयि परमा मे प्रीतिर्व्वर्त्तते इति ज्ञापनार्थम्। अयं त्वया उपक्रान्तः उपचारः प्रथमसम्भाषण एव ससभ्यर्थनप्रकारः, अपूर्व्वः नूतनः, तथाहि ईदृशं वचनं त्वया इतः पूर्व्वं कदापि नोक्तं तत् कथमिदानीमेवं वदसीति भावः।

(थ) अथ साधिक्षेपमिव वकुलावलिकां पृच्छति, भर्त्तुः अभिसारः मालविकां प्रति सङ्केतानुसारेण गमनं स एव विषयः, यस्याः तथाभूता, ते तव प्रतिज्ञा शपथः सम्पूर्णा सफला? तथाहि एतावत् दिनं यदर्थं त्वम् अतिकष्टं कृतवती तत् मालविकया सह राज्ञः सम्मेलनं सुसम्पन्नं कच्चित् इति भावः।

(द) प्रसीदतु प्रसन्ना भवतु, मां प्रति कोपं परिहरतु इत्यर्थः। ननु त्वया महदनिष्टं मे सम्पादितमिति कथं त्वयि प्रसन्ना भविष्यामि इत्याकाङ्क्षायामाह—किमित्यादि। मया किं कीदृशं तव अनिष्टमित्यर्थः। कृतम् आचरितम् इति उक्तं वस्तु देवः महाराजः प्रष्टव्यः, तथाहि मद्वचनं यदि न विश्वसिषि तदा राजानं पृष्ट्वा जानीहि अहं अस्मिन्

---

( ইরাবতীকে দেখিয়া সকলেই চমকিত হইল। ] (ণ)

রাজা। প্রিয়ে! আর কখনও ত এরূপ ব্যবহার কর নাই? (ত)

ইরা। বকুলাবলিকে! কাম-সঙ্কেতানুসারে মালবিকার উদ্দেশ্যে রাজার গমনবিষয়ে তোমার অঙ্গীকার পূর্ণ হইয়াছে ত? (থ)

विदू। मा दाव। भोदीए दंसणमेत्तेण अत्तभवं पणिवादलङ्घणं विसुमरिदो। तुमं उण अज्जवि पसादं ण गेण्हसि? [मा तावत्। भवत्या दर्शनमात्रेण अत्रभवान् प्रणिपातलङ्घनं विस्मृतः? त्वं पुनरद्यापि प्रसादं न गृह्णासि?] (ध)

---

विषये सापराधा न वेति, नास्ति ममात्र कोऽपि दोष इति वर्त्तुलार्थः। दर्दुराः भेकाः व्याहरन्ति ध्वनन्ति इति हेतोः देवः वर्षाधिपतिरिन्द्रः पृथिवीं भूमिं वर्षितुं वर्षाजलेन सिक्तां कर्त्तुं किं स्मरति, तथाहि यथा भेकशब्दश्रवणेन वर्षाधिपतिरिन्द्रः पृथिवीं प्रति वर्षां न करोति तथैव अयमपि राजा न मद्वचनप्रयोगादिवशात् मालविकायामनुरक्तः किन्तु स्व स्वाक्रमेणैव, अतो यत्त्वं मयि मालविकया सह राजसमागमदोषमारोपयसि तदतिमात्रम् अन्याय्यमिति भावः। वकुलावलिकाया अत्र विशेषेण शङ्कितत्वानुद्भासनं प्रति राजप्रसाद एव हेतुतां धत्ते। अत्र अप्रस्तुतप्रशंसालङ्कारः।

(ध) मा तावत उक्तरूपं वचनं न प्रयुज्यतामिति भावः। भवत्या दर्शनमात्रेण अवलोकनमात्रेणैव, एतेन अन्यापेक्षाव्यवच्छेदप्रतिपादनात अत्यासक्तिर्व्यज्यते। प्रणिपातस्य तदानीं त्वत्प्रसादनाय अनेनैव उपक्रान्तस्य पादपतनस्य लङ्घनम् अतिक्रमं विस्मृतः, त्वं तावत अद्यापि साम्प्रतमपि बहुकालातिक्रमेऽपि इत्यर्थः। प्रसादं चित्तप्रसन्नतां न गृह्णासि, तथाहि राजा तव अपराधं गुरुतरमपि विस्मृतवान् तवापि युज्यते कोपपरीहारस्तथापि यत्त्वं कोपं न परिहृतवती तदतिमात्रमाश्चर्य्यं जनयति, त्वं कोपं परिहृत्य पुनः यथापूर्व्वं राजनि वर्त्तस्वेति भावः।

---

বকুলা। রাণি! প্রসন্না হউন। আমি কি করিয়াছি, তাহা মহারাজকেই জিজ্ঞাসা করুন। ভেকেরা শব্দ করে বলিয়াই কি দেবরাজের বর্ষণের কথা মনে পড়ে? (দ)

বিদূ। ওরূপ বলিবেন না। ভবদীয় দর্শনমাত্রেই মহারাজ আপনার অনুনয়লঙ্ঘনের অপরাধ বিস্মৃত হইয়াছেন; আর আপনি এখনও প্রসন্ন হইতেছেন না? (ধ)

इरा। कुबिदाबि अहं किं करिस्सं ? [कुपिताप्यहं किं करिष्यामि ? (न)

राजा। अस्थाने कोप इत्यनुपपन्नं त्वयि । (प)

कदा मुखं वरतनु कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥ १६ ॥

[अन्वयः। वरतनु ! तव मुखं कारणात् ऋते कदा क्षणमपि कोपपात्रताम् आगतं, विभावरी कथम् अपर्व्वणि ग्रहकलुषेन्दुमण्डला भविष्यति कथय। १६]

---

(न) अथ सानुक्रोशोक्तिमाह—कुपितापीत्यादि। कुपितापि कोपयुक्तापि, अहं किं करिष्यामि, तथाहि मम कोपः अस्तु नास्तु वा तव कस्य किं स्यात् एतद्धि राजानं लक्ष्यीकृत्य प्रणयाभिमानपरं वचनम्, अथवा यदि मम कोपेन किञ्चित् फलं मम स्यात् तदैव मे कोपः कर्त्तव्यः स्यात् तदेव नास्तीति कथं कोपं मे सम्भावयसीति भावः।

(प) अस्थाने अयोग्यसमये कोपायोग्ये मयि वा कोपः तव क्रोधः इति त्वयि अनुपपन्नं न उपपद्यते, तथाहि अहं तव यथा प्रियः तथा कारणं विना कोपो मयि न युज्यते अतएव तव ईदृशकोपदर्शनेन मयि गुरुतरापराधसम्भावनं व्यज्यते इति।

१६। इरावत्याः कोपस्य कारणं विना अनुत्पद्यमानतामेव समर्थयति—कदेत्यादिना। हे वरतनु ! वरा समुत्कृष्टा तनुः आकृतिः यस्याः तथाभूता तस्याः सम्बोधनम्। तव मुखं कर्त्तृ, कदा कस्मिन् काले कारणात् ऋते हेतुं विना क्षणं मुहूर्त्तमात्रमपि व्याप्य कोपपात्रतां क्रोधाश्रयतां कोपजन्यलक्षणशालितामित्यर्थः आगतं प्राप्तम् अपि तु कदापि न इति भावः। तथाहि तव मुखभावदर्शनेन मया अनुमीयते यत् मयि

---

ইরা। আমি কুপিত হইয়াই বা কি করিব ? (ন)

রাজা। অসময়ে ক্রোধ করা তোমার পক্ষে শোভা পায় না। (প)

इरा। अट्ठाणे त्ति सुट्ठु वाहरिदं अज्जउत्तेण। अस्स-संक्कन्तेसु अह्माणं भाअहेएसु जदि उण कुप्पेअं तदो हस्सा भवेअं। [अस्थाने इति सुष्ठु व्याहृतमार्य्यपुत्रेण। अन्यसंक्रान्तेषु अस्माकं भागधेयेषु यदि पुनः कुप्येयं, ततः हास्या भवेयम्।] (फ)

---

तव भूयान् कोपः समजनि, स च किं कारणक इति न निर्द्धारयितुं शक्यते, तत् किमद्य अकाण्डे एव कोपं करोषि इति तात्पर्य्यम्। अथवा इतःपूर्व्वं तव कोपमात्रस्यैव सकारणकत्वेऽपि अद्यायं कोपः अकारणक इति निष्कारणकोपं जहीहि इति। ननु अकारणमेव न कुप्यामि इत्यत्र कः प्रतिरोधः इत्याकाङ्क्षायां दृष्टान्तमुखेन वक्ति—अपर्व्वणीत्यादि। अपर्व्वणि पूर्णिमाप्रतिपदोः सन्धिक्षणभिन्ने, पूर्णिमाप्रतिपत्सन्धाविव ग्रहणस्य योग्यत्वात् पर्व्वशब्दस्य सन्धिपरतापीति तदर्थाधिगमः, पर्वन्शब्दस्य स्वशक्य-पूर्णिमासम्बन्धि उभयसन्धौ लक्षणा वा। विभावरी रात्रिः पूर्णिमाप्रतिपत्सन्धिशून्या रजनीत्यर्थः कथं केन हेतुना ग्रहेण राहुणा अनुग्रहे च निर्बन्धे ग्रहणे च रणोद्यमे "पूतनादौ सैंहिकेये उपरागेऽपि च ग्रहः" इति। कलुषं ग्रस्तम् इन्दुमण्डलं चन्द्रमण्डलं यत् तथाभूता भविष्यति इति कथय, तथाहि पर्वविभावरीं विना चन्द्रस्य राहुणा ग्रासोऽसम्भवः, तथैव तवापि कारणं विना कोपोऽसम्भवः, अथवा तवापि तथा कारणं विना कोपो न युज्यते इति भावः। अत्र दृष्टान्तः अलङ्कारः सधर्म्मस्य वस्तुनः बिम्बप्रतिबिम्बभाव-प्रत्ययात्। पर्व्वन्शब्दस्य रूढ़िप्रयोजनाभावेऽपि उक्तलक्ष्यार्थप्रतिपादनात् नेयार्थत्वम्। क्षणमपीत्यपिशब्दस्य अर्थापत्त्या बहुकालव्यवच्छेदात् अर्थापत्तिः। वृत्तं रुचिरा नाम।

(फ) अस्थाने अयोग्ये स्थाने कोपायोग्ये कोप इति पूर्व्वोक्तमित्यर्थः। सुष्ठु उत्कृष्टं व्याहृतं विपरीतलक्षणया "उपकृतं बहु तव किमुच्यते" इत्यत्रेव अत्यन्त-मन्याय्यं व्याहृतमित्यर्थः। तत्रैव कारणमाह अस्माकं भागधेयेषु भाग्येषु त्वत्प्रीतिरूपेषु

---

সুন্দরি! তোমার মুখখানি ক্ষণকালের জন্যও কখনও ত বিনা কারণে কোপের আধার হয় নাই? বল দেখি, পূর্ণিমার রাত্রি ভিন্ন অন্য রাত্রিতে চন্দ্রমণ্ডল রাহুগ্রস্ত হইতে পারে কি? ॥১৬॥

রাজা। ত্বমন্যথা কল্পয়সি। অহং পুনঃ সত্যমেব কোপস্থানং ন পশ্যামি। কুতঃ? (ব)

নার্হতি কৃতাপরাধোঽপ্যুৎসবদিবসেষু পরিজনো দণ্ডম্।
ইতি মোচিতে ময়ৈতে প্রণিপতিতুং মামুপগতে চ ॥১৭॥

[অন্বয়ঃ। উৎসবদিবসেষু কৃতাপরাধোঽপি পরিজনঃ দণ্ডং নার্হতি—ইতি ময়া এতে মোচিতে চ প্রণিপতিতুং মাম্ উপগতে চ। ১৭]

---

অন্যস্যাম্ অপরস্যাং মালবিকারূপায়াং সংক্রান্তেষু পতিতেষু। কুপ্যেয়ং কোপযুক্তা ভবেয়ং, তদা হাস্যা হাসবিষয়ীভূতা ভবেয়ং, পরস্ত্রীসহনাক্ষমতাদর্শনেন ইতি ভাবঃ।

(ব) ত্বম্ অন্যথা অপ্রকৃতং কল্পয়সি সম্ভাবয়সি, তথাহি তব সম্ভাবনায়া বিষয় এব ময়ি নাস্তি, তৎ কথমিদম্ ইতি ভাবঃ। কোপস্থানং কোপবিষয়ং ন পশ্যামি অত্র তব কোপকারণং কিমপি নোপলক্ষয়ামি, তথাপি কিং কুপ্যসীতি ভাবঃ।

১৭। ননু যদি অপ্রকৃতমেব মালবিকানুরাগং প্রখ্যাপয়সি তৎ কিমিতি সাগ্রহমসুয্যা বন্ধনমোচনমিত্যাকাঙ্ক্ষায়ামাহ—নার্হতীত্যাদি। কৃতঃ অপরাধঃ দোষঃ যেন তথাভূতঃ কৃতদোষোঽপি পরিজনঃ পরিবারঃ উৎসবদিবসেষু আনন্দব্যাপারোচিতেষু দিনেষু দণ্ডং শাস্তিং ন অর্হতি ইতি হেতোঃ ময়া মোচিতে বন্ধনাৎ ইতি শেষঃ। এতে বকুলাবলিকা-মালবিকে মাং প্রণিপতিতুং নমস্কর্তুম্ উপগতে আগতে, তথাহি ত্বং যদনেনৈব ময়ি কিমপি অন্যায্যং মালবিকাগতং সম্ভাব্য ক্রোধং গতাসি তদতিমিথ্যা ইতি ভাবঃ। কৃতাপরাধঃ অপীত্যপিশব্দেন নিরপরাধস্য অবশ্যমোচনপ্রত্যয়াৎ অর্থাপত্তিঃ, তয়া চ মালবিকা-বকুলাবলিকয়োরপরাধরাহিত্যং প্রতীয়তে ইতি অলঙ্কারেণ বস্তুধ্বনিঃ। উক্তিরস্য

---

ইরা। 'অস্থানে' কথাটী আর্য্যপুত্র ঠিকই বলিয়াছেন। আমাদের ভাগ্য অন্যত্র চলিয়া গেলেও যদি আবার কোপ করি, তবে আমরাই উপহাসাস্পদ হইব। (ফ)

রাজা। তুমি অন্যরূপ ভাবিতেছ। আমি কিন্তু সত্যই কোপের কারণ দেখি না। কারণ—(ব)

इरा। णिउणिए! गच्छिअ देविं विस्सवेहि—दिट्टं भवदीए एक्कपक्खपादित्तणं। अवहिदं मे हिअअं अज्ज त्ति। [निपुणिके! गत्वा देवीं विज्ञापय—दृष्टं भवत्या एकपक्षपातित्वम्। अवधृतं मे हृदयमद्येति।] (भ)

निपु। तह। [तथा।] (इति निष्क्रान्ता)। (म)

विदू। (आत्मगतम्)। अहो! अणत्थो संपड्दिो, बन्धणब्भट्टो गेहकवोदओ बिडालिआए आलोए पड़िदो। [अहो! अनर्थः सम्पतितः, बन्धनभ्रष्टो गेहकपोतकः विडालिकाया आलोके पतितः।] (य)

---

मालविकासम्भोगस्य अन्यथा वचनादिना व्याजेन गोपनप्रत्ययात् व्याजोक्तिरपि, अर्थापत्ति व्याजोक्त्योः सङ्करश्च। जातिराशी नाम।

(भ) भवत्याः देव्याः एकपक्षपातित्वम् एकमेव जनं प्रति अनुरागः, तथाहि मालविका वकुलावलिका च यत्र बद्धे अभवतां तत्र द्वाररचिका तवाङ्गुरीयकमुद्राया अदर्शनेन ते न मोचयिष्यतीति निर्णये त्वया अङ्गुरीयकमुद्राया अदाने असम्भवमेव तन्मोचनमत एव मोचनात् त्वया अङ्गुरीयकमुद्राया दानं तेन च मालविकापक्षपातित्वं प्रतीयते इति भावः। अद्य मे मम हृदयं चित्तम् अवधृतं प्राप्तनिश्चयं जातं, त्वया मालविका राज्ञा सह सङ्गमयितुं हृदये कामना अन्तराले च चेष्टा क्रियते इति विषय इति शेषः। एतावत्कालं नैतादृशं चिन्तितवतीति भावः।

(म) तथा त्वया यथा कथितं तथैव देवीं विज्ञापयिष्यामि इति अर्थः।

---

কোন পরিজন অপরাধ করিলেও উৎসব দিবসে তাহাকে শাস্তি দেওয়া উচিত নয়। এই জন্যই আমি ইহাদিগকে মোচন করিয়াছি। আর ইহারাও প্রণিপাত করিবার জন্য আমার নিকট আসিয়াছে ॥১৭॥

ইরা। নিপুণিকে! মহারাণীকে যাইয়া বল যে, আপনার একের প্রতি পক্ষপাতিতা দেখিলাম। আজ আমার মন নিশ্চিত হইল। (ভ)

নিপু। আচ্ছা। (এই বলিয়া প্রস্থান করিল।) (ম)

( प्रविश्य निपुणिका। ) ( अपवार्य्य )। भट्टिणि! जदिच्छादिट्ठाए माहविआए आचक्खिदं—एव्वं क्खु पदं णिव्वुत्तं त्ति। ( इति कर्णे कथयति। ) भट्टिनि! यदृच्छादृष्टया माधविकया आख्यातम्—एवं खलु तत् निर्वृत्तमिति। ] (र)

इरा। ( आत्मगतम् )। उववस्सं सव्वं ज्जेव। बह्मबन्धुणा उब्भिस्सो पओओ। ( विदूषकं विलोक्य प्रकाशम् ) इअं अस्स कामतन्तसचिवस्स बह्मबन्धुणो णीदी। [ उपपन्नं सर्व्वमेव। ब्रह्मबन्धुना उद्भिन्नः प्रयोगः। इयमस्य कामतन्त्रसचिवस्य ब्रह्मबन्धोः नीतिः। ] (ल)

---

(য) अनर्थः अनिष्टं सम्पतितः उपस्थितः बन्धनात् भ्रष्टः मुक्तः गेहकपोतकः पालितपारावतः, दयायां कप्रत्ययः। विड़ालिकायाः मार्ज्जार्य्याः आलोके दर्शने पतितः, तथाहि यथा बन्धनभ्रष्टस्य कपोतस्य विड़ालिकया दर्शने विपत्तिः तथैव बन्धनमुक्तायाः मालविकाया इरावत्या दर्शने इति प्रस्तुतार्थसमन्वयः। अत्र समादप्रस्तुतात् समस्य प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः।

(र) यदृच्छया दैवक्रमेण दृष्टया अवलोकितया पथिगमनकाले इति शेषः। माधविकया तदाख्यया सारभाण्डगृहे द्वारवतीरूपेण तदानीं स्थितया परिचारिकया आख्यातं कथितम् एतत् मालविकावकुलावलिकयोः तस्मात् मोचनम् एवं मया कर्णे वक्ष्यमाणरूपेण निर्व्वृत्तं सम्पन्नमिति "राज्ञः सोपसर्गं नक्षत्रं तत् सर्व्वबन्धनमोचो विधीयता"मित्युक्त्वा गौतमेन अङ्गुरीयकमुद्रा देव्या अधिगता ततस्तद्दर्शनेन माधविकया एते मोचिते इति एवं पदलक्षणीयः कर्णे कथितार्थः।

---

বিদু। (স্বগত) হায়! মহাবিপদ্ উপস্থিত! বন্ধনমুক্ত গৃহপালিত কপোত বিড়ালের দৃষ্টিপথে পড়িয়াছে! (য)

নিপু। ( হস্ত দ্বারা মুখ আচ্ছাদন করিয়া ) রাণি! মাধবিকার সহিত হঠাৎ দেখা হওয়ায় সে বলিল—ইহা এইরূপে ঘটিয়াছে। (কাণে কাণে বলিল।) (র)

विदू। भोदि ! जदि णीदीए एक्कं वि अक्खरं पढ़ेअं ण अत्तभवं संस्सिदो भवे। [भवति ! यदि नीत्या एकमप्यक्षरं पठेयं, नात्रभवन्तं संश्रितो भवेयम्। ] (व)

राजा। (अपवार्य्य)। आः ! कथं नु खल्वस्मात् सङ्कटा-न्मुच्यावहे। (श)

---

(ल) सर्व्वमेव तत्कथितं निखिलमेव वस्तु उपपन्नं युक्तियुक्तं, ब्रह्मबन्धुना अति-निकृष्टब्राह्मणेन प्रयोगः अयम् उपायः मालविकाबकुलावलिकयोर्म्मोचनगतिरित्यर्थः। उद्भिन्नः उद्भावितः। इयं माधविकया उक्ता प्रक्रतमालविकामोचने उपायभूता अस्य इज्यमानस्य कामतन्त्रे कामराज्ये सचिवस्य मन्त्रिणः ब्रह्मबन्धोः कुत्सितब्राह्मणस्य नीतिः, तथाहि अस्यैव बुद्धिरियं मालविकामोचनहेतुभूता, तदयमेव इंच्य इति भावः।

(व) नीत्याः नीतिशास्त्रस्य एकमपि एकमात्रमपि अक्षरं वर्णं, पठेयम् अपठिष्यं का कथा बहूनां अक्षराणां इत्यर्थः। तदा अत्रभवन्तं महाराजं न संश्रितः न भवेयम् एनमाश्रित्य अनुगतभावेन न अस्थास्यमित्यर्थः। तथाहि मम नीतिशास्त्रे सुतरामनभि-ज्ञतया मन्नीतिप्रयुक्तोऽयं व्यापार इति न सम्भावयेथा इति भावः।

(श) आः कोपसूचकमव्ययम्, कोपश्च विदूषकस्य प्रक्रतविपत्प्रतीकारगत्यचिन्तनेन रसिकतापरायणतामवलोक्येति। अस्मात् उपस्थितात् सङ्कटात् विपदः कथं केन प्रकारेण कां गतिमाश्रित्य इत्यर्थः। मुच्यावहे त्वम् अहञ्च मुक्तौ भवावः, मालविका अहञ्चेति वा।

---

ইরা। (স্বগত) সকলই সম্ভব। কুব্রাহ্মণই এই কৌশল আবিষ্কার করিয়াছে। (বিদূষকের দিকে চাহিয়া প্রকাশ্যে) কামব্যাপারে সহায় এই নীচ ব্রাহ্মণের এই নীতি। (ল)

বিদূ। ওগো! নীতি শাস্ত্রের যদি এক অক্ষরও পড়িতাম, তবে আর (এইরূপে) ইহার আশ্রয় লইতাম না। (ব)

( प्रविश्य साविगा जयसेना ) देव ! कुमारी वसुलच्छी कन्दुअं अणुधावन्ती पिङ्गलवाणरेण बलिअं वित्तासिदा। अङ्कणिसण्णा अ देवीए पवादकिसलअं विअ वेवमाणा ण किंपि पड़िवज्जदि। [ देव ! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलीयो वित्रासिता। अङ्कनिषण्णा च देव्याः प्रवातकिसलयमिव वेपमाना न किमपि प्रतिपद्यते। ] (ष)

राजा। कष्टम्। कातरो बालभावः। (स)

इरा। (साविगम्)। तुवरदु तुवरदु भज्जउत्तो णं समासासइदुं.

---

(ष) साविगा ससम्भ्रमा, जयसेना तन्नामधेया प्रतीहारी, वसुलक्ष्मीः तदाख्या राजकन्या कन्दुकं क्रीड़नकगोलकम् अनुधावन्ती अनुसरन्ती दूरं चलितस्य कन्दुकस्य पश्चात् अनुसरणं कुर्व्वती पिङ्गलवानरेण पिङ्गलाख्येन शाखामृगेण बलीयः अतितरां वित्रासिता त्रासं गमिता, देव्याः धारिण्याः अङ्के क्रोड़े निषण्णा अवस्थिता च प्रवातकिसलयमिव प्रबलवायुकम्पितपल्लव इव वेपमाना कम्पमाना न किमपि प्रतिपद्यते बुध्यते, संज्ञाहीना एव व्यवतिष्ठते इत्यर्थः।

(स) बालभावः शैशवं कातरः कातरताबहुलः, बाल्ये साधारणेनैव कारणेन वैक्लव्यं घटते इति वानरवित्रासिताया वसुलक्ष्म्या अयं भावः समजनीति भावः

---

রাজা। ( অপবারণ করিয়া ) আঃ! কিরূপে এই বিপদ্ হইতে মুক্ত হইব ? (শ)

( সসম্ভ্রমে প্রবেশ করিয়া ) জয়সেনা। মহারাজ! কুমারী বসুলক্ষ্মী কন্দুকের অনুসরণ করিতে করিতে পিঙ্গলনামক বানর হইতে অত্যন্ত ভয় পাইয়াছেন। দেবীর ক্রোড়ে থাকিয়া প্রবলবায়ুতে চঞ্চল পল্লবের ন্যায় কাঁপিতেছেন। কিছুতেই সুস্থির হইতেছেন না। (ষ)

রাজা। দুঃখের কথা। বাল্যাবস্থায় কি দুর্ব্বলতা! (স)

मा से संतासजणिदो विआरो वड्ढदु। [ त्वरतां त्वरतामार्य्यपुत्रः एनां समाश्वासयितुं, मा अस्याः सन्त्रासजनितो विकारो वर्द्धताम्। ] (छ)

राजा। अहमेनां संज्ञापयामि। ( इति सत्वरं निष्क्रामति )। (च)

विदू। साहु रे पिङ्गलवाणर ! साहु, परित्तादो तुए सवक्खो। [ साधु रे पिङ्गलवानर ! साधु, परित्रातस्त्वया स्वपक्षः ]। (क)

[ निष्क्रान्तो राजा विदूषकश्च, इरावती निपुणिका प्रतिहारी च ] (ख)

माल। हला ! देवीं चिन्तिअ वेवदि मे हिअअं। ण आणि

---

(छ) त्वरतां शीघ्रं गच्छतु, एनां वसुलक्ष्मीं, समाश्वासयितुम् आश्वस्तां कर्त्तुम्, अस्याः वसुलक्ष्म्याः संत्रासजनितः भीतिसमुत्थः विकारः धातुवैषम्यं मोहातिरेको वा।

(च) अहम् एनां वसुलक्ष्मीं संज्ञापयामि संज्ञायुक्तां करोमि, अहंपदेन आत्मनो-विशेषेण निर्द्देशात् वसुलक्ष्म्या राजनि परमा प्रीतिः व्यक्ता, अन्येनाशक्यस्य तन्मोहाप-सारणस्य स्वकर्त्तृकत्वेन निर्द्देशात् वैलक्षण्यप्रतीतिः।

(क) साधु उत्तमं कृतं त्वया इति शेषः। कथमित्याह—परित्रात इत्यादि। स्वपक्षः आत्मपक्षः राजा अहञ्च इत्यर्थः। परित्रातः विपदो मोचितः. तथाहि यदि इदानीं त्वया वसुलक्ष्मीः न विवासिता मोहमगमिष्यत् तदा इरावत्या निग्रहेण राज्ञः आत्म-निष्कृतिरतिदुष्करा ममापि भूयसी विपदुपास्थास्यत इदानीम् अस्मिन् उपक्रमे इरावत्या प्रकृतं विस्मृत्य निग्रहाद्विरतया भवितव्यं तेन अस्माकं निर्व्वाधा मुक्तिरिति भावः।

---

ইরা। ( ব্যস্ততার সহিত ) আর্য্যপুত্র ! ইহাকে সুস্থ করিতে সত্বর হউন। ইহার ভয়জনিত বিকারের যেন বৃদ্ধি না হয়। (ছ)

রাজা। আমি ইহাকে সুস্থ করিতেছি। (সত্বর প্রস্থান করিলেন ) (চ)

বিদূ। ওরে পিঙ্গল বানর ! উত্তম করিয়াছিস্। তুই তোর স্বপক্ষকে রক্ষা করিলি। (ক)

( রাজার সহিত বিদূষক, ইরাবতী ও নিপুণিকা এবং প্রতিহারী প্রস্থান করিল। ) (খ)

संपदि किं अदो अणुभविदव्वं भविस्सदि त्ति। [ देवीं चिन्तयित्वा वेपते मे हृदयम्। न जाने सम्प्रति किमतोऽनुभवितव्यं भविष्यतीति ]। (ग)

(नेपथ्ये) अच्चरिअं अच्चरिअं ! अपुण्णे एव पञ्चरत्ते दोहलस्स, मुउलेहिं संणद्धो तवणीआसोओ ! जाव देवीए णिवेदेमि। [ आश्चर्य्यमाश्चर्य्यम्। अपूर्ण एव पञ्चरात्रे दोहदस्य, मुकुलैः सन्नद्धस्तपनीयाशोकः ! यावद्देव्यै निवेदयामि। ] (घ)

[ उभे श्रुत्वा प्रहृष्टे ] (ङ)

---

(ग) देवीं धारिणीं चिन्तयित्वा विभाव्य मे मम हृदयं वेपते भयेन कम्पते, तथाहि इरावती अस्माकमेतं वृत्तान्तं रहस्यमपि विज्ञातवती धारिणीमुपेत्य यदि कथयेत् तदा तस्याः कोपेन मे महती विपत्तिरेव सम्भविता इति भयकारणमिति भावः। अतः एतस्मात् परं सम्प्रति आगामिकाले किं किदृशम् अनिष्टम् अनुभवितव्यम् न जाने। एकवारे मम निरोधं कृतवती इदानीं देवीवृत्तान्तमिमं श्रुत्वा किं वा मे दण्डविधानं कुर्य्यादिति तात्पर्य्यम्।

(घ) दोहदस्य वराङ्गनाचरणाघातमापद्य पञ्चरात्रे निशापञ्चके अपूर्णे अप्राप्त एव तपनीयाशोकः स्वर्णवर्णाशोकपुष्पवृक्षः, मुकुलैः सन्नद्धः जुष्टः। तथाहि मालविकायाः पदाघातात् पञ्चरात्राभ्यन्तर एव अशोके पुष्पमुकुलानि जातानि इति भावः। देव्यै धारिण्यै निवेदयामि कथयामि, तस्या एव एतदुद्यमे हर्षातिशयसम्भवादिति भावः। नेपथ्ये उद्यानपालिकाया उक्तिरियम्।

(ङ) उभे वकुलावलिका मालविका च, श्रुत्वा उद्यानपालिकाया उक्तिमाकर्ण्य

---

মাল। সখি ! দেবীকে স্মরণ করিয়া আমার হৃদয় কম্পিত হইতেছে। জানি না, এখন আবার ইহার পর কি অশুভ অনুভব করিতে হইবে ! (গ)

( নেপথ্যে ) আশ্চর্য্য ! আশ্চর্য্য ! দোহদসংকারের পর পাঁচ রাত্রি অতিবাহিত না হইতেই রক্তাশোক তরু মুকুলিত হইয়াছে। দেবীকে যাইয়া বলি। (ঘ)

बकुला। आससदु सही। सच्चपइण्णा देवी। [ आश्वसितु सखी। सत्यप्रतिज्ञा देवी। ] (च)

माल। तेण अहं पमदवणपालिआए पिट्ठदो होमि। [ तेनाहं प्रमदवनपालिकायाः पृष्ठतो भवामि। ] (छ)

बकुला। तह। [ तथा ] ( इति निष्क्रान्ते ) (ज)

इति चतुर्थोऽङ्कः ॥ ४ ॥

---

प्रहृष्टे मातिशयं हर्षं प्राप्तवत्यौ अशोके मुकुलिते देव्या प्रतिश्रुतस्य स्वाभिलषितदानस्य सम्भावनेन मालविकाया हर्षः बकुलावलिकायाश्च सख्यास्तथात्वेन।

(च) सखी आश्वसितु आश्वस्ता भवतु, देव्या अभिलषितलाभेन ततो विपदाशङ्काया अभावादिति। सत्यप्रतिज्ञा अव्यर्थप्रतिज्ञा, तथाहि देवी अशोकवृक्षस्य मुकुलोदये तव अभिलषितदानं प्रतिश्रुतवती, तदिदानीम् अशोके मुकुलिते तव अभिलषितदानमेव करिष्यति न तु निग्रहीष्यति मा भीतिलेशमपि गच्छ इति भावः।

(छ) तेन अशोकस्य मुकुलोदयात् स्वाभिलषितलाभसम्भवेन, प्रमदवनपालिकायाः उद्यानपालिकायाः पृष्ठतः भवामि पश्चाद् गच्छामि। आदौ प्रमदवनपालिका देवीम् अनेन शुभसंवादेन संवादयतु तदनन्तरमेव देवीसमीपगमने मम महान् आदरः सम्भविष्यति इति भावः।

(ज) तथा त्वया कल्पित एव विषयो न्याय्यः, तदेव कुरुष्व इति भावः। इति विमर्षसन्धिः। निष्क्रान्ते मालविकाबकुलावलिके इति शेषः, अस्य अङ्कान्तत्वात् सर्व्वपात्रनिष्क्रमणस्य योग्यत्वात् तदुक्तं "अन्तर्निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तित" इति।

इति मालविकाग्निमित्रव्याख्याने विजयाख्याने चतुर्थोऽङ्कः समाप्तः ॥ ४

---

( উভয়ে শুনিয়া আনন্দিত হইল। ) (ঙ)

বকুলা। সখি! আশ্বস্তা হও। দেবী প্রতিজ্ঞা ভঙ্গ করেন না। (চ)

মাল। তবে প্রমদবনপালিকার পশ্চাদ্বর্ত্তিনী হই। (ছ)

বকুলা। আচ্ছা। ( উভয়ে প্রস্থান করিল। ) (জ)

চতুর্থ অঙ্ক সমাপ্ত ॥ ৪ ॥

# पञ्चमोऽङ्कः ।

( ततः प्रविशत्युद्यानपालिका )। (क)

उद्यानपालिका। उवक्खित्तो मए किदसक्कारविहिणो तवणीअसोअस्स भित्तिवेदिआबन्धो। जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि। (परिक्रम्य) अह्नो! देव्वस्स अणुकम्पणीआ मालविआ। तस्सिं तह चण्डिआ देवी इमिणा असोअदुहरिसदोहलवुत्तन्तेण पसादसुमुही भविस्सदि। कहिं णु क्ख भवे देवी? (विलोक्य) अह्मो एसो देवीए परिअणब्भन्तरो किं वि जदुमुद्दालञ्छिदं मञ्जूसं गेह्निअ चदुस्सालादो कुब्जो सारसिओ णिक्कमदि। पुच्छिस्सं दाव णं। [उपचिप्तो मया कृतसत्कारविधेस्तपनीयाशोकस्य भित्तिवेदिकाबन्धः। यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि। अहो! दैवस्यानुकम्पनीया मालविका। तस्यां तथा चण्डिका देवी

---

(ख) कृतः सम्पादितः सत्कारविधिः सलिलसेकादिरूप उपचारो यस्य तथाभूतस्य सविशेषमुपचरितस्य तपनीयाशोकस्य भित्तिवेदिकाबन्धः मूलस्थवेदिकागतो जलसेकादिहेतोरालवालवत् स्थानम् उपचिप्तः रचितः। अनुष्ठितः आचरितः नियोगः देव्यादेशः येन तथाभूतं सम्पादितदेवीनिदेशम् आत्मानं निवेदयामि कथयामि, देव्या आदेशं यथायथं सम्पादितवत्यस्मि इति देवीं विज्ञाप्य सन्तोषयामि इति भावः। दैवस्य नियतेः, कर्त्तरि षष्ठी, अनुकम्पनीया दयायोग्या, तथाहि मालविकाया अत्यन्तमेव दुःखमदृष्टमिति भावः। कथमित्याह—तस्यामित्यादि। तस्यां मालविकायां तथा अति-

---

( অনন্তর উদ্যানপালিকা প্রবেশ করিল। ) (ক)

अनेन अशोकहर्षदोहदवृत्तान्तेन प्रसादसुमुखी भविष्यति। कस्मिन् खलु भवेद्देवी? अहो एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालात् कुब्जः सारसिको निष्क्रामति। प्रक्ष्यामि तावदेनम्। ] (ख)

( ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः ) (ग)

---

मावेण चण्डिका क्रोधयुक्ता देवी अनेन अचिरप्रवृत्तेन मया कथञ्चित् गृहीतेन अशोकस्य हर्षदोहदवृत्तान्तेन आनन्दकरदोहदफलीभूतमुकुलोद्गमसंवादेन, प्रसादेन प्रसन्नतया सुमुखी हृष्टानना। कस्मिन् कुत्र स्थाने देवी भवेत्, देवी इदानीं कुत्र गत्वा मया संवादयितव्या इति भावः। एषः अदूरे दृश्यमानः परिजनाभ्यन्तरः परिजनानां मध्ये कोऽपि जतुमुद्रालाञ्छितां जतुमयमुद्राङ्कयुक्तां मञ्जूषां पेटिकां, सारसिकनामकः, अथवा सरसाभिः अन्तःपुरवर्त्तिनीभिः राज्ञीभिः सह संसृष्ट इति तथाभूतः, कुब्जः। एनं सारसिकं कुब्जं प्रक्ष्यामि, एनं पृष्ट्वा देव्या वर्त्तमानमधिष्ठानं निर्द्धारयामि इति भावः।

(ग) यथानिर्द्दिष्टहस्तः जतुमुद्रालाञ्छितमञ्जूषायुक्तकरः। प्रविशति उद्यानपालिकायाः स्थाने इति शेषः।

---

উদ্যানপালিকা। ( জলসেচনাদিরূপ ) সৎকার অনুষ্ঠান দ্বারা আমি রক্তাশোকের মূলে ভিত্তির ন্যায় বেদী রচনা করিয়া দিয়াছি। আমি যে আদেশ প্রতিপালন করিয়াছি, তাহা মহিষীকে যাইয়া নিবেদন করি। ( পরিক্রমণ করিয়া ) অহো! মালবিকা দৈবের কিরূপ দয়ার পাত্র! মালবিকার প্রতি তাদৃশ কুপিতা দেবীও অশোকের এই আনন্দজনক কুসুমোদ্গমবৃত্তান্ত শুনিয়া প্রসন্না হইবেন। দেবী আছেন কোথায়? (অবলোকন করিয়া) এইত দেবীর সারসিক নামক একজন কুব্জ পরিচারক গালার মোহরযুক্ত পেটিকা লইয়া চতুঃশালা হইতে বাহির হইতেছে। ইহাকে জিজ্ঞাসা করি। (খ)

( অনন্তর পেটিকা হস্তে কুব্জ প্রবেশ করিল )। (গ)

उद्यान। सारसिअ ! कहिं पत्थिदोऽसि ? [ सारसिक ! कस्मिन् प्रस्थितोऽसि ? ] (घ)

सार। महुअरिए ! विज्जाभरिआणं बह्मणाणं इमं णिच्च-दक्खिणं मासिइं अज्जपुरोहितस्स हत्थं पावइस्सं। [ मधुकरिके ! विद्याभरितानां ब्राह्मणानाम् इमां नित्यदक्षिणां मासिकीम् आर्य्यपुरोहितस्य हस्तं प्रापयिष्यामि। ] (ङ)

मधु। अह किंणिमित्तं ?। [ अथ किं निमित्तम् ? ] (च)

सार। जदप्पहुदि सेणावदी जस्सतुरंगरक्खणे णिउत्तो भट्टिदारओ वसुमित्तो, तदप्पहुदि तस्स आउसणिमित्तं णिक्कसदसुवस्सपरिमाणं दक्खिणं देवी दक्खिणोएहिं परि-ग्गाहेदि। [ यदा प्रभृति सेनापतिर्यज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारको वसुमित्र:,

---

(घ) कुत्र कस्मिन् प्रदेशे, प्रस्थित: कृतयात्र: असि ?

(ङ) मधुकरिकेति उद्यानपालिकाया नाम। विद्याभि: शास्त्रज्ञानै: भरितानां सयुक्तानां सम्पन्नप्रज्ञानाम् इत्यर्थ:। ब्राह्मणानां सम्बन्धिनीमित्यर्थ:। मासिकीं मासं यावत् नित्यदक्षिणां प्रतिदिननिष्पादनीयां दक्षिणाम् आर्य्यपुरोहितस्य हस्तं प्रापयिष्यामि नेष्यामि, मासिकीं माससम्बन्धिनीं नित्यदक्षिणाम् अवश्यप्रदेयां दक्षिणा-मिति वा।

(च) अथ प्रश्न, किंनिमित्तम् एतद्दानस्य को हेतुरित्यर्थ:।

---

উদ্যান। সারসিক ! কোথায় যাইতেছ ? (ঘ)

সার। মধুকরিকে ! কৃতবিদ্য ব্রাহ্মণদিগের নির্দ্দিষ্ট এই মাসিক দক্ষিণা আর্য্য পুরোহিত মহাশয়ের হস্তে দিবার জন্য যাইতেছি। (ঙ)

মধু। কি জন্য ? (চ)

तदाप्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति। ] (छ)

मधु। अह कहिं देवी, किं वा अणुचिट्ठदि? [ अथ कस्मिन् देवी, किं वा अनुतिष्ठति? ] (ज)

सार। मङ्गलघरे आसणत्था भविअ विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लेहकरेहिं वाचीअमाणं सुणादि। [ मङ्गलगृहे आसनस्था भूत्वा विदर्भविषयाद् भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकरैर्वाच्यमानं शृणोति। ] (झ)

---

(छ) यदाप्रभृति यत्कालमारभ्य, यज्ञतुरङ्गाणाम् अश्वमेधयागोपकरणीभूतानाम् अश्वानां रक्षणे परितः पालने भर्तृदारकः राजकुमारः वसुमित्रः तदाख्यः सेनापतिः सेनानायकः नियुक्तः कृतः, तदा प्रभृति तत्कालमारभ्य तस्य वसुमित्रस्य आयुर्निमित्तम् आयुषः कारणाय निष्काणाम् अशीतिरत्तिकापरिमितस्वर्णात्मकसुवर्णचतुष्करूपाणां शतं तत्परिमितं यत् सुवर्णं तत्परिमाणां दक्षिणां दक्षिणीयैः दानयोग्यैः ब्राह्मणैः परिग्राहयति, ब्राह्मणेभ्यः तावद्धनदानेन उपचितैः पुण्यैः पुत्रस्य आयुर्वर्द्धनाय चेष्टते अतएव तद्दक्षिणामादाय आर्यपुरोहितस्य समीपे गच्छामि, स एव तेभ्यो दास्यतीति भावः।

(ज) अथ प्रश्ने, देवी क्व कस्मिन् स्थाने वर्त्तते इति शेषः। किं कार्यम् अनुतिष्ठति आचरति।

(झ) मङ्गलगृहे पवित्रनिकेतने, आसनस्था भूत्वा उपविष्टा सती, विदर्भविषयात्

---

সার। যেদিন হইতে মহারাজকুমার বসুমিত্র যজ্ঞীয় অশ্বরক্ষার নিমিত্ত সেনাপতি নিযুক্ত হইয়াছেন, তদবধি তাঁহার আয়ুকামনায় মহিষী উপযুক্ত পাত্রে প্রতিদিন চারিশত সুবর্ণমুদ্রাবিশেষ দক্ষিণা প্রদান করিয়া থাকেন। (ছ)

মধু। দেবী কোথায়? করিতেছেনইবা কি? (জ)

मधु। को उण विदब्भराअवुत्तन्तो सुणोअदि ? [कः पुनर्विदर्भ-राजवृत्तान्तः श्रूयते ?] (ञ)

सार। वसीकिदो किल वीरसेणप्पमुहेहिं दण्डचक्केहिं भट्टिणो विदब्भणाहो। मोइदो किल से दाआदो माहवसेणो। दूदो अ तेण महासाराणि रअणवाहणाणि सिप्पिदारिआभूइट्ठं परिअणं अ उवाअणीकरिअ भट्टिणो सआसं पेसिदो। सो किल भट्टारअं पेक्खिस्सदि। [वशीकृतः किल वीरसेनप्रमुखैर्दण्डचक्रै-र्भर्त्तुर्विदर्भनाथः। मोचितः किलास्य दायादो माधवसेनः। दूतश्च तेन महासाराणि रत्नवाहनानि शिल्पिदारिकाभूयिष्ठं परिजनञ्चोपायनीकृत्य भर्त्तुः सकाशं प्रेषितः। स किल भर्त्तारं प्रेक्षिष्यते।] (ट)

---

विदर्भजनपदात् भ्राता वीरसेनेन तदाख्येन प्रेषितं लेखं पत्रं लेखकैः तस्याः प्रति-निधिभूतैः लेखकजनैः वाच्यमानं शृणोति।

(ञ) विदर्भराजस्य वृत्तान्तः संवादः कः कीदृशः श्रूयते आकर्ण्यते, तत्त्वं शुभम् अशुभं वा इति भावः।

(ट) वीरसेनप्रमुखैः वीरसेनप्रधानैः तदुपलक्षितैरित्यर्थः। भर्त्तुः महाराजस्य अग्निमित्रस्य दण्डचक्रैः सेनाबलैः विदर्भराजः वशीकृतः अधीनतां नीतः, अस्य विदर्भ-राजस्य दायादः ज्ञातिजनः, माधवसेनः तदाख्यः मोचितः मुक्तिं प्रापितः। तेन वीरसेनेन महासाराणि महार्घाणि रत्नानि हीरकादीनि वाहनानि गजाश्वादीनि शिल्पिन्यो याः दारिकाः शिल्पकर्म्मकुशलाः कुमार्य्यः तद्भूयिष्ठं परिजनञ्च उपायनीकृत्य

---

সার। দেবী মঙ্গলগৃহে আসনে উপবেশন করিয়া বিদর্ভদেশ হইতে তাঁহার ভ্রাতা বীরসেনকর্ত্তৃক প্রেরিত পত্র লিপিকর দ্বারা পড়াইয়া শুনিতেছেন। (ঝ)

মধু। বিদর্ভরাজ্যের কি সংবাদ শুনিতেছেন? (ঞ)

मधु। गच्छ, अनुचिट्ठ अत्तणो णिओअं। अहं पि देवीं पेक्खिस्सं। [ गच्छ अनुतिष्ठ आत्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये। ] (ठ)

( इति निष्क्रान्तौ। )

प्रवेशकः (ड)

---

उपहारीकृत्य भर्त्तुः राज्ञः अग्निमित्रस्य सकाशं प्रेषितः दूत इति कर्म्मपदम्। सः, किल सम्भावयामि, भट्टारकं राजानं प्रेक्षिष्यते द्रक्ष्यति, राज्ञा सह उपायादिसमन्वितः समागमं विधास्यतीत्यर्थः।

(ठ) आत्मनः स्वस्य नियोगं कर्त्तव्यम् अनुतिष्ठ विधेहि स्वकर्त्तव्याय प्रतिष्ठस्व इति भावः।

(ड) प्रवेशकः, तथात्वञ्चास्य सन्दर्भस्य विदर्भतः सम्मिलितस्य दूतस्य आगमनादिना वृत्तेन वृत्तान्तेन राजसाक्षात्कारादिरूपस्य वर्त्तिष्यमाणविषयस्य च निबन्धेन, तदुक्तं— "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" विष्कम्भकसादृश्यञ्च वृत्तवर्त्तिष्यमाणकथांशावेदकत्वेन। पात्रयोरपि नीचत्वमत्र प्रवेशकत्वे प्रयोजकं, विष्कम्भके नीचमध्यमाभ्यां वृत्तवर्णनम् अत्र तु केवलेन नीचपात्रेणैव इति, वैलक्षण्यमन्यच्च प्रवेशकस्य यत् अङ्कद्वयान्तरेव तत्सम्बन्धः नतु अङ्कस्य केवलमादौ तेन प्रथमाङ्के प्रवेशकव्यवच्छेदः, विष्कम्भकस्तु प्रथमाङ्केऽपि भवतीति अलमप्रस्तुतानेकजल्पनेन।

---

সার। বীরসেনপ্রমুখ রাজসেনানীগণ বিদর্ভরাজকে বশে আনিয়াছেন এবং জ্ঞাতি মাধবসেনকে মোচন করিয়াছেন; আর মাধবসেন বহুমূল্য রত্ন ও যান এবং শিল্পজ্ঞ স্ত্রীবহুল সেবকজন উপঢৌকন স্বরূপ দিয়া মহারাজসকাশে এক দূত প্রেরণ করিয়াছেন। সে মহারাজের সহিত সাক্ষাৎ করিবে। (ট)

মধু। যাও, স্বকার্য্য সম্পাদন কর। আমিও দেবীকে দর্শন করিব। (ঠ)

[ উভয়ে প্রস্থান করিল ]

(ততঃ প্রবিশতি প্রতিহারী)

প্রতী। আণত্তহ্মি দেবীএ অসোঅসক্কারব্বাবিদাএ,—বিন্নবেহি অজ্জউত্তং, ইচ্ছামি অজ্জউত্তেণ সহ অসোঅরুক্খস্স পসুণলচ্ছিং পচ্চক্খীকাদুং ত্তি। তা জাব ধম্মাসণগদং দেবং পড়িবালেমি। (ইতি পরিক্রামতি।) [আজ্ঞপ্তাস্মি দেব্যা অশোকসৎকারব্যাপৃতয়া,—বিজ্ঞাপয়ার্য্যপুত্রম্, ইচ্ছামি আর্য্যপুত্রেণ সহ অশোকবৃক্ষস্য প্রসূনলক্ষ্মীং প্রত্যক্ষীকর্ত্তুমিতি। তদ্যাবৎ ধর্ম্মাসনগতং দেবং প্রতিপালয়ামি।] (ঢ)

(নেপথ্যে বৈতালিকাঃ।) (ণ)

---

(ঢ) অশোকস্য তপনীয়াশোকবৃক্ষস্য সৎকারে মূলস্থিতাবর্জ্জনাদিপরিষ্কারে ব্যাপৃতয়া নিযুক্তয়া দেব্যা ধারিণ্যা আজ্ঞপ্তা অস্মি অহমিতি শেষঃ। অশোকস্য পুষ্পোন্মুখত্বাৎ তৎসৎকারে দেব্যাঃ প্রবৃত্তিরিতি জ্ঞেয়ম্। আজ্ঞাবিষয়মেবাহ—বিজ্ঞাপয় ইত্যাদিনা। আর্য্যপুত্রং রাজানম্। প্রসূনলক্ষ্মীং কুসুমশোভাং প্রত্যক্ষীকর্ত্তুম্ অবলোকয়িতুম্, ইচ্ছামি অহমিতি শেষঃ। ধর্ম্মাসনগতং সিংহাসনাসীনং রাজসভাবস্থিতমিত্যর্থঃ। প্রতিপালয়ামি প্রতীক্ষে, ধর্ম্মাসনাৎ যাবৎ সমুত্থায় এতি তাবৎ তস্য প্রতিপালনং করোমি ইতি ভাবঃ।

(ণ) বৈতালিকাঃ মঙ্গলপাঠকাঃ বক্ষ্যমাণবচনানি পঠন্তীতি শেষঃ।

---

প্রবেশক। (ড) *

(অনন্তর প্রতিহারী প্রবেশ করিল।)

প্রতী। অশোকতরুর সৎকারে ব্যাপৃতা দেবী আজ্ঞা করিয়াছেন—আর্য্যপুত্রকে জানাও যে, আমি আর্য্যপুত্রের সহিত অশোকবৃক্ষের পুষ্পসমৃদ্ধি দেখিতে ইচ্ছা করি; অতএব বিচারাসনস্থিত মহারাজের জন্য প্রতীক্ষা করি। (এই বলিয়া পরিক্রমণ করিল।) (ঢ)

(নেপথ্যে বৈতালিকগণ) (ণ)

---

* নীচপাত্র দ্বারা অতীত ও অনাগত বিষয়ের সূচক অঙ্কদ্বয়মধ্যবর্ত্তী সন্দর্ভবিশেষকে প্রবেশক কহে।

प्रथमः । दिष्ट्या दण्डेनैवारिशिरःसु वर्त्तते देवः । (त)

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥१॥

[ अन्वयः । हे वरद ! त्वं परभृतकलव्याहारेषु विदिशातीरोद्यानेषु अङ्गवान् आत्तरतिः अनङ्ग इव मधुं नयसि । प्रबलस्य ते विजयकरिणाम् आलानत्वं गतैः वरदारोधोवृक्षैः सह रिपुः अवनतः ॥ १ ]

(त) प्रथमः उक्तानां वैतालिकानां मध्ये प्रथमो वैतालिक इत्यर्थः । दिष्ट्या सौभाग्येन देवः महाराजः दण्डेनैव सामादीनाम् उपायानाम् अन्तिमेन उपायेनैव दण्ड-धारणेनैव इत्यर्थः । नतु दुर्बलजनोचितेन सामादिप्रयोगेण इत्येवशब्दव्यवच्छेद्यम् अरीणां चतुर्थोपायसाध्यानां शत्रूणां शिरःसु मस्तकेषु वर्त्तते, "चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया" इत्यादिनीतिस्मरणात् । एतेन प्रभावातिशयो व्यज्यते ।

१ । अथ वैतालिकानां राजगुणवर्णनमाह—परभृतेत्यादिना । हे वरद ! अभीष्ट-फलदायिन्, अङ्गवान् प्रशस्ताङ्गयुक्तः हस्त्यश्वादिनिखिलनीत्यङ्गसमन्वितश्च, आत्ता अव-लम्बिता सखीरूपेण गृहीता रतिः, तदाख्या पत्नी येन तथाभूतः, आत्ता प्राप्ता रतिः शत्रुनिबर्हणादिजनितः सन्तोषः येन तथाभूत इति च, अनङ्गः काम इव त्वं महाराजः परभृतानां कोकिलानां परपोषितानाञ्च वैतालिकानां कलाः अस्फुटमधुरा व्याहाराः शब्दाः मङ्गलवादाश्च येषु तथाभूतेषु विदिशातीरोद्यानेषु विदिशाख्यनदीतटवर्त्तिषु उपवनेषु मधुं कामसहायं वसन्तं सौन्दर्य्यञ्च नयसि सम्पादयसि, तथाहि यथा कामः स्वीयपत्न्या रत्या सह समेतो विदिशातीरस्थक्रीडावने परभृतालापसुभगं वसन्तं मेलयति तथैव त्वमपि विदिशातीरोद्यानेषु अस्मान् परिपाल्य मङ्गलवादादिभिः स्वीयसौन्दर्य्य-सम्पर्केण च भूयो माधुर्य्यं वर्द्धयसि, निरन्तरञ्च नीत्यङ्गप्रयोगेण शत्रुपराजयं विधाय तृप्तिमधिगच्छसि इति स्फुटार्थः, अपिच प्रबलस्य महाशक्तिशालिनः ते तव विजयकरिणां

প্রথম । অহো ! দণ্ডবলেই মহারাজ শত্রুপ্রভাব খর্ব্ব করিয়াছেন । (ত)

द्वितीयः । विरचितपदं वीरप्रीत्या सुरोपम सूरिभि
चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥२॥

[ अन्वयः । हे सुरोपम ! दण्डानीकैः विदर्भपतेः श्रियं हृतवतः तव परिघगुरुभिः दोर्भिः प्रसह्य रुक्मिणीं ( हृतवतः ) विष्णोश्च उभयोः चरितं वीरप्रीत्या सूरिभिः विरचितपदं ( सत् ) क्रथकैशिकान् मध्ये कृत्य स्थितम् ॥ २ ]

---

शत्रुजयकारिणां दन्तिनाम् आलानत्वं बन्धनस्तम्भतां गतैः प्राप्तैः वरदायाः तदाख्यायाः नद्याः रोधसि तीरे ये वृक्षाः तैः सह रिपुः शत्रुः अवनतः नम्रतां वश्यताञ्च प्राप्तः, विजयकरिणां बन्धनेन तत्संमर्दसहनाक्षमतया वृक्षाणाम् अवनतिः, शत्रूणाञ्च पराजयेन वशीभाव इति अनेन महदेव ते ओजो बुद्धिविषयतां व्रजतीति भावः । अत्र परभृतेत्यादिपदेषु श्लेषेण अर्थद्वयप्रत्ययात् अनङ्ग इवेत्युपमायाश्च तदुपजीव्यत्वात् श्लेषानुप्राणिता पूर्णोपमालङ्कारः । उपमानोपमेययोः क्रियागतपुरुषव्यत्ययेन अर्थप्रतिपत्त्या भग्नप्रक्रमत्वदोषः । वरदवरदेति अनङ्ग इवाङ्गवान् इति च व्यञ्जनानां बहूनां सकृत्साम्यात् छेकानुप्रासः । रिपूणां वश्यतां प्रति वरदातीरोवृक्षाणां नमनादेः हेतुत्वात् कार्यकारणयोर्यौगपद्यनिर्द्देशकसहशब्दप्रयोगेण सहोक्तिः । वृत्तं हरिणी नाम ।

२ । अथापरेण प्रयुक्तं मङ्गलवादमाह—विरचितेत्यादिना । हे सुरोपम देवसदृश ! दण्डानीकैः दण्डोपायप्रधानसहायैः सैन्यैः विदर्भपतेः विदर्भाधीश्वरस्य यज्ञसेनस्य श्रियं राजलक्ष्मीं हृतवतः प्रसह्य आश्रितवतः तव, परिघगुरुभिः लौहदण्डतुल्यगौरव-

---

হে অভীষ্টপ্রদ ! মূর্ত্তিমান্ কন্দর্পের ন্যায় আপনি হৃষ্টান্তঃকরণে কোকিলকূজনমুখরিত বিদিশাতীরস্থিত উদ্যানে বসন্তশোভা আনয়ন করিতেছেন। আপনি পরাক্রান্ত, আপনার বিজয়ী কুঞ্জরগণের বন্ধনস্তম্ভত্ব প্রাপ্ত বরদানদীতটস্থ বৃক্ষসমূহের ন্যায় আপনার শত্রু সমূহও অবনত হইয়াছে। (১)

प्रती। एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि। अहं वि दाव इमस्स मुहादो ओसरिअ एदं मुहालिन्दतोरणं समस्सिदा होमि (इत्येकान्ते स्थिता।) [एष जयशब्दसूचितप्रस्थानो भर्त्ता

बाहुभिः कठोरप्रतीघातसहनचमैरित्यर्थः। दोर्भिः भुजैः, एतेन अन्यैरपरिभवनीयतायां हेतुः दर्शितः, प्रसह्य शक्तिप्रयोगेण रुक्मिणीं तदाख्यां भीष्मकराजदुहितरं हृतवतः शिशुपालादीन् विद्राव्य आत्मभार्य्यात्वेन अपहृतवतः विष्णोः नारायणस्य च एतदुभयोः चरितं वीरवृत्तं वीरप्रीत्या वीरजनानुरागेण सूरिभिः पण्डितैः कविजनैरित्यर्थः। विरचितानि निबद्धानि सङ्गीतादिरूपेण इत्यर्थः। पदानि कीर्त्तिविकाशकानि वचनानि यस्य तथाभूतं सत् क्रथकैशिकान् विदर्भदेशान् मध्येकृत्य वेष्टयित्वा विदर्भान् सर्व्वत्र प्रचरितं सदित्यर्थः, मध्येकृत्य इत्यत्र सप्तम्यन्तप्रतिरूपकेण समासात् ल्यप्प्रत्ययः। स्थितं वर्त्तमानं तथाहि शिशुपालादिकानां महावीराणां विजयेन यथा कृष्णस्य निर्म्मला दिग्व्यापिनी कीर्त्तिः तथैव तवापि रिपुपराजयेन जाता इति भावः। अत्र विष्णोरप्रस्तुतस्य अग्निमित्रस्य च प्रस्तुतस्य हरणरूपैकक्रियासम्बन्धेन दीपकम्। सुरोपम इत्यत्र परिघ-गुरुभिरित्यत्र च उपमा। सुरोपमसूरिभिरिति सकाररकारयोः सकृदावृत्त्या च्छेकानु-प्रासः। चकारस्य अस्थाने स्थितत्वात् अक्रमता च "समय एव करोति" इत्यादिवत्। स च "परिघगुरुभिर्दोर्भिः शक्त्या हरेरपि रुक्मिणी"मितिदिशा समाधेयः। क्रथवंशीयानां कैशिकवंशीयानाञ्च अवस्थानपदत्वेन विदर्भदेशो हि क्रथकैशिकेति प्रसिद्धः। बहुलञ्च बहुलवदस्मादेरित्यादिवचनात्। अनेन श्लोकेन राज्ञो नारायणसदृशः प्रभावो व्यक्तः। वृत्तं हरिणी नाम।

দ্বিতীয়। বিষ্ণু পরিঘসদৃশ ভীমবাহুদ্বারা বলপূর্ব্বক রুক্মিণীকে হরণ করিয়াছিলেন; আর অপনি দণ্ডনীতি বলে সৈন্যদ্বারা বিদর্ভনাথের রাজলক্ষ্মী হরণ করিয়াছেন। হে দেবোপম! বীরের প্রতি অনুরাগ-হেতু পণ্ডিতজনকর্ত্তৃক আহৃত কীর্ত্তির ন্যায় আপনাদের উভয়ের এই চরিত ক্রথকৈশিক-জনপদে পরিব্যাপ্ত হইয়াছে॥২॥

इत एवागच्छति। अहमपि तावत् अस्य मुखादपसृत्य एतन्मुखालिन्दतोरणं समाश्रिता भवामि। ] (थ)

[ प्रविश्य सवयस्यो राजा ]

कान्तां विचिन्त्य सुलभेतरसम्प्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते च हृदयं सुखमश्नुते च ॥२॥

[ अन्वयः। कान्तां सुलभेतरसम्प्रयोगां विचिन्त्य बलैः विदर्भपतिम् आनमितं श्रुत्वा च धाराभिः आतपे अभिहतं सरोजमिव ( मम ) हृदयं दुःखायते सुखम् अश्नुते च ॥ २ ]

---

(थ) एषः जयशब्देन जयवादेन सूचितं विज्ञापितं प्रस्थानं धर्म्मासनात् उत्थानं यस्य तथाभूतः, भर्त्ता राजा, इतः अस्यामेव दिशि आगच्छति। मुखात् सम्मुखभागात्, अपसृत्य अन्यत्र भूत्वा मुखालिन्दतोरणम् अग्रस्थितबहिर्द्वारप्रकोष्ठतोरणं समाश्रिता भवामि, एकान्ते एकपार्श्वे।

२। अथ राज्ञ आत्मनः अवस्थानिर्व्वर्णनमाह—कान्तामित्यादिना। कान्तां मम प्रियां मालविकां सुलभेतरः नानाप्रतिबन्धैः सुदुर्लभः सम्प्रयोगः सम्मेलनं यस्याः तथाभूतां विचिन्त्य, विभाव्य कान्तायाः कथमपि समागमो मया न लब्धव्य इत्येवं विविच्य इत्यर्थः। बलैः मम सेनाभिः विदर्भपतिं विदर्भाधीश्वरं यज्ञसेनम् आनमितं वशीकृतं श्रुत्वा आकर्ण्य च, प्रथमोक्तं दुःखकारणं द्वितीयञ्च हर्षकारणमिति। आतपे

---

প্রতী। এই জয়শব্দে সূচিত হইতেছে যে, মহারাজ এই দিকেই আসিতেছেন। আমিও ততক্ষণ ইহার সম্মুখ ছাড়িয়া এই নিকটস্থ অলিন্দতোরণে আশ্রয় লই। ( এই বলিয়া প্রান্তে অবস্থান। ) (থ)

( রাজা বয়স্যের সহিত প্রবেশ করিয়া )

विदू। इह पेक्खामि, एक्कन्तसुहिदो भवं भविस्सदित्ति।
[ इह प्रेक्षे एकान्तसुखितो भवान् भविष्यतीति। ] (द)

राजा। कथमिव ? (ध)

विदू। अज्ज किल देवीए धारिणीए पण्डिदकोसिइ भणिदा—भअवदि ! तुमं यदि सच्चं पसाहणगव्वं वहेसि, दंसेहि दाव

सूर्य्यकिरणे स्थितामिति शेषः। धाराभिः वृष्टिभिः अभिहतम् अभिहृष्टं सरोजं कमलमिव हृदयम् अन्तःकरणं दुःखायते दुःखं करोति सुखम् आनन्दम् अश्नुते च, सूर्य्यकिरणाः सरोजानां हर्षाय वर्षाभिघातश्च दुःखाय इत्यत्र आतपसंसर्गे तेषां प्रफुल्लता वृष्टिसम्पाते च विच्छिन्नतया शोभाराहित्यमेव मानम्। तथाहि एकतो हर्षकारणम् अन्यत्र च दुःखकारणमिति विरुद्धकारणद्वयजन्यविरुद्धकार्य्यद्वयस्य एकत्र समावेशात् अन्यथाभावं गतोऽस्मि इति भावः। अत्र सुखदुःखयोर्व्विरुद्धयोरेकत्र संघटनया विषमालङ्कारः। सरोजेन हृदयस्य इवशब्देन साम्यप्रत्ययात् उपमा। श्रुत्वेत्यनन्तरं व्यवहार्य्यस्य चकारस्य अन्यत्र पाठात् अक्रमता। दुःखायते इति आयिना उपक्रम्य सुखमश्नुते इति भङ्गात् भग्नप्रक्रमता। आतपे स्थितमित्यध्याहारात् न्यूनपदत्वमपि। वसन्ततिलकं वृत्तम्।

(द) इह प्रेक्षे जानामि, एकान्तम् अतिमात्रं सुखम् आनन्दः सञ्जातमस्य इति तारकादित्वात् इतच्, भवान् भविष्यति तथाहि इह तव मालविकासमागमस्य कोऽपि उपायो भविष्यतीत्येवं मे धारणा जायते इति भावः।

(ध) कथं केन प्रकारेण एवं जानासि इति शेषः।

---

राजा। दुर्लभसमागमা প্রিয়ার কথা চিন্তা করিয়া এবং বিদর্ভরাজ সৈন্যগণ কর্ত্তৃক বশীকৃত ইহা শুনিয়া আমার হৃদয় বৃষ্টিধারাহত রৌদ্রস্থিত পদ্মের ন্যায় দুঃখও অনুভব করিতেছে, সুখও অনুভব করিতেছে। (দ)

বিদূ। এদিকে আমি দেখিতেছি,—আপনি মহাসুখী হইবেন। (ধ)

রাজা। কিরূপে ?

मालविआए सरीरे विवाहणेवत्थं त्ति। तदो सविसेसकोदुहलं अलंकिदा मालविआ तत्तभोदीए। कदावि पूरए भवदो मणोरहं। [ अद्य किल देव्या धारिण्या पण्डितकौशिकी भणिता—भगवति! त्वं यदि सत्यं प्रसाधनगर्वं वहसि, दर्शय तावत् मालविकायाः शरीरे विवाहनेपथ्यमिति। ततः सविशेषकौतूहलम् अलङ्कृता मालविका तत्रभवत्या। कदापि पूरयेत् भवतो मनोरथम्। ] (न) ·

राजा। सखे! मदपेक्षामनुसृत्य अनया धारिण्या पूर्वचरितैः सम्भाव्यत एवैतत्। (प)

---

(न) भणिता कथिता वक्ष्यमाणं वस्तु इति शेषः। सत्यं यथार्थं प्रसाधनगर्व्वम् अलङ्कारनियोगकर्म्मणि अभिमानम्, अलङ्कारैः परान् सज्जयितुं चातुर्य्यवहनाहङ्कारमित्यर्थः। वहसि धारयसि, विवाहनेपथ्यं परिणययोग्यालङ्कारसन्निवेशं दर्शय, विवाहयोग्यालङ्कारसन्निवेशनेन मालविकां सुनिपुणभावेन सज्जय इति भावः। ततः तदादेशानन्तरं सविशेषकौतूहलं विशेषेण कौतुकेन सह तत्रभवत्या पण्डितकौशिक्या। अलङ्कृता नानालङ्कारैः सुसज्जिता। कदापि भवतः राज्ञः मनोरथम् अभिलाषं मालविकाविषयकमित्यर्थः पूरयेत् पूर्णं कुर्य्यात्। तत्र पूर्व्वोक्तविषया एव अनुमापका इति भावः।

(प) मदपेक्षाम ममानुरोधम् अनुसृत्य अनुगत्य मदीयसन्तोषविधानकाम्यया इत्यर्थः। अनया अतिप्रशस्तचित्तया एतया इत्यर्थः। पूर्व्वचरितैः पूर्व्वानुभूतैः प्रशस्तोदारस्वभावैः एतत् ममैव उद्देशेन मालविकाया विवाहनेपथ्येन प्रसाधनं, सम्भाव्यते

---

বিদূ। ধারিণী দেবী আজ বিদুষী কৌশিকীকে বলিয়াছেন—ভগবতি! প্রসাধনকর্ম্মে নিপুণা বলিয়া সত্যই যদি আপনার গর্ব্ব থাকে, তবে মালবিকার শরীর বিবাহবেশে সজ্জিত করিয়া দেখান। তারপর তিনি বিশেষ কৌতূহলের সহিত মালবিকাকে অলঙ্কৃতা করিলেন। সুতরাং কোন সময়ে দেবী আপনার অভিলাষ পূরণ করিতে পারেন। (ন)

प्रती। (उपगम्य)। जेदु जेदु देवो। देवी विस्सवेदि—तवणी-आसोअस्स कुसुमोग्गमसिरिं अज्जउत्तेण सह पच्चक्खीकादुं इच्छामि त्ति। [ जयतु जयतु देवः। देवी विज्ञापयति—तपनीयाशोकस्य कुसुमोद्गमश्रियमार्य्यपुत्रेण सह प्रत्यक्षीकर्त्तुमिच्छामीति। (फ)

राजा। ननु तत्रैव देवी ?। (ब)

प्रती। अध इं। जहरिहसंमाणसुहिअं अन्तेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण समं देवं पड़िवालेदि। [ अथकिम्। यथार्हसम्मानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेण आत्मनः परिजनेन समं देवं प्रतिपालयति। ] (भ)

---

सुसम्भवं भवति। तथाहि सर्व्वदेव धारिणी मत्सन्तोषाय प्रवृत्ता आसीत् इदानीमपि मालविकासम्पर्कं मम अतिप्रियं विज्ञाय नूनं मयैव सह मालविकां योजयितुमयमुपक्रमः सुसम्भव इति भावः।

(फ) विज्ञापयति वक्ष्यमाणमिति शेषः। तपनीयाशोकस्य अचिरप्रवृत्तकुसुमस्य स्वर्णाशोकस्य कुसुमोद्गमश्रियं पुष्पविकाशजन्यां शोभाम्, प्रत्यक्षीकर्त्तुं द्रष्टुम् इच्छामि अहमिति शेषः।

(ब) ननु प्रश्ने, देवी धारिणी, तत्रैव तपनीयाशोकाधिष्ठिते प्रमोदोद्याने एव वर्त्तते ? प्रश्नोऽयं देव्या सह कुत्राहं मिलितो भवामि इत्यभिप्रायेण।

---

রাজা। আমার প্রতি এই ধারিণীর পূর্ব্বের ব্যবহারে ইহাই মনে হয় বটে। (প)

প্রতী। (নিকটে যাইয়া) মহারাজের জয় হউক। দেবী জানাইতেছেন যে, আমি আর্য্যপুত্রের সহিত রক্তাশোকের পুষ্পোদ্গমশোভা দেখিতে ইচ্ছা করি। (ফ)

রাজা। দেবী কি সেইখানে ? (ব)

राजा। ( सहर्षं विदूषकं विलोक्य )। **जयसेने ! गच्छाग्रतः। (म)**

प्रती। **एदु एदु देवो।** ( इति परिक्रामति ) [ एतु एतु देवः ] (य)

विदू। ( विलोक्य ) **भो वअस्स ! किंचि परिवुत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि।** [ भो वयस्य ! किञ्चित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते। ] (र)

राजा। **यथाह भवान्। (ल)**

---

(भ) अथ किं, देवी तत्रैव वर्त्तत इत्यर्थः। यथार्हेण यथायथेन सम्मानेन उपचारेण सुखितं प्राप्तसुखं महिषीजनोचितोपकरणसम्भारेण सानन्दमित्यर्थः। अन्तःपुरं विसृज्य गृहान्तभूमिं परिहृत्य, मालविकापुरोगेण मालविकाधिष्ठितेन परिजनेन देवं महाराजं प्रतिपालयति अपेक्षते। अन्तःपुरत्यागात् धारिण्याः कोऽपि गूढाभिप्रायो व्यज्यते, स चाभिप्रायो मालविकया सह राज्ञः संयोजनविषयकः।

(र) किञ्चित्परिवृत्तं प्रत्यावृत्तं यौवनं प्रौढावस्था यस्य तथाभूतः, तथाहि प्रमदवनस्य अद्य यादृशी श्रीरुपगता तथा मन्ये यथा वसन्तस्य यौवनं पुनराविर्भूतमिति भावः। यौवनावस्थायां सौन्दर्य्यातिशये "यौवने कुक्कुरी धन्या" इत्यादि प्रवादोऽप्यत्र स्मर्त्तव्यः।

---

প্রতী। তাহাই বটে ? যথাযোগ্য সম্মান প্রভৃতি দ্বারা সুখজনক অন্তঃপুর পরিত্যাগ করিয়া মালবিকাপ্রমুখ পরিজনের সহিত দেবী মহারাজের জন্য প্রতীক্ষা করিতেছেন। (ভ)

রাজা। ( সহর্ষে বিদূষককে অবলোকন করিয়া ) জয়সেনে ! অগ্রে গমন কর। (ম)

প্রতী। আসুন মহারাজ। ( পরিক্রমণ )। (য)

বিদূ। ( অবলোকন করিয়া ) বয়স্য ! প্রমদবনে বসন্ত ঋতুর যৌবন যেন একটু অন্যরূপ প্রাপ্ত হইয়াছে বলিয়া মনে হয়। (র)

अग्रे विकीर्णकुरुवकफलजालकभिद्यमानसहकारम्।
परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥४॥

[ अन्वयः। ऋतोः अग्रे विकीर्णकुरुवकफलजालकभिद्यमानसहकारं परिणामाभिमुखं यौवनं चेतः उत्सुकयति ॥ ४ ]

विदू। भो! अग्रं सो दित्तणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ। आलोएदु भवं। [भो! अयं स दत्तनैपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः। आलोकयतु भवान्। (व)

---

(ल) भवान् यथा आह, वस्तुत एव वसन्तस्य यौवनं पुनराविर्भूतमिव, प्रमदवनं सत्यमेव सातिशयशोभासम्पन्नं जातमिति भावः।

४। विदूषकस्य उक्तियाथार्थ्यमेव प्रमाणयति—अग्र इत्यादिना। ऋतोः ऋतुराजस्य वसन्तस्य अग्रे सम्मुखे अग्रावच्छेदेन वा विकीर्णानि विस्तृतिं गतानि यानि कुरुवकफलानां जालकानि समूहाः तैः भिद्यमानाः प्राप्तशोभाः सहकाराः आम्रवृक्षाः यस्मिन् तथाभूतम्, अथवा विकीर्णानि कुरुवकानां फलानि जालकानि कोरकाः भिद्यमानाः प्राप्तप्रकाशाः मञ्जर्य्यादिविकाशादिति भावः, सहकाराश्च यत्र तथाभूतं, परिणामाभिमुखं परिणतिप्रवणं यौवनं समृद्धावस्था चेतः हृदयम् उत्सुकयति सकौतुकं करोति। तथाहि वसन्तविकसितानां कुरुवकादीनां शोभासम्भारमालोक्य चेतसि किमपि नवं कौतुकं पदं करोति इति भावः। सामान्याभिधायकस्यापि शब्दस्य प्रकरणादिनियमेन विशेषभावोपस्थापकत्वमिति न ऋतुशब्देन वसन्तनिर्द्देशे विशेषे अविशेषकथनदोषः। जीवानामपि यौवनं परिणामाभिमुखं प्रौढ़ाद्यवस्थान्तराभिमुखं भवति। औत्सुक्यमत्र उत्कण्ठापि वसन्तस्य कामोद्दीपकतया राज्ञो विरहिण उत्कण्ठाजननसम्भवात्। जातिराख्या नाम।

(व) कुसुमस्तवकैः पुष्पगुच्छैः दत्तम् अर्पितं नेपथ्यम् अलङ्करणं यत्र तथाभूतः,

---

রাজা। তুমি ঠিক বলিয়াছ। (ল)

সম্মুখস্থিত কুরুবক ফলসমূহ আম্রফল ভেদ করিয়াছে, এইরূপে বসন্ত ঋতুর আগমনোন্মুখ যৌবন চিত্তকে উৎকণ্ঠিত করিতেছে ॥৪॥

राजा। स्थाने खलु प्रसवमन्थरोऽयमभूत्, यदिदानीमनन्य-साधारणीं शोभामुद्वहति। पश्य (श)

सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम्।
निर्वृत्तदोहदेऽस्मिन् संक्रान्तानीव कुसुमानि ॥५॥

[ अन्वयः। प्रथमं सूचितवसन्तविभवानां सर्वाशोकतरूणां कुसुमानि निर्वृत्त-दोहदे अस्मिन् संक्रान्तानि इव ॥ ५ ]

---

कुसुमगुच्छरूपभूषणभूषित: इत्यर्थ:। वर्त्तते इति शेष:। आलोकयतु इमामिति शेष:।

(श) प्रसवै: पुष्पै: मन्थर: भारवत्तया आत्मधारणाक्षम इत्यर्थ:। अयं तपनीयाशोक:, स्थाने युक्तं खलु युक्तमेव, यत् यत: इदानीं प्रसवोद्गमेन मन्थरतासमुपस्थितौ अनन्यसाधारणीम् अन्यविलक्षणां सर्व्वोत्तमाम् इत्यर्थ:। शोभां कान्तिम् उद्वहति धारयति तथाहि प्रसवमन्थरताप्यस्य अधिकशोभासम्पादकतया अस्माकमतिप्रीतिं जनयति इति भाव:।

५। अथ दृष्टव्यमर्थं तपनीयाशोकस्य कुसुमसमृद्धिवर्णनेन उपक्षिपति—सर्व्वेत्यादिना। अस्मिन् दृश्यमाने तपनीयाशोके निर्वृत्त: सुसम्पन्न: दोहद: वराङ्गनाया मालविकाया: चरणाघातरूपपुष्पोद्गमसाधकं वस्तु यस्य तथाभूते सति प्रथमम् एतस्मात् आदौ सूचिता: प्रदर्शिता: वसन्तस्य ऋतुराजस्य विभवा: पुष्पसमृद्धय: यै: तथाभूतानां समुदितप्रसूनानां सर्व्वाशोकतरूणां सकलाशोकवृक्षाणां कुसुमानि पुष्पाणि संक्रान्तानि प्राप्तसञ्चाराणीव, तथाहि मन्ये यत् सर्व्वेषामशोकतरूणां सञ्जातानि पुष्पाणि एकत्र अस्मिन्नेव मिलितानीति, प्रचुरतरपुष्पसमृद्धिरस्य जातेति भाव:। अत्र सर्वाशोकतरु-कुसुमानाम् एकत्र अस्मिन्नेव संक्रमसम्भावनाया इवशब्देन प्रतिपादनात् भावाभिमानिनी क्रियोत्प्रेक्षा वाच्या। आर्य्या जाति:।

---

বিদূ। এই সেই রক্তাশোক পুষ্পগুচ্ছ দ্বারা যেন সজ্জীকৃত হইয়াছে। অবলোকন করুন! (ব)

রাজা। অশোকতরু যে মুকুলিত হইতে বিলম্ব হইয়াছে তাহা যুক্তিযুক্ত যে হেতু অধুনা এই অশোক অপূর্ব্ব শোভা ধারণ করিয়াছে দেখ। (শ)

विदू। तह। भो! वीसद्धो होहि। अह्मेसु सण्णिहिदेसु वि धारिणी पासपरिवट्टिणीं मालविअं अणुमण्णेदि। [ तथा। भोः! विस्रब्धो भव। अस्मासु सन्निहितेष्वपि धारिणी पार्श्वपरिवर्त्तिनीं मालविका-मनुमन्यते।] (र *)

राजा। (सहर्षम्) पश्य पश्य सखे!

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥६॥

[ अन्वयः। विस्तृतहस्तकमलया प्रियया विनयात् अनूत्थिता इयं देवी नरेन्द्रलक्ष्म्या (अनूत्थिता) वसुमती इव माम् अभ्युत्तिष्ठति ॥ ६ ]

---

(र) तथा त्वं यथा सम्भावयसि अहमपि तथैव सम्भावयामि इति भावः। विस्रब्धः विश्वस्तचित्तः मालविकाया लाभविषये निश्चिन्तचित्तः भव। कथमित्याकाङ्क्षाया-माह—अस्मास्वित्यादि। अस्मासु त्वयि मयि च, वाक्यदीर्घ यत्र इति द्विलेऽपि बहुलम्। सन्निहितेषु समीपगतेषु अपि मालविकां पार्श्ववर्त्तिनीं पार्श्वस्थायिनीम् अनुमन्यते अनु-मोदते, तथाहि आदौ मालविका यथा यथा अस्माकं नयनपथाद्बहिरेव स्यात् तथा यत्नवती सावधाना आसीत् इदानीम् अस्मान् दृष्ट्वापि यत् मालविकायाः अपसारणमकृत्वा पार्श्वावस्थानमनुमोदते तदेव मदृदागास्थानमिति भावः।

---

যে সকল অশোক-বৃক্ষে প্রথমে বসন্তশোভার বিকাশ হইয়াছিল, তাহাদিগের কুসুমগুলি দোহদসংকার অনুষ্ঠিত হওয়ার পর যেন এই অশোকেই সংক্রান্ত হইয়াছে ॥৫॥

বিদূ। তাহাই বটে। দেখুন, আপনি নিশ্চিন্ত হউন। আমরা নিকটে থাকিলেও ধারিণী তাঁহার পার্শ্বেই মালবিকার অবস্থান অনু-মোদন করিতেছেন। (র)

রাজা। (সহর্ষে) সখে! দেখ, দেখ।

---

* वर्णमालायाः पौर्व्वापर्य्यव्यतिक्रमः सोढ़व्यः।

[ ততঃ প্রবিশতি ধারিণী মালবিকা পরিব্রাজিকা বিভবতশ্চ পরিবারঃ। ] (ল)

মাল। ( আত্মগতম্ ) জাণামি ণিমিত্তং মহ কোদুআলংকারস্স, তহ বি মে হিঅঅং বিসিণীপত্তগদং বিঅ সলিলং বেবদি। দক্খিণেদরং ণঅণং অ বহুসো ফুরদি। [ জানামি নিমিত্তং মম কৌতুকা-

৬। অথ দ্রষ্টব্যমর্থমাহ—মামিত্যাদিনা। বিততে প্রসারিতে হস্তকমলে করপঙ্কজে যয়া তথাভূতয়া মম সম্মানায় প্রসারিতকরযুগলয়া ইত্যর্থঃ। প্রিয়য়া প্রীতিভাজনতাং গতয়া মালবিকয়া বিনয়াৎ সবিনয়ভাবাৎ অনূত্থিতা পশ্চাৎ সমুত্থিতা, অনুপূর্ব্বস্য স্থাধাতোরর্থবিশেষবাচকতয়া সকর্ম্মকত্বমনুসন্ধেয়ম্। ইয়ং দৃশ্যমানা দেবী ধারিণী নরেন্দ্রলক্ষ্ম্যা রাজলক্ষ্ম্যা বসুমতী ধরণী ইব, বসুমতীপদেন ধরণ্যা রত্নাশ্রয়তা-প্রতীতেঃ প্রকর্ষাতিশয়ো দ্যোত্যতে। মাম্ অভ্যুত্তিষ্ঠতি প্রত্যুদ্গচ্ছতি। তথাহি মৎসম্মাননার্থং ধারিণীম্ উত্থিতাং বীক্ষ্য মালবিকাপি সম্মানপ্রদর্শনায় করযুগলম্ অঞ্জলীকৃত্য সমুত্তিষ্ঠতি ইতি ভাবঃ। হস্তে কমলসাদৃশ্যস্য সমাসগতত্বেন উপমা রূপকং বা সমাসবৈচিত্র্যাদিতি সন্দেহে কস্যাপি সাধকস্য বাধকস্য বা অসত্ত্বেন তয়োঃ সন্দেহ-সঙ্করঃ। অন্তিমে পাদে উপমা স্পষ্টা। বসুমত্যা সহ দেব্যা ধারিণ্যাঃ সাদৃশ্যপ্রত্যয়াৎ নানাগুণাশ্রয়তা তস্যা ব্যজ্যতে ইত্যলঙ্কারেণ বস্তুধ্বনিঃ। নরেন্দ্রলক্ষ্মীসাদৃশ্যস্য মালবিকায়াং প্রতীতেঃ অনূঢায়াস্তস্যাঃ সাধারণ্যমপি ধ্বন্যতে। আর্য্যা জাতিঃ।

(ল) বিভবতঃ ঐশ্বর্য্যানুরূপেণ, পরিবারঃ পরিজনঃ, দেব্যা ধারিণ্যা যথা যথা পরিজনা যুজ্যন্তে তে তে পরিজনা ইত্যর্থঃ। তে চ ধারিণী-চামরধারিণীপ্রভৃতয়ঃ। বিভবত ইতি পঞ্চম্যাস্তসিল্।

প্রিয়তমা করকমল প্রসারণ করিয়াছেন, বিনয়-হেতু তাঁহার পশ্চাৎ সমুত্থিতা দেবী ধারিণী রাজশ্রীর অনুগামিনী বসুমতীর ন্যায় আমাকে অভ্যর্থনা করিতেছেন ॥৬॥

( অনন্তর ধারিণী, মালবিকা, পরিব্রাজিকা ও বিভবানুসারে পরিজন-বর্গের প্রবেশ )। (ল)

लङ्कारस्य, तथापि मे हृदयं बिसिनीपत्रगतमिव सलिलं वेपते। दक्षिणेतरत् नयनञ्च बहुशः स्फुरति।] (ब)

विदू। **भो वयस्स! विवाहणेवत्थेण सविसेसं क्खु सोहदि अत्तभोदि मालविआ।** [भो वयस्य! विवाहनेपथ्येन सविशेषं खलु शोभते अत्रभवती मालविका।] (श)

राजा। **पश्याम्येनाम्। येषा—**(ष)

---

(ब) कौतुकेन कौतूहलेन, अलङ्कारः अलङ्करणं विवाहोचितभूषणैः भूषणं तस्य निमित्तं कारणं जानामि, तथापि कारणस्य ज्ञातत्वेऽपि बिसिनीपत्रगतं पद्मपत्रस्थितं सलिलमिव वेपते कम्पते न स्थिरतामापद्यते इत्यर्थः। दक्षिणेतरत् वामं नयनञ्च चक्षुश्च स्फुरति नृत्यति, "भ्रूभागमध्ये प्रियसङ्गमः स्यात् नासाक्षिमध्ये च सहायलाभः। दृगन्तमध्यस्फुरणेऽर्थलाभः कण्ठे क्रमाद्दविस्फुरिते दृगादौ॥ पुंसां सदा दक्षिणदेहभागे स्त्रीणाञ्च वामावयवे प्रजातः।" इत्यादि वसन्तराजशाकुनधृतनियमात् वामनयनस्पन्दनस्य अर्थलाभसूचकत्वात् प्रियजनरूपविपुलार्थलाभं सम्भावयितुं पारये, किन्तु देव्या यदि कोऽपि प्रतिबन्धः क्रियेत इति शङ्का निरन्तरं मां व्याकुलयति, तस्याः प्राक्प्रवर्त्तितं वस्तु पर्य्यालोच्य इति भावः।

(श) विवाहनेपथ्येन विवाहोचितसज्जया, सविशेषं सातिशयं क्रियाविशेषणम्। अत्रभवती त्वत्प्रीतिनिधानतया माननीया मालविका शोभते प्रतिभाति।

(ष) एनां मालविकां पश्यामि अहमिति शेषः। या एषा अस्यांशस्य पद्यार्थे अन्वयः।

---

মাল। (স্বগত) কৌতুকপ্রযুক্ত আমার এই বিবাহোচিত ভূষণ-সমূহে সজ্জিত হওয়ার কারণ আমি জানি; তাহা হইলেও আমার হৃদয় পদ্মপত্রস্থিত জলের ন্যায় কম্পিত হইতেছে এবং বাম নয়ন বার বার স্পন্দিত হইতেছে। (ব)

বিদূ। বয়স্য! এই মালবিকা বিবাহযোগ্য সজ্জায় সাতিশয় শোভা ধারণ করিয়াছেন। (শ)

अनतिलम्बिदुकूलनिवासिनी
बहुभिराभरणैः प्रतिभाति मे।
उडु गणैरुदयोन्मुखचन्द्रिका
हतहिमैरिव चैत्रविभावरी ॥७॥

[ अन्वयः। अनतिलम्बिदुकूलनिवासिनी ( एषा ) बहुभिः आभरणैः ( विशिष्टा ) हतहिमैः उडु गणैः (विशिष्टा) उदयोन्मुखचन्द्रिका चैत्रविभावरी इव मे प्रतिभाति ॥७]

देवी। ( उपेत्य ) जेद जेदु अज्जउत्तो। [जयतु जयतु आर्य्यपुत्रः]। (स)

विदू। बड्ढदु भोद । [ वर्द्धतां भवती ] (ह)

---

७। अनतिलम्बि नातिलम्बितं स्वल्पलम्बितमित्यर्थः, यत् दुकूलं चौमांशुकं निवस्ते या तथाभूता पट्टवस्त्रं परिहितवती सती एषा इत्यनुषज्यते। बहुभिः प्रचुरैः आभरणैः अलङ्कारैः मणिमयभूषणैरित्यर्थः, उपलक्षिता। मे मम सम्बन्धे हतहिमैः हिमापगमात् मुदीप्तैरिति भावः, हिमापगमादेव नक्षत्राणामौज्ज्वल्यं भवतीति भूषणदीप्तिरपि व्यज्यते, उडु गणैः नक्षत्रगणैः उदयोन्मुखी उदयं गन्तुं प्रवर्त्तमाना चन्द्रिका ज्योत्स्ना यस्याः तथाभूता चैत्रविभावरी चैत्रमासीयनिशा इव प्रतिभाति शोभते, तथाहि सुतरामियमद्य वसन्तकालीनरजनीव, तस्या एव उद्दीपकत्वात् मालविकाया उद्दीपकत्वं व्यज्यते, मम चेतः समाहरति इति भावः। चैत्रविभावर्य्या एव उद्दीपकत्वं प्रसिद्धेः न अविशेषे विशेषाख्यदोषः। अत्र चैत्रविभावर्य्या सह मालविकाया उडु गणैः सह आभरणाना दुकूलेन चन्द्रिकायाः साम्यस्य इवशब्दवाच्यत्वात् उपमा स्पष्टा। द्रुतविलम्बितं वृत्तम्।

---

রাজা। ইহাকে যেন দেখিতেছি—(ষ)

ইনি অনতিদীর্ঘ বসনধারিণী ও বহু অলঙ্কারে ভূষিতা হইয়া হিমমুক্ত নক্ষত্রসমূহভূষিত উদয়োন্মুখ জ্যোৎস্নাবিশিষ্ট চৈত্রমাসের রাত্রির ন্যায় আমার নিকট শোভা পাইতেছেন ॥৭॥

দেবী। ( নিকটে যাইয়া ) আর্য্যপুত্রের জয় হউক। (স)

বিদূ। আপনার শ্রীবৃদ্ধি হউক। (হ)

परि। विजयतां देवः। (च)

राजा। भगवति! अभिवादये। (क)

परि। अभिप्रेतसिद्धिरस्तु। (ख)

देवी। (सस्मितम्) अज्जउत्त! एस दे अम्हेहिं तरुणीजण-सहाअस्स असोओ संकेदगीहओ कप्पिदो। [आर्य्यपुत्र! एष ते अस्माभिस्तरुणीजनसहायस्य अशोकः सङ्केतगृहकः कल्पितः।] (ग)

विदू। भो! आराहिओ सि? [भोः! आराधितोऽसि?] (घ)

---

(च) विजयतां सर्वोत्कर्षेण वर्त्ततां, देवः महाराजः।

(क) भगवति, ऐश्वर्य्यसम्पन्ने! अनेन सम्बोधनेन अभिलषितपूरणयोग्यता अभिप्रेता, अभिवादये प्रणमामि। तथाहि त्वत्प्रसादात् मम अभिलाषः पूर्णो भवतु इत्यभिप्रायः।

(ख) अभिप्रेतस्य अभिलषितस्य विषयस्य प्रकृते मालविकया सह समागमरूपस्य वस्तुनः सिद्धिः लाभः अस्तु तवेति शेषः।

(ग) सस्मितं सहासं, स्मितञ्च आदौ अस्मासु यं विषयं प्रच्छाद्य अतैव सम्पादयितु-मभीप्सितवानसि तमेव विषयमद्य वयं सम्पादयितुं अथवा: गृहीततत्त्वाश्च इत्यहो अपाटवं ते प्रच्छादननीतेरिति कौतुकेन। तरुणीजनसहायस्य युवतिजनजुष्टस्य ते तव सङ्केतगृहकः सङ्केतस्थानम् एष दृश्यमानः अशोकः तपनीयाशोकवृक्षः तव विरहशोका-पनोदनक्षमश्च इति भावो व्यक्तः। इदानीं प्रकाश्यमेव अत्र विहर्त्तुं शक्यमिति भावः।

(घ) आराधितः कृतार्च्चनः असि, तथाहि एतावत्कालं मालविकया संयोग-

---

পরি। মহারাজের জয় হউক। (চ)

রাজা। ভগবতি! অভিবাদন করি। (ক)

পরি। আপনার অভীষ্টসিদ্ধি হউক। (খ)

দেবী। (ঈষৎ হাস্যের সহিত) আর্য্যপুত্র! আমরা এই অশোক-তরুকে যুবতিজনের সহিত তোমার সঙ্কেতস্থান স্থির করিয়াছি। (গ)

राजा। ( सव्रीडमशोकमभितः परिक्रामन् )। (ङ)

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

[ अन्वयः। अयम् अशोकः देव्या ईदृशानां सत्काराणां भाजनत्वं न नेयः (इति) न। यः माधवश्रीनियोगे सावज्ञः त्वत्प्रयत्ने पुष्पैः आदरं शंसति ॥ ८ ]

---

निष्कोसव महान् विरोध एव देव्या साधितः अद्य यत् तामेव उपादाय तव उपचरणमेषा करोति तदतिमात्रमाश्चर्य्यमिति भावः।

(ङ) सव्रीडं सलज्जं, लज्जा च गुप्तमेतावत्कालं पोषितस्य मालविकायामनुरागस्य देव्यादिभिर्ज्ञानात् यस्याः समीपात् तत्प्रच्छादनं तस्या एव देव्या एतदानुकूल्यविधानेन च। कौशिक्या माननीयायाः समीप एव विहारशंसनाद्वा। अशोकं तपनीयाशोकम् अभितः परितः तस्य चतुर्षु पार्श्वेषु, परिक्रामन् उदासीन इव परिभ्राम्यन्, लज्जोदये तथा व्यापारस्य एव स्वाभाविकत्वात्।

८। अथ अशोकस्य देव्याः सत्कारयोग्यतां ब्रवीति—नायमित्यादिना। निःसम्बोधनमुक्तं राज्ञः सरसतां ज्ञापयति, देव्या धारिण्या भवत्या अयं त्वया अतिसम्मानं प्रापितः दृश्यमानः अशोकः तपनीयाशोकः ईदृशानाम् अस्माकं सङ्केतगृहकतया। कल्पनरूपाणां सत्काराणां सम्मानानां भाजनत्वं पात्रतां न नेयः न प्रापयितव्यः, अपितु नेय एव, तथाहि अस्योपरि देव्या महानेव सम्मानो युज्यते इति भावः। कथमित्याकाङ्क्षायामाह—य इत्यादि। यः अयं अशोकः माधवश्रियाः वसन्तशोभायाः नियोगे आदेशे सावज्ञः सावहेलः, वसन्तश्रियाः पुष्पसम्पादननिर्देशमतिक्रान्त इत्यर्थः। तव प्रयत्ने त्वया उपक्रान्ते मालविकाचरणाघातरूपे दोहदव्यापारे पुष्पैः पुष्पोद्गमैः आदरम्

---

বিদূ। বয়স্য! সম্মানিত হইলেন। (ঘ)

রাজা। (লজ্জার সহিত অশোকের চতুর্দ্দিকে পরিক্রমণ করিয়া।) (ঙ)

विदू। **भो! वीसद्धो भविअ जोव्वणवदिं पेक्ख।** [भोः! विस्रब्धो भूत्वा यौवनवतीं प्रेक्षस्व।] (च)

देवी। **कां?** [काम्?] (छ)

विदू। **तवणीआसोअस्स कुसुमसोहं।** [तपनीयाशोकस्य कुसुमशोभाम्।] (ज)

---

अतिप्रीतिं शंसति सूचयति, तथाहि यस्मादयं साधारणवृक्षवैलक्षण्येन त्वत्प्रक्रान्तविषयमपेक्षमाण एव वसन्तोदयेऽपि पुष्पाणि न प्रादर्शयत् परं तद्विषयसमवधान एव पुष्पवान् जातः अतएव इतरवैलक्षण्येन तवापि अत्र महती प्रीतिर्युक्ता इति भावः। अत्र पूर्व्वार्द्धप्रतिपाद्यार्थं प्रति परार्द्धप्रतिपाद्यार्थस्य हेतुतया उपन्यासात् काव्यलिङ्गं वाक्यार्थहेतुकम्। अशोकवृक्षे माधवश्रीनियोगविषयकावज्ञासम्भावनाया गम्यत्वात् गम्योत्प्रेक्षा।

(च) विस्रब्धः निश्चिन्तचित्तः, निर्भीक इत्यर्थः। यौवनवतीं तारुण्यसम्पन्नाम् अतिसुन्दरीं मालविकामित्यर्थः। प्रेक्षस्व, आदौ मालविकाया दर्शनकाले प्रतिक्षणमेव देव्यादीनां दर्शनादितो भयं जागरूकं विस्रब्धदर्शनात्, भवन्तं व्यचालयत् अद्य अत्र विषये देव्याः स्वच्छन्दहृदयेन अनुमोदनलाभात् निःशङ्कं तन्निसहकारेण हृष्येयं हृष्यतामिति भावः। (छ)

अथ विदूषकेण यौवनवतीमिति विशेषणमात्रेण निर्द्देशात् स्पष्टं श्रवणकाम्यया देवी पृच्छति कामिति, कां किम्परिचयां यौवनवतीं विस्रब्धं देवः प्रेक्षतामिति शेषः। एतदुक्तिः सरसमधुरा अस्मिन् विषये देव्याः कौतुकं ज्ञापयति।

(ज) गौतमोऽपि स्वाभिप्रायमन्यथाकृत्य व्याचष्टे—तपनीयेति। तपनीयाशोकस्य

---

যে অশোক বৃক্ষ বসন্তলক্ষ্মীর আদেশ অবহেলা করিয়া পুষ্প দ্বারা তোমার প্রতি সম্মান প্রদর্শন করিয়াছে, সে অশোক দেবীর এইরূপ আদরের পাত্র হইবেই ত। ॥৮॥

বিদূ। বয়স্য! নিশ্চিন্ত হইয়া তরুণীকে অবলোকন করুন। (চ)

দেবী। কাহাকে? (ছ)

[ सर्व्वे उपविशन्ति ]

राजा। (मालविकां विलोक्यात्मगतम्) कष्टः खलु सन्निधिवियोगः। (झ)

अहं रथाङ्गनामेव प्रिया सहचरीव मे।
अननुज्ञातसम्पर्का धारिणी रजनीव नौ॥ ९॥

[ अन्वयः। अहं रथाङ्गनामा इव मे प्रिया सहचरी इव नौ अननुज्ञातसम्पर्का धारिणी रजनी इव वर्त्तते॥ ९ ]

---

कुसुमशोभां पुष्पश्रियम्। तथाहि यौवनवत्याः अशोकपुष्पश्रिया एव दर्शनं मया अनुष्ठ-मिति भावः। अत्रायं अभिप्रायः—देवी यदि राज्ञो मालविकायाम् अनुरागप्रकारं विज्ञातुमेव इमं वृत्तान्तं प्रयोजयिष्यत् नतु वस्तुतो राज्ञा सह मालविकाया योगमापा-दयितुं तदा मम प्रकाशवचनेनानेन तदुद्भिन्नं महदेव अनिष्टमुदपादयिष्यत्, पुनरपि देवी गृहीततत्त्वा मालविकाया यथा राज्ञा दर्शनमपि दुर्लभं स्यात् तथा एव विधास्यते इति मालविकाविशेषणताभिप्रायेण प्रयुक्तस्य यौवनवतीमिति पदस्य कुसुमशोभाविशेषण-तया सङ्गमनमिति।

(झ) सन्निधौ अदूरे यः वियोगः विरहः मिलनाभाव इत्यर्थः। सः कष्टः सुतरां कष्टदायकः, तथाहि मालविका मे न दूरे सम्प्रति वर्त्तते, तथापि यदि मां न स्वेच्छया उपभोक्तुमर्हामि इत्येतदतीव कष्टतरं मे सुदूरवियोगादिति भावः।

९। अथ समीपगता ते मालविका तथापि कथं तां न उपभोक्तुं गृह्णामि इत्या-काङ्क्षायामाह—अहमित्यादिना। अहं रथाङ्गनामा चक्रवाकयुवा इव मे मम प्रिया मालविका सहचरी चक्रवाकवधूरिव, न अनुज्ञातः अनुमोदितः वाचा आदिष्टः सम्पर्कः उभयोरावयोः समागमः यया तथाभूता धारिणी नौ आवयोः सम्बन्धे रजनी रात्रिरिव,

---

বিদূ। তপনীয়াশোকের পুষ্পশোভাকে। (ঞ)

( সকলের উপবেশন )

রাজা। ( মালবিকাকে দেখিয়া স্বগত ) নিকটে থাকিয়াও যে মিলনাভাব, তাহা বড়ই কষ্টদায়ক। (ঝ)

(प्रविश्य कञ्चुकी) विजयतां देवः। देव! अमात्यो विज्ञापयति—तस्मिन् काले विदर्भराजोपायने द्वे शिल्पिदारिके मार्गपरिश्रमादलघुशरीरे इति कृत्वा न प्रवेशिते। सम्प्रति देवोपस्थानयोग्ये संवृत्ते। तदाज्ञां देवो दातुमर्हतीति। (ञ)

---

तथाहि यथा रात्रौ चक्रवाकः चक्रवाकीमनु स्थित्वापि रात्रिरूपप्रतिबन्धकवस्तुसमवधानेन न प्रियामुपभोक्तुं क्षमते तथा अहमपि धारिण्याः आवयोः परस्परं समागममननुमोदमानायाः समवधानेन प्रियाया मालविकाया उपभोगं कर्त्तुं न पारयामि इति भावः। अत्र त्रयाणामिव सादृश्यानां स्फुटप्रत्यायनाय इवशब्दत्रयनिर्देशात् उपमात्रयी, परे तु पूर्णोपमामिकामेव ब्रुवते, सहचरीपदार्थस्य आपातत एव रथाङ्गनाम्ना सम्बन्धात् न सन्दिग्धत्वम्।

(ञ) विज्ञापयति वक्ष्यमाणमिति शेषः। विदर्भराजस्य विदर्भभूपतेः उपायने उपहाररूपेण प्रेषिते शिल्पिदारिके कलाविद्यायां निपुणे बालिके, मार्गपरिश्रमात् पथियान्त्या अलघुशरीरे असुस्थदेहे, इति कृत्वा अनेन हेतुना न प्रवेशिते राजसमीपमानीते तस्मिन् काले इत्यन्वयः, सम्प्रति कालातिक्रमे जाते देवस्य महाराजस्य उपस्थानम् आराधनं तद्योग्ये तदनुरूपे सुस्थदेहे इत्यर्थः। संवृत्ते जाते, तत् तस्मात् देवः महाराजः आज्ञां तत्प्रवेशविषयिणमादेशं दातुमर्हति, इदानीं राज्ञः आदेशश्चेत् ते आनीयेते इति भावः।

---

আমি চক্রবাক সদৃশ, প্রিয়া আমার সহচরীর ( চক্রবাকীর ) ন্যায়; আর আমাদের মিলনের অনুমোদনে প্রতিকূলা ধারিণী রজনীস্বরূপ হইয়াছেন ॥৯॥

( কঞ্চুকীর প্রবেশ )

কঞ্চু। মহারাজের জয় হউক। মহারাজ! অমাত্য নিবেদন করিতেছেন—যে, বিদর্ভরাজের উপঢৌকনরূপে প্রেরিতা কলাবিদ্যানিপুণা কন্যা দুইটীকে পথশ্রমে অসুস্থ শরীর বলিয়া সেই সময়ে [ রাজসমীপে ]

राजा। प्रवेशय ते। (ट)

कञ्चु। यदाज्ञापयति देवः। (इति निष्क्रम्य ताभ्यां सह प्रविश्य।) इत इतो भवत्यौ। (ठ)

प्रथ। (जनान्तिकम्) हला मदणिए! अपुव्वं इमं राजउलं पविसन्तीए पसीददि मे हिअअं। [हला मदनिके! अपूर्वमिदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम्।] (ड)

द्वितो। जोसिणिए! मह वि एव्वं। अत्थि क्खु लोअप्पवादो 'आआमि सुहं दुक्खं वा हिअअसमवत्था कधेदि' त्ति।

---

(ट) ते शिल्पिदारिके, प्रवेशय मत्समीपे उपस्थापय।

(ठ) ताभ्यां शिल्पिदारिकाभ्याम्। भवत्यौ तयोः स्त्रीत्वात् अपरिचितत्वाच्च भवच्छब्दप्रयोगः साधुभावरक्षणार्थः। कवेरयं प्रक्रमो यत् मालविकाया राजवंशसम्भवेन कौलीन्यं प्रकटय्य राज्ञः स्थाने एव प्रणयप्रकाशनाय इति परत एव व्यक्तीभवति।

(ड) मदनिकेति द्वितीयायाः शिल्पिदारिकायाः नाम। अपूर्व्वं पूर्वापरिचितं नूतनमित्यर्थः। राजकुलं राजभवनं प्रविशन्त्याः आश्रयन्त्याः मे मम हृदयं प्रसीदति प्रसादं गच्छति अपरिचितस्यापि राजभवनस्य दर्शनेन न भयादिलेशोऽपि मां स्पृशति परम् आनन्द एव जायते इति अपूर्व्वमेतत् इति भावः।

---

প্রবেশ করাই নাই। এখন তাহারা মহারাজ-সমীপে আসিতে সমর্থ, সুতরাং মহারাজ অনুমতি প্রদান করুন। (ঞ)

রাজা। তাহাদিগকে প্রবেশ করাও। (ট)

কঞ্চু। মহারাজের যেরূপ আজ্ঞা। (এই বলিয়া প্রস্থান ও তাহাদিগের সহিত প্রবেশ করিয়া) এই দিকে আসুন আপনারা। (ঠ)

প্রথমা। (জনান্তিকে) ওলো মদনিকে! এই নূতন স্থান রাজপুরীতে প্রবেশ করিতে করিতে আমার হৃদয় আনন্দিত হইতেছে। (ড)

[ज्योत्स्निके ! ममाप्येवम्। अस्ति खलु लोकप्रवादः 'आगामि सुखं दुःखं वा हृदयसमवस्था कथयती'ति । ] (ढ)

प्रथ। **सो सच्चो दाणिं होदु ।** [स सत्य इदानीं भवतु । ] (ण)

कञ्चु। **एष देव्या सह देवस्तिष्ठति । उपसर्पतां भवत्यौ । (त)**

[उभे उपसर्पतः ] (थ)

[मालविका परिव्राजिका च चेट्यौ दृष्ट्वा परस्परमवलोकयतः । ] (द)

---

(ढ) ज्योत्स्निका इति प्रथमाया नाम । ममापि न केवलं तव इत्यर्थः । एवं हृदयं प्रसीदति इत्यर्थः । लोकप्रवादः जनप्रवादः, आगामि भविष्यत् सुखम् आनन्दं दुःखं शोकं वा हृदयसमवस्था अन्तःकरणस्य भावः कथयति विनिवेदयति, तथाहि आनन्दव्यापारात् पूर्व्वं स्वत एव हृदयम् उत्फुल्लं भवति शोकलाभात् पूर्व्वञ्च स्वत एव चेतः कालिमाकुलं भवतीति श्रूयते तदनेनापि आवयोः चित्तप्रसादेन किमपि सुखमेव भावि सम्भाव्यते इति भावः ।

(ण) सः लोकप्रवादः त्वया उक्तरूपः इत्यर्थः । इदानीम् अस्मिन् काले सत्यः यथार्थः भवतु, तथाहि आवयोरपि अत्र किमपि शुभविधानं जायताम् इति भावः ।

(त) देव्या धारिण्या, देवः महाराजः, उपसर्पतां तयोः समीपं गच्छताम् ।

(थ) उभे मदनिका ज्योत्स्निका च इति द्वे एव । उपसर्पतः राजसमीपं गच्छतः ।

(द) चेट्यौ ज्योत्स्निकामदनिके शिल्पिदारिके दृष्ट्वा, परस्परम् अवलोकयतः पश्यतः आगमनकारणाज्ञानात् तन्निर्णयकाम्यया तथावलोकनम् । मालविकां परिव्राजिकां च इति क्वचित् पाठः ।

---

দ্বিতীয়া। জ্যোৎস্নিকে ! আমারও তাহাই। লোকপ্রবাদ আছে যে, হৃদয়ের অবস্থা ভাবী সুখ বা দুঃখের সূচনা করিয়া থাকে। (ঢ)

প্রথ। তাহাই এখন সত্য হউক। (ণ)

কঞ্চু। এই মহারাজ ও মহিষী রহিয়াছেন। আপনারা নিকটে গমন করুন। (ত)

উভে। (প্রণিপত্য) জেদু জেদু ভট্টা, জেদু জেদু ভট্টিণী। [জয়তু জয়তু ভর্ত্তা। জয়তু জয়তু ভট্টিনী।] (ধ)

রাজা। নিষীদতম্। (ন)

(উভে রাজাজ্ঞয়া উপবিষ্টে।)

রাজা। কস্যাং কলায়ামভিবিনীতে ভবত্যৌ? (প)

উভে। ভট্টা! সংগীদে অব্‌ভন্তর হ্ম। [ভর্ত্তঃ! সঙ্গীতে অভ্যন্তরে স্বঃ।] (ফ)

রাজা। দেবি! গৃহ্যতামনয়োরন্যতরা। (ব)

---

(ন) নিষীদতম্ উপবিশতম্ যুবামিতি শেষঃ।

(প) কস্যাং কিমাখ্যায়াং কলায়াং শিল্পবিদ্যায়াম্ অভিবিনীতে শিক্ষিতে শিক্ষকেণ ইতি শেষঃ। প্রশ্নোঽয়ং কস্যু কিবচনাদেব তয়োঃ শিল্পকুশলতায়াঃ সামান্যতোঽবগমাত্ বিশেষপ্রশ্নস্য সামান্যজ্ঞানাধীনতায়ামপ্যুপযুজ্যতে।

(ফ) সঙ্গীতে সঙ্গীতকলায়াম্ অভ্যন্তরে অনুরক্তে স্বঃ, অত্র আত্মনোঃ সঙ্গীতবিদ্যায়াম্ অভ্যন্তরত্বমাত্রকথনাত্ বিশেষেণ শিক্ষিতত্বানাশংসনাচ্চ অতিবিনীতত্বং জ্ঞাপ্যতে। তথাহি সঙ্গীতবিদ্যামেব আবাং সুষ্ঠু মত্বা তত্র অনুরক্তে শিক্ষা কিয়তী জাতা তন্ন জানীব ইতি ভাবব্যঞ্জনম্।

---

(উভয়ে নিকটে গমন করিল এবং তাহাদিগকে দেখিয়া মালবিকা ও পরিব্রাজিকা পরস্পরের প্রতি অবলোকন করিলেন)। (থ—দ)

উভয়ে। মহারাজের জয় হউক, মহারাণীর জয় হউক। (ধ)

রাজা। উপবেশন কর। (ন)

(রাজাজ্ঞায় উভয়ের উপবেশন)।

রাজা। তোমরা কোন্ কলা-বিদ্যা শিক্ষা করিয়াছ? (প)

উভয়ে। প্রভু! আমাদের সঙ্গীতে আসক্তি। (ফ)

देवी। मालविए! इदो पेक्ख। कदरा ते संगीदसहआरिणी रुच्चदि। [ मालविके! इतः प्रेचस्व। कतरा ते सङ्गीतसहकारिणी रोचते? ] (भ)

उभे। ( मालविकां दृष्ट्वा ) अम्मो भट्टिदारिआ! ( इति प्रणम्य ) जेदु जेदु भट्टिदारिआ। ( तया सह बाष्पं विकिरतः ) [ अहो भर्त्तृदारिका!। जयतु जयतु भर्त्तृदारिका। ] (म)

[ सर्व्वे सविस्मयमवलोकयन्ति। ] (य)

---

(व) अनयोः शिल्पिदारिकयोः मध्ये अन्यतरा एकतरा, गृह्यतां स्वीयपरिजनत्वेन आदीयतां देव्या राजलभ्यार्थस्य अर्द्धभागे उपयोगादियमुक्तिः सङ्गता।

(भ) इतः अस्यां दिशि प्रेचस्व अवलोकयस्व, कतरा अनयोः शिल्पिदारिकयोः मध्ये ते तुभ्यं सङ्गीतसहचारिणी सङ्गीतसहायभूता रोचते स्वदते, अनयोः कस्या उपरि तव सङ्गीतसाहचर्य्ये प्रकर्षज्ञानं जायते, तथाहि अनयोर्मध्ये काञ्चित् सङ्गीतसहचारिणीं यथेच्छं गृहाण इति भावः।

(म) भर्त्तृदारिका स्वामिदुहिता। प्रणम्य प्रणिपत्य मालविकामिति शेषः। तया मालविकया सह बाष्पं नेत्राम्बु विकिरतः विसर्ज्जयतः बहुकालात् परं स्वजनसम्पर्क एव बाष्पविसर्ज्जने हेतुरिति।

(य) सर्व्वे धारिण्यादयः राजप्रभृतयश्च, सविस्मयं साश्चर्य्यम् अवलोकयन्ति पश्यन्ति, तासां सहसा दर्शनमात्रतः परमेव बाष्पविसर्ज्जनमिति शेषः। नवागतयोरपि शिल्पिदारिकयोः सहसा परिचितपूर्व्वयोरिव व्यवहारो मालविकायाः समीपे।

---

রাজা। মহিষি! ইহাদের একজনকে গ্রহণ কর। (ব)

ধারিণী। মালবিকে! এদিকে দেখ। ইহাদের মধ্যে কোন্ জনকে তোমার সঙ্গীত-সহকারিণী বলিয়া মনোনীত কর? (ভ)

উভয়ে। (মালবিকাকে দেখিয়া) অহো মহারাজকুমারী! (প্রণাম করিয়া) রাজকুমারীর জয় হউক। (মালবিকার সহিত উভয়ের অশ্রুবিসর্জ্জন)। (ম)

राजा । के भवत्यौ ? का वेयम् ? (र)

प्रथ । भट्टा ! एसा अह्माणं भट्टिदारिआ । [ भर्त्तः ! एषा अस्माकं भर्तृदारिका । ] (ल)

राजा । कथमिव ? (व)

उभे । सुणादु भट्टा । जो सो भट्टिणा विजअदण्डेहिं विदब्भणाहं वसीकरिअ बन्धणादो मोइदो कुमारो माहवसेणो णाम, तस्स इअं कणीअसी बहिणिआ मालविआ णाम । [ शृणोतु भर्त्ता । यः स भर्त्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनिका मालविका नाम । ] (श)

---

(र) भवत्यौ शिल्पिदारिके, के किम्परिचये, इयं मालविका वा का किम्परिचया ? तथाहि युवयोः कीदृशः परस्परं सम्बन्धः येन दृष्टपूर्व्वाणामिव युष्माकं दर्शनमात्रात् प्रसृतो बाष्पप्रवाह इति भावः ।

(ल) एषा मालविका अस्माकम् आवयोः भर्त्तृदारिका स्वामिदुहिता, अयमेतावान् अस्माकं परस्परं सम्बन्ध इति भावः ।

(व) कथमिव, केन प्रकारेण इयं युवयोः भर्त्तृदुहिता, तत् किमियं विदर्भराजदुहिता इति गूढ़ः प्रश्नः ।

(श) शृणोतु वक्ष्यमाणमिति शेषः । भर्त्रा महाराजेन भवता, विजयदण्डैः विजयाय शत्रुपराभवाय ये दण्डाः बलानि तैः विदर्भनाथं विदर्भराजं वशीकृत्य आयत्तीकृत्य बन्धनात् कारागारात् । मोचितः अपसारितः, तस्य माधवसेनस्य कुमारस्य, कनीयसी अनुजा भगिनिका स्नेहभागिनी भगिनी, दयायां कप्रत्ययः ।

---

( সকলের সবিস্ময়ে অবলোকন ) (য)

রাজা। তোমরা কে ? ইনিই বা কে ? (র)

প্রথ। মহারাজ ! ইনি আমাদের রাজকন্যা। (ল)

রাজা। কিরূপ ? (ব)

देवी। कहं राअदारिआ इअं! चन्दणं क्खु मए पादुआवदेसेण दूसिदं। [कथं राजदारिकेयम्। चन्दनं खलु मया पादुकापदेशेन दूषितम्।] (ष)

राजा। अथात्रभवती कथमित्थम्भूता?। (स)

माल। (निःश्वस्यात्मगतम्) विहिणिओएण। [विधिनियोगेन।] (ह)

---

(ष) इयं मालविका राजदारिका राजसुता, तथाहि प्रशस्तवंशसम्भूततया अभ्यर्हणीया एषा इति भावः। चन्दनं मलयजसारं, पादुकापदेशेन उपानद्व्याजेन दूषितं हेलया ज्ञातं, तथाहि यथा कश्चिद्भ्रान्तः चन्दनं पादुकावदशुचि मत्वा दूरे पादेन प्रहिणोति तथैवाहम् इमां मालविकां साधारणकुलजातां परिचारिकां मन्यमाना हेलया अवज्ञातवती इत्यहो महदन्याय्यमेव सम्पादितं मे भ्रमेण इति बिम्बप्रतिबिम्बभावप्रत्ययात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना।

(स) अथ प्रश्ने। अत्रभवती ईदृशराजकुलजातापि इयं मालविका, कथं केन हेतुना केन प्रकारेण वा इत्थम्भूता एवम् परिजनाचारमवलम्बितवती ममालये चिरमवस्थिता इति मे प्रश्नविषयः।

(ह) निःश्वस्य पूर्व्वदुःखस्मरणेन निश्वासं त्यक्त्वा। विधेः दैवस्य नियोगेन निर्देशेन अहं इत्थम्भूता इति शेषः। तथाहि तथा राजकुलजातापि सम्मानोचितापि अहं यदद्य परिचारिकाभावेन परिचितात्र तिष्ठामि एतन्मे दैवप्रणोदितमेव इति भावः। अत्र गूढ़ एतावान् भावोऽपि उन्नेतव्यः यथा विधिरेव त्वया सह मां योजयितुमिह

---

উভয়ে। শুনুন মহারাজ! বিজয়ী সেনা দ্বারা বিদর্ভরাজকে পরাজয় করিয়া মহারাজ যে কুমার মাধবসেনকে বন্ধন হইতে মোচন করিয়াছেন, এই মালবিকা তাঁহারই কনিষ্ঠা ভগিনী। (শ)

দেবী। ইনি কি রাজকন্যা! আমি চন্দনকে পাদুকাচ্ছলে দূষিত করিয়াছি। (ষ)

রাজা। ইনি এইরূপ হইলেন কি প্রকারে? (স)

द्विती। सुणादु भट्टा। दाअादवसं गदे भट्टिदारए माहवसेणे, तस्स अमच्चेण अज्जसुमदिणा अह्मारिसं परिअणं उज्झिअ गूढं आणीदा एसा। [ शृणोतु भर्त्ता। दायादवशंगते भर्त्तृदारके माधवसेने तस्य अमात्येन आर्य्यसुमतिना अस्मादृशं परिजनम् उज्झित्वा गूढ़मानीता एषा। ] (च)

राजा। श्रुतपूर्वं मयैतत्। ततस्ततः? (क)

द्विती। भट्टा! अदो वरं ण आणीमो। [ भर्त्तः! अतः परं न जानीमः। ] (ख)

परि। अतः परमहं मन्दभागिनी कथयिष्यामि। (ग)

---

परिचारिकाभावेन उपास्थापयत अन्यथा दुर्लभ एव त्वम् अभविष्य इति। तत्पक्षे निश्वासस्तु मेलनस्य तदानीमपि सम्यगनिश्चयात्।

(च) दायादस्य सपिण्डस्य यज्ञसेनस्य वशं वश्यतां गते प्राप्ते भर्त्तृदारके अस्मत्स्वामितनये माधवसेने तदाख्ये कुमारे, अमात्येन सचिवेन आर्य्यसुमतिना अतिसम्मानभाजनेन सुमतिनाम्ना, गूढ़म् अतिरहस्यं यथा तथा एषा मालविका आनीता अपसारिता।

(क) एतद्‌ भवत्या उक्तरूपं वस्तु मया श्रुतपूर्व्वं पूर्व्वमाकर्णितं, ततः तदनन्तरवृत्तान्तः कीदृशः?

(ख) अतः एतदनन्तरं वृत्तं, न जानीमः वयमिति शेषः।

(ग) मन्दभागिनीत्यनेन अतःपरवृत्तस्य कष्टमयता आवेद्यते।

---

মাল। (নিশ্বাস ত্যাগ করিয়া স্বগত) বিধির বিধানে। (হ)

দ্বিতী। মহারাজ! শ্রবণ করুন। রাজকুমার মাধবসেন জ্ঞাতির বশ্যতা প্রাপ্ত হইলে তাঁহার অমাত্য আর্য্যসুমতি আমাদের মত পরিজনবর্গকে ত্যাগ করিয়া ইহাকে গুপ্তভাবে আনয়ন করিয়াছিলেন। (চ)

রাজা। ইহা আমি পূর্ব্বেই শুনিয়াছি। তার পর তার পর? (ক)

দ্বিতী। প্রভু, ইহার পরে আর আমরা জানি না। (খ)

পারি। ইহার পর এই হতভাগিনী কহিতেছে। (গ)

उभे। अज्जकोसिईए विअ सरसंजोओ! [आर्य्यकौशिक्या इव स्वरसंयोगः!] (घ)

माल। णं सा एव्व। [ननु सैव।] (ङ)

उभे। जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि। भअवदि! णमो दे। [यतिवेशधारिणी आर्य्यकौशिकी दुःखेन विभाव्यते। भगवति! नमस्ते।] (च)

परि। स्वस्ति भवतीभ्याम्। (छ)

राजा। कथमाप्तवर्गोऽयं भगवत्याः? (ज)

(घ) स्वरसंयोगः कण्ठस्वरः, आर्य्यकौशिक्याः माननीयायाः कौशिक्याः सदृशः। अनुभूयते इति शेषः।

(ङ) सा एव कौशिकी एव इयं कथयति इति शेषः।

(च) यतिवेशधारिणी सन्न्यासिजनोचितवेशसमन्विता, दुःखेन कष्टेन युक्तेति शेषः। विभाव्यते अनुमीयते, तथाहि विरक्तजनोचितवेशदर्शनेन अस्याः सुतरां दुःखविशेष-मनुमिनोमीति भावः।

(छ) भवतीभ्यां समागताभ्यां शिल्पिदारिकाभ्यां स्वस्ति शुभम् अस्तु इति शेषः। भवतीभ्यामित्यत्र नमःस्वस्तीत्यादिना चतुर्थी।

(ज) अयं मालविकारूपो जनः शिल्पिदारिकाद्वितयरूपो वा भगवत्याः पण्डित-कौशिक्याः आप्तवर्गः आत्मीयतया सुपरिचितः, कथं सम्भावनायाम्। तथाहि आश्चर्य्यं

উভয়ে। আর্য্যা কৌশিকীর কণ্ঠস্বরের মত বোধ হইতেছে! (ঘ)

মাল। তিনিই ত। (ঙ)

উভয়ে। যতিবেশধারিণী আর্য্যা কৌশিকীকে কষ্টে চিনিতে পারা যায়। ভগবতি! আপনাকে প্রণাম করি। (চ)

পরি। তোমাদের কল্যাণ হউক। (ছ)

परि। एवमेतत्। (झ)

विदू। तेण कहेदु दाणिं भअवदी अत्तभोदीए वुत्तन्तं दाव असेसं। [ तेन कथयतु इदानीं भगवती अत्रभवत्या वृत्तान्तं तावदशेषम्। ] (ञ)

परि। [सवैक्लव्यम्।] तावत् श्रूयताम्। माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ। (ट)

---

यत् मालविकाया भगवत्या आत्मीयत्वेऽपि एतावत्कालं तथात्वेन वयं न ग्रहीतुं क्षमा जाता इति भावो व्यज्यते।

(झ) एतद् भवता सम्भावितं वस्तु एवम् इत्थमेव, अयं मदीय आप्तवर्ग एव इति भावः।

(ञ) तेन अस्या मालविकाया आप्ततया इत्यर्थः। तेनैव सर्व्ववृत्तान्तविज्ञानयोग्यत्वात्। अत्रभवत्याः मालविकायाः अशेषं समस्तं वृत्तान्तं संवादं कथयतु प्रकाशयतु, तथाहि यतस्त्वमस्या आत्मीया अतः सर्वं वृत्तान्तमस्या जानासि तत् कथय यथा वयं ज्ञातुं क्षमामहे इति भावः।

(ट) सवैक्लव्यं शोकजनितविकारसहकारेण, तावत् सर्व्वं वृत्तमस्या इत्यर्थः। "यावत्तावच्च साकल्ये" इत्यादि कोषात्। माधवसेनस्य सचिवं मन्त्रिणं, सुमतिं तदाख्यम्। अवगच्छ जानीहि।

---

রাজা। ইহারা কি আপনার আত্মীয়জন ? (জ)

পরি। তাহাই বটে। (ঝ)

বিদূ। তাহা হইলে, এখন আপনি ইঁহার অবশিষ্ট বৃত্তান্ত বর্ণন করুন। (ঞ)

পরি। (শোকবিহ্বলভাবে) শ্রবণ করুন। মাধবসেনের অমাত্যই আমার অগ্রজ সুমতি বলিয়া বিদিত হউন। (ট)

राजा। उपलक्षितम्। ततस्ततः? (ठ)

परि। स इमां तथागतभ्रातृकां मया सार्द्धमपवाह्य भवत्सम्बन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः। (ड)

राजा। ततस्ततः? (ढ)

परि। स चाटव्यन्तरे निविष्टो गताध्वा वणिग्जनः? (ण)

---

(ठ) उपलक्षितम् अवगतं भवत्या कथितं तस्य आत्मनोऽग्रजत्वमित्यर्थः। तथाहि भवत्या वैकृत्यान्तरदर्शनेन सुमतिर्दृत् भवत्याः कोऽपि परमात्मीय इति भवत्या उक्तेः प्रागेव अस्माभिर्ज्ञातमिति भावः।

(ड) सः ममाग्रजः सुमतिर्नाम तथा तं प्रकारं गतः प्राप्तः यज्ञसेनस्य अधीनतारूपां महतीं दुरवस्थां प्राप्त इत्यर्थः। भ्राता माधवसेनो नाम सोदरः यस्याः तथाभूताम्, ऋकारान्तत्वात् बहुव्रीहौ कप्रत्ययः। इमां मालविकाम्। अपवाह्य तस्मात् बहिर्गमय्य, भवत्सम्बन्धापेक्षया भवता सह सङ्गत्यनुरोधेन मालविकां भवन्तं नेतुमित्यर्थः। विदिशागामिनं विदिशानगरीं प्रति प्रतिष्ठमानं पथिकसार्थं पथिकसमूहम् अनुप्रविष्टः सम्प्राप्तः तैः सह समागमं प्राप्त इत्यर्थः।

(ढ) ततस्ततः ततः किं वृत्तम् जातमिति भावः।

(ण) स च पूर्वप्राप्तः वणिग्जनः वणिक्तया अवधारितः जनसार्थः, गताध्वा अतीतबहुमार्गः, अटव्यन्तरे वनमध्यं निविष्टः प्रविष्टः, तथाहि ते वणिजः क्लान्त इव सहसा मार्गानतिक्रम्य वनान्तराले प्रस्थिता इत्यर्थः।

---

রাজা। বুঝিয়াছি। তারপর, তারপর? (ঠ)

পরি। আমার ভ্রাতার তাদৃশ অবস্থা ঘটিলে আমার সহিত ইহাকে সরাইয়া লইয়া আপনার সহিত সম্বন্ধের আশায় আসিয়া বিদিশা-যাত্রী বণিকের দলে প্রবিষ্ট হইলেন। (ড)

রাজা। তারপর, তারপর? (ঢ)

राजा। किं चान्यत् ? (त)

परि। ततः ?—

तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि ।
कोदण्डपाणि निनदत् प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम् ॥१०॥

[अन्वयः। तूणीरपट्टपरिणद्धभुजान्तरालम् आपार्ष्णिलम्बिशिखिबर्हकलापधारि कोदण्डपाणि आपातदुष्प्रसहं निनदत् प्रतिरोधकानाम् अनीकम् आविरभूत् । १०]

---

(त) अन्यत् एतस्मादपरं किं वस्तु वर्त्तते तस्मै जिज्ञासाविषय इत्यर्थः। ततःपरं किं जातं तत् कथय इति भावः।

१०। अथानन्तरं जातं वस्तु परिव्राजिका प्रस्तौति—तूणीरेत्यादिना। तूणीरपट्टेन तूणबन्धहेतुभूतसूत्रभेदेन परिणद्धम् आवद्धं भुजयोः बाहुयुगलस्य अन्तरालं मध्यभागः वक्षःपृष्ठयोः पार्श्वद्वयौ येन तथाभूतम्। आपार्ष्णि पार्ष्णिपर्य्यन्तं लम्बन्ते प्रसरन्ति यानि शिखिनां मयूराणां वर्हाणि पिच्छानि तेषां कलापं समूहं धारयति यत् तत् शिखिपिच्छशोभितपृष्ठभागमित्यर्थः। कोदण्डः कार्म्मुकं पाणौ हस्ते यस्य "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ"इति सप्तम्यन्तस्य परनिपातः। धनुर्धारि इत्यर्थः। आपातेन स्मृतिमात्रेणैव दुष्प्रसहं सोढुम् अशक्यं यथा तथा निनदत् कठोरं शब्दं कुर्व्वत् प्रतिरोधकानाम् आक्रमणकारिणाम् शत्रूणाम् इत्यर्थः। अनीकं सैन्यसमूहः आविरभूत दृष्टिगोचरतां ययौ। तथाहि क्षणेनैव शत्रूणां सैनिकास्तत्र समुपस्थिताः तेषां वेशः सुसज्जितयोद्धृवीराणामिव आसीत्, प्रवलरिपुसमाक्रमणकालोचितश्च तदानीं तेषां

---

পরি। সেই বণিকের দল বনমধ্যে প্রবেশ করিয়া পথভ্রষ্ট হল। (ণ)

রাজা। আর কি হইল ? (ত)

পরি। তারপর ?—

[ मालविका भयं नाटयति ] (य)

विदू। भोदि! मा भाआहि, अदिक्कन्तं क्खु अत्तभोदी कहेदि। [ भवति! मा विभीहि, अतिक्रान्तं खलु अत्रभवती कथयति। ] (द)

राजा। ततस्ततः? (ध)

परि। ततो मुहूर्त्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः। (न)

---

व्यवहार इति भावः। अत्र बर्हकलापशब्दयोरापाततः शिखिपिच्छरूपैकार्थपरत्वप्रत्ययात् पर्य्यवसाने च भिन्नाकारयोस्तयोरर्थभेदस्य प्रतीत्या पुनरुक्तवदाभासोऽलङ्कारः। वसन्ततिलकं वृत्तम्।

(य) भयं शत्रुसैन्यसम्पर्कवादश्रवणेन तदानीन्तनस्य वृत्तस्य मनसि जागरूकत्वात् अनिष्टाशङ्कां नाटयति अभिनयति।

(द) अत्रभवती परिव्राजिका अतिक्रान्तम् अतीतं वस्तु नतु वर्त्तमानमिति भावः। कथयति विज्ञापयति, तद्भयकारणस्य अतीतत्वात् कथं भीतिर्युक्ता इति भावः।

(ध) तत इति। ततः किं जातमिति कथय इति भावः।

(न) ततः बद्धायुधाः अस्त्रधारिणः, सार्थवाहयोद्धारः वणिग्योद्धृगणाः पराङ्मुखीभूताः प्रतिनिवृत्ताः, तस्करैः चौरवृत्तिभिः दस्युभिः शत्रुपक्षीयैरित्यर्थः।

---

যাহাদের পৃষ্ঠ ও বক্ষোদেশ তূণীরপট্টে সম্বদ্ধ এবং পাদদেশ পর্য্যন্ত দোলায়মান ময়ূরপুচ্ছনিচয়ে ভূষিত—তাদৃশ দস্যু-সৈন্য ধনুর্ব্বাণহস্তে শ্রবণমাত্রেই অতি দুঃসহ গর্জ্জন করিতে করিতে উপস্থিত হইল॥১০॥

( মালবিকা ভয়ের অভিনয় করিল। ) (থ)

বিদূ। ওগো! ভয় করিবেন না। ইনি অতীত ঘটনামাত্র বর্ণনা করিতেছেন। (দ)

রাজা। তারপর তারপর? (ধ)

রাজা। হন্ত! ইতঃ পরং কষ্টতরং শ্রোতব্যম্! (প)

পরি। ততঃ স মৎসোদর্য্যঃ—(ফ)

ইমাং পরীপ্সু র্দুর্জাতে পরাভিভবকাতরাম্।
ভর্ত্তৃপ্রিয়ঃ প্রিয়ৈর্ভর্ত্তুরানৃণ্যমসুভির্গতঃ ॥১১॥

[ অন্বয়ঃ। দুর্জাতে ইমাং পরাভিভবকাতরাম্ ইমাং পরীপ্সুঃ ভর্ত্তৃপ্রিয়ঃ (সঃ) প্রিয়ৈঃ অসুভিঃ ভর্ত্তুঃ আনৃণ্যং গতঃ। ১১ ]

---

(প) হন্ত বিষাদে, ইতঃ স্তুতবৃত্তান্তাৎ পরম্ উত্তরং কষ্টতরম্ এতস্মাদপি কষ্টজনকং বস্তু শ্রোতব্যম্ আকর্ণয়িতব্যং, তচ্চ সুমতেঃ প্রাণবিয়োগাদিকমিতি ভাবঃ।

(ফ) মম সোদর্য্যঃ ভ্রাতা সহোদরঃ, অস্য ভাগস্য পদ্যে অন্বয়ঃ।

১১। দুর্জাতে তাদৃশদুর্দ্দশায়ামুপগমে পরাভিভবেন শত্রুণামাক্রমণেন কাতরাং বৈক্লব্যং গতম্ ইমাং মালবিকাং পরীপ্সুঃ পরিরক্ষিতুমিচ্ছুঃ ভর্ত্তৃপ্রিয়ঃ স্বামিনো হিতান্ন-বল্লভঃ স মৎসোদর্য্য ইত্যেব অন্বেতি, প্রিয়ৈঃ আত্মনোঽতিতরামভীষ্টৈঃ অসুভিঃ প্রাণৈঃ ভর্ত্তুঃ স্বামিনঃ আনৃণ্যম্ ঋণমুক্তিং গতঃ,তথাহি যঃ এতাবৎকালং পুত্রবৎ পরিপালয়ামাস তস্য আত্মজনরক্ষণমভিপ্রেত্য আত্মজীবনমপি তৃণায় মত্বা স প্রাণান্ বিসসর্জ্জ ইতি ভাবঃ। পরীপ্সুরিতি পরিপূর্ব্বস্য আপেঃ সনি রূপং, তথাচ "পর্য্যাপ্তিঃ স্যাৎ পরিত্রাণ"মিত্যমরঃ। "দুর্জ্জাতে ব্যসনে ক্লীব"মিতি চ কোষান্তরে। অত্র ভঙ্গ্যা সুমতেঃ প্রাণবিয়োগকথনাৎ পর্য্যায়োক্তমিতি বদন্তি আলঙ্কারিকাঃ।

---

পরি। অনন্তর মুহূর্ত্তমধ্যে বণিক্‌দলের অস্ত্রধারী যোদ্ধৃগণ দস্যু-কর্ত্তৃক পরাভূত হইল। (ন)

রাজা। আহা! ইহার পরে আরও কষ্টজনক কথা শুনিতে হইবে! (প)

পরি। অনন্তর আমার সেই প্রভুপরায়ণ সহোদর—(ফ)

বিপৎকালে শত্রুপীড়নে ভয়ব্যাকুলা এই মালবিকাকে উদ্ধার করিবার

प्रथ। अह्मो ! हदो सुमदी। [ अहो ! हतः सुमतिः। ] (ब)

द्वितो। अदो क्खु भट्टिदारिआए इअं समवत्था संवुत्ता।

[ अतः खलु भर्त्तृदारिकाया इयं समवस्था संवृत्ता। ] (भ)

[ परिव्राजिका वाष्पं विसृजति ]

राजा। भगवति ! तनुत्यजामीदृशी लोकयात्रा। न शोच्य-स्तत्रभवान् सफलीकृतभर्त्तृपिण्डः। ततस्ततः ? (म)

---

(भ) अतः अस्मात् कारणात् भर्त्तृदारिकायाः स्वामिदुहितुः मालविकायाः इयं वर्त्तमाना समवस्था अवस्थाविशेषः अतिशोचनीया राजदुहितुरपि परिजनावस्था इत्यर्थः। संवृत्ता जाता।

(म) भगवति ! सम्बोधनमिदं सर्व्वं संसारव्यापारं जानत्या अपि न युक्त ईदृशः शोकसंवेग इति ज्ञापनार्थम्। तनुत्यजां देहत्यागकारिणां जीवानाम् ईदृशी तव भ्रातुः सदृशी लोकयात्रा जगतः रीतिः। तथाहि यथा अद्य तव भ्राता अस्थाने अकाले च प्राणान् जहौ एवं बहव एव म्रियन्ते, तत् 'जातस्य हि ध्रुवो मृत्यु'रित्यवधार्य्य न भ्रातरं शोचितुमर्हसीति भावः। शोकपरिहारस्य कारणान्तरमपि विशेषणमुखेन प्रतिपादयति— न शोच्य इत्युपक्रम्य, सफलीकृतं सार्थकतां प्रापितं भर्त्तुरुपकाराय आत्मदेहपरित्यागात् साफल्यं नीतं भर्त्तुः स्वामिनः पिण्डम् आत्मजीवनरक्षार्थं स्वेन गृहीतपूर्व्वम् अन्नं येन तथाभूतः, अतएव तत्रभवान् सुतरां माननीयः स सुमतिर्नाम तव भ्राता न शोच्यः शोकभावेन स्मर्त्तव्यः, तथाहि स यथा कर्म्म कुर्व्वाणो जीवनं जहौ तत् कस्यापि कृतिनः सौभाग्यवशादेव घटते तत् किमस्थाने तदर्थं शोकवाष्पं मुञ्चसीति भावः।

---

वासनाय स्वीय प्रिय जीवन दान करिया प्रभुर ऋण परिशोध करियाछेन ॥११॥

प्रथम। हाय ! सुमति हत हइयाछेन ! (ब)

द्विती। एइ जन्यइ राजकुमारीर एइ अवस्था हइयाछे। (भ)

परि। ततोऽहं मोहमुपगता यावत् संज्ञां लभे, तावदियं दुर्लभदर्शना संवृत्ता। (य)

राजा। महत् खलु कृच्छ्रमनुभूतं भगवत्या। (र)

परि। ततो भ्रातुः शरीरमग्निसात् कृत्वा पुनर्नवीभूतवैधव्य-दुःखया मया त्वदीयं देशमवतीर्य्य इमे काषाये गृहीते। (ल)

---

(य) ततः तस्य मम भ्रातुः प्राणत्यागानन्तरं, मोहं मूर्च्छाम् उपगता प्राप्ता, संज्ञां चेतनां लभे तावत् तत्कालाभ्यन्तरे इयं मालविका, दुर्लभदर्शना अप्राप्तदर्शना जाता, मूर्च्छापगमे नाहमेनां तदानीं तत्र व्यलोकयमिति भावः।

(र) महत् अतिकठोरं कृच्छ्रं कष्टम् अनुभूतं प्राप्तं, खलुशब्दो निश्चयार्थः।

(ल) ततः मोहस्य अपगमानन्तरं, भ्रातुः मृतस्य सुमतिनाम्नो मम सोदरस्य शरीरं शवदेहम् अग्निसात् कृत्वा वह्निना दग्ध्वा, नवीभूतं चिरकालान्तरितत्वेन भर्तृमरणस्य अन्तर्हितमपि स्वालम्बनभूतस्य भ्रातुर्म्मरणेन पुनरुद्भूतं वैधव्यदुःखं स्वामिमरणजनितः शोकः यस्याः तथाभूतया। शोकः शोकान्तरमुद्दीपयतीति नियमेन तथाभूतत्वमिति मन्तव्यम्। त्वदीयं त्वया पाल्यमानं देशं विदिशाभूमिम् अवतीर्य्य सम्प्राप्य इमे मया सम्प्रति आलक्ष्यमाने काषाये कषायरक्तवस्त्रे गृहीते धारिते। तदानीमेवाहं संसारात् विरक्ता सन्न्यासिनीव गृहीतकाषाया संवृत्तास्मीति भावः।

---

( পরিব্রাজিকা অশ্রুবিসর্জ্জন করিতে লাগিলেন )

রাজা। ভগবতি! মর্ত্ত্যজীবের পক্ষে ইহাই জগতের রীতি। তিনি প্রভুর অন্ন সার্থক করিয়াছেন, সেই মহাত্মার জন্য শোক করিবেন না। তারপর তারপর? (ম)

পরি। তারপর আমি মূর্চ্ছিতা হইয়া যখন চেতনালাভ করিলাম, তখন ইনি অদৃশ্যা হইয়াছিলেন। (য)

রাজা। ভগবতী বড়ই কষ্টভোগ করিয়াছেন। (র)

রাজা। युक्तः सज्जनस्यैष पन्थाः । ततस्ततः ? (व)

পরি। सेयमाटविकेभ्यो वीरसेनं वीरसेनाच्च देवीं गता। देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येवमवसानं कथायाः । (श)

---

(व) सज्जनस्य साधुचरितस्य लोकस्य एषः भगवत्या गृहीतः पन्थाः मार्गः युक्तः न्याय्य एव, तथाहि साधुजनोचितमेव भगवती कृतवतीति भावः ।

(श) सा तदानीं दुर्लभदर्शना इयं मालविका आटविकेभ्यः वनवासिभ्यः दस्युभ्यः, वीरसेनं तदाख्यं भवतः सेनानायकं गता, वीरसेनाच्च देवीं धारिणीं गता प्राप्ता, तथाहि दस्यवः भयेन वीरसेनाय मालविकां ददुः, वीरसेनः अपि भगिनीप्रीत्या धारिण्यै इत्येषः अस्याः समागम इति भावः । देव्याः राज्ञ्याः गृहे लब्धप्रवेशया प्रवेशाधिकारं प्राप्तवत्या मया अनन्तरम् एतत्सर्व्ववृत्तान्तानन्तरमित्यर्थः । दृष्टा इयमिति शेषः । इत्येवम् इत्थम्भूतं कथायाः एतत्सम्बन्धिवृत्तान्तस्य अवसानं शेषः । एतन्मात्रोऽस्या वृत्तभागः परतस्तु महाराजः सर्व्वं वेत्ति इति भावः ।

---

পরি। তারপর ভ্রাতার দেহ অগ্নিসাৎ করিয়া বৈধব্যদুঃখ পুনরায় নূতনের মত জাগরিত হওয়ায় আপনার রাজ্যে আসিয়া এই রক্তবস্ত্র ধারণ করিয়াছি। (ল)

রাজা। ইহাই সজ্জনের উপযুক্ত পথ। তারপর, তারপর—(ব)

পরি। সেই ইনি বনদস্যুদিগের নিকট হইতে বীরসেনের নিকট এবং পরে বীরসেনের নিকট হইতে দেবীর নিকট আসিয়াছেন। দেবীর গৃহে প্রবেশ লাভ করিবার পর আমি ইঁহাকে দেখিলাম; এই ত কথার শেষ। (শ)

माल। (आत्मगतम्।) किं णु क्खु संपदं भट्टा भणादि ? [ किं नु खलु साम्प्रतं भर्त्ता भणति ? ] (ष)

राजा। अहो ! परिभवोपहारिणो विनिपातः ! कुतः ? (स)

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्रोर्णं वोपयुज्यते ॥१२॥

[ अन्वयः। इयं देवीशब्दक्षमा सती प्रेष्यभावेन पत्रोर्णं स्नानीयवस्त्रक्रियया वा उपयुज्यते नाम। १२ ]

---

(ष) साम्प्रतं सर्व्ववृत्तान्तश्रवणे जाते सति, भर्त्ता स्वामी अग्निमित्रः किं भणति यत इयं मम प्रणयिनी भूत्वा चिरं वर्त्ततां भातुः समीपं वा व्रजतामित्यनयोः कतरः पक्षः अनुमन्येत इति शङ्कागर्भमात्मगतम्। अनया आशङ्कया "स्नेहः पापमाशङ्कते" इति स्मरणात् राज्ञि मालविकाया महती आसक्तिर्व्यज्यते।

(स) अहो आश्चर्य्ये, परिभवं हीनतां निकृष्टतामित्यर्थः। उपहर्त्तुं प्रदातुं शीलं यस्य तस्य, अवहेलाप्रदानरतस्य इत्यर्थः। विधेरिति शेषः। विनिपातः उपस्थितिः, तथाहि य एव विधिरस्या नृपदुहितुः परिचारिकावृत्तिं समकल्पयत् स एव यदिदानीमस्या राजपरिग्रहत्वमनुकूलयतीत्यहो महान् शुभोद्यमस्तस्य इति भावः। अथवा अत्र विधेर्मालविकायाः परिचारिकाभावसम्पादनेन निन्दा एव प्रकृता, तद्यथा परिभवोपहारिणः दुःखदानरतस्य विधेः विनिपातः क्रियया प्रवृत्तिः विधेः स्वभाव एव दुःखदानमिति, अत्रापि दुःखं निर्व्वर्त्तयतीति भावः। उत्तरश्लोकार्थोऽपि द्विधा बोद्धव्यः।

१२। इयं मालविका देवीशब्दक्षमा देवीशब्दाभिधानयोग्या सती कुलशील-लावण्यादिभिः सर्वैरेव उत्कर्षहेतुभूतैर्व्वस्तुभिः राजपरिग्रहयोग्यापि इत्यर्थः। प्रेष्यभावेन परिचारिकाभावेन पत्रोर्णं विशुद्धकौशेयवसनं वा इव "वा स्याद्विकल्पोपमयोरेवार्थे च

---

মাল। ( স্বগত ) না জানি এক্ষণে মহারাজ কি বলেন ? (ষ)

রাজা। অহো ! দুঃখদায়ী দৈবের কি ব্যবহার ! যে হেতু—(স)

देवी। भअवदि! तुए अहिजणवदिं मालविअं अआचक्खन्तीए असंपदं किदं? [भगवति! त्वया अभिजनवतीं मालविकामनाचक्षाणया असाम्प्रतं कृतम्।] (छ)

परि। शान्तं पापम्। केनचित् कारणेन मया नैष्ठुर्य्यमवलम्बितम्। (ज)

---

समुच्चये" इति विश्वः। स्नानीयवस्त्रक्रियया स्नानसाधनहीनवस्त्रयोग्यगात्रप्रोञ्छनादि-कर्म्मणा उपयुज्यते विपरीतलक्षणया न उपयुज्यते इत्यर्थः। तथाहि यथा पत्रोर्णस्य पत्रे स्नानीयवस्त्रक्रिया अन्याय्या तथा अस्या अपि परिचारिकाभाव इति भावः। "वटलकुचादिपत्रेषु क्रिमिभिरूर्णाया: कृतत्वात् पत्रसम्बन्धिनी ऊर्णा अस्येति पत्रोर्ण"मिति भरत:। अत्र वाशब्दस्य इवार्थतया उपमावाचकत्वात् उपमा। अर्थान्तरमप्यनुसन्धेयम्।

(छ) मालविकाम् अभिजनवतीं सत्कुलसम्भूताम् अनाचक्षाणया अप्रकाशयन्त्या असाम्प्रतम् अत्यन्तमन्याय्यं कृतं, तथाहि अस्या: सत्कुलसम्भवमपरिज्ञाय कियदिव वा दासीवर्त्तीं अस्याम् अन्याय्यमस्माभि: कृतं तत्र भवत्या तद्वृत्तस्य अप्रकाशनमेव अपराध्यति प्रकृतविषयपरिज्ञानहेतुकत्वात्तस्य इति भाव:। एतेन मालविकाया: समीपे कृतत: अन्यायाचरणजन्यापराधक्षमापणमपि गम्यते।

(ज) केनचित् कारणेन नतु निष्कारणमिति भाव:। यदि निष्कारणं मया तत् कृतं स्यात् तदैव भूयान् अपराध: स्यात् इति तात्पर्य्यम्। नैष्ठुर्य्यं निष्करुणत्वं मालविकाया: कष्टभोगे निरपेक्षत्वम् इत्यर्थ:। अवलम्बितम् आश्रितम्, अन्यथा किं स्वेच्छया कोऽपि आत्मजनस्य कष्टं पश्यन् इति भाव:।

---

ধৌত কৌষেয় বসনের স্নানবস্ত্ররূপে ব্যবহারের ন্যায় ইনি মহিষী শব্দের উপযুক্তা হইয়াও পরিচারিণীরূপে ব্যবহৃতা হইয়াছেন ॥১২॥

দেবী। ভগবতি! আপনি সৎকুলোৎপন্না মালবিকার পরিচয় না বলিয়া অন্যায় করিয়াছেন। (ছ)

देवी। किं विश्व तं कारणम्?। [किमिव तत् कारणम्?।] (क)

परि। इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशकेन साधुना मत्समक्षं समादिष्टा—संवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति। तदेवं भाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि। (ख)

---

(क) तत् भवत्या आच्छिन्नं कारणम् अस्याः प्रकृतवृत्तप्रकाशप्रतिबन्धसाधकं वस्तु किमिव कीदृशं, केन कारणेन भवती तत्प्रकाशकृपणा आसीत् इति श्रोतुमिच्छामीति भावः।

(ख) इयं मालविका, पितरि मालविकाया इति शेषः। जीवति सति, देवयात्रायां कस्यचित् देवस्य महोत्सवे आगतेन मिलितेन सिद्धः सफलतां प्राप्तः आदेशः वाणी यस्य तथाभूतेन,अतीतनिर्देशो वाचाम् अवश्यम्भाविफलकत्वसूचनाय। केनचित् सिद्धवाचा साधुना साधुपुरुषेण मम समक्षं समादिष्टा कथिता, संवत्सरमात्रं वर्षपरिमितं कालं, प्रेष्यभावं दास्यम् अनुभूय उपभुज्य। ततः संवत्सरकालात् परं सदृशभर्तृगामिनी योग्यपतिभागिनी। तत् तस्मात् एवम्भाविनं उक्तरूपम् आदेशं सिद्धादेशम्, अस्याः मालविकायाः, तव धारिण्याः पादशुश्रूषया चरणसेवया तव परिचारिकाभावेन इत्यर्थः। परिणमन्तं फलमुखम् अवेक्ष्य विज्ञाय, कालस्य आदेशस्य अन्तिमभागजननकालस्य प्रतीक्षया साधु न्याय्यमेव कृतं नतु अन्याय्यमिति भावः। पश्यामि जानामि। अन्यथा आदौ विज्ञापिता चेदियं त्वया त्यक्ता अभविष्यत् तदा अस्याः सौभाग्यं प्रति अहमेव प्रतिबन्धिका अभविष्यमिति तात्पर्य्यम्।

---

পরি। না, না। আমি কোনও কারণে এইরূপ নিষ্ঠুরতা অবলম্বন করিয়াছিলাম। (ক)

দেবী। সে কারণ কি? (ক)

রাজা। যুক্তা প্রতীক্ষা। (গ)

কঞ্চু। দেব! কথান্তরেণান্তরিতম্। অমাত্যো বিজ্ঞাপয়তি। —বিদর্ভগতমনুষ্ঠেয়মনুষ্ঠিতমভূত্। দেবস্য তাবদভিপ্রায়ং শ্রোতুমিচ্ছামীতি। (ঘ)

রাজা। মৌদ্গল্য! তত্রভবতোর্যজ্ঞসেনমাধবসেনয়োর্দ্বৈরাজ্যমিদানীমবস্থাপয়িতুকামোঽস্মি। (ঙ)

---

(গ) প্রতীক্ষা অস্যাঃ সিদ্ধাদেশফলকালাপেক্ষা যুক্তা ন্যায্যা তবেতি শেষঃ। অস্যা ভবদাত্মজনত্বেন সৌভাগ্যং প্রতি অনুকূলতায়া এব যোগ্যত্বাদিতি ভাবঃ।

(ঘ) কথান্তরেণ প্রস্তুতবিষয়াত্ অপরেণ সংবাদেন অমাত্যবিজ্ঞাপনীয়েন ইত্যর্থঃ। অন্তরিতং দূরে স্থিতং, তথাহি ভবতামনেন প্রস্তুতবচনেন প্রয়োজনীয়ং কিমপি কথান্তরম্ অহং বক্তুং ন পারয়ামীতি ভাবঃ। বিদর্ভগতং বিদর্ভদেশসম্বন্ধি অনুষ্ঠেয়ং কর্ত্তব্যং বস্তু অনুষ্ঠিতং সম্পাদিতম্ অভূত্, দেবস্য মহারাজস্য অভিপ্রায়ম্ অভিমতং শ্রোতুমিচ্ছামি, তথাহি বিদর্ভরাজস্য শাসিতস্য কিং করণীয়ং তদাদেষ্টুমর্হতি মহারাজ ইতি ভাবঃ।

---

পরি। ইঁহার পিতার জীবদ্দশায় দেবোৎসব উপলক্ষে সমাগত শুভাশুভবক্তা কোনও সন্ন্যাসী আমার সমক্ষে ইঁহার কথা বলিয়াছিলেন যে, ইনি এক বৎসর মাত্র পরিচারিকারূপে থাকিয়া যোগ্য পতি লাভ করিবেন। সেজন্য ইঁহার এইরূপ ভবিষ্যদ্ বাণী আপনার পাদসেবা দ্বারা ফলিতেছে দেখিয়া কাল প্রতীক্ষা করিয়া আমি ভালই করিয়াছি দেখিতেছি। (খ)

রাজা। প্রতীক্ষা করা উচিতই হইয়াছে। (গ)

কঞ্চু। মহারাজ! কথায় কথা চাপা পড়িয়াছে। অমাত্য নিবেদন করিতেছেন যে, বিদর্ভ-দেশসম্বন্ধে যাহা কর্ত্তব্য, তাহা ত করা হইয়াছে। এখন মহারাজের অভিপ্রায় শুনিতে ইচ্ছা করি। (ঘ)

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तन्दिवं विभज्योभौ शीतोष्णकिरणाविव ॥१३

[ अन्वयः । शीतोष्णकिरणौ नक्तन्दिवमिव उभौ पृथक् उत्तरदक्षिणे वरदाकूले विभज्य तौ शिष्टाम् । १३ ]

कञ्चु । देव ! एवममात्यपरिषदे विज्ञापयामि किम् ? (च)

---

(ङ) मौद्गल्य इति कञ्चुकिनः संज्ञा । द्वे राज्ये ययोः तयोर्भावः, पृथक् पृथक् राज्यभागित्वमित्यर्थः । द्वौ पृथक् पृथक् राजानम् उपभुञ्जातामिति ममाभिमतमिति भावः । अवस्थापयितुकामः संस्थापयितुकामः अस्मि, "तुमः काममनसो" रिति तुमो मकारलोपः ।

१३ । अथ द्वैराज्यप्रकारमेवाह—ताविल्यादिना । उभौ तौ यज्ञसेनमाधवसेनौ नक्तन्दिवं रजनीं दिवसञ्च विभज्य समविभागेन आत्माधिकततया निर्द्दिश्य शीतोष्ण-किरणौ शीतकिरणः चन्द्रः उष्णकिरणः सूर्य्यश्च इव पृथक् भिन्नभावेन वरदाकूले वरदा-नद्याः तीरे उत्तरदक्षिणे उत्तरभागे दक्षिणभागे च शिष्टां निजशासनं चालयताम् । तथाहि यथा विधातुः निर्द्देशेन विभुमपि कालं नक्तन्दिवविभागेन विभज्य शितोष्ण-किरणौ अधिकुरुतः तथैव ममादेशेन यज्ञसेनमाधवसेनौ वरदाकूलस्योत्तरं दक्षिणञ्च भागं विभज्य अधिकुरुताम्, जातु परस्परं न विरोधं कुरुतामिति भावः । अत्र यज्ञसेन-माधवसेनयोः शितोष्णकिरणाभ्यां सह साम्यप्रत्ययात् उपमा स्पष्टा ।

(च) एवं भवता उक्तरूपं वस्तु, अमात्यपरिषदे मन्त्रिसमूहाय विज्ञापयामि कथयामि किमिति काक्वा प्रश्नो व्यज्यते ।

---

রাজা। মৌদ্গল্য ! মাননীয় যজ্ঞসেন ও মাধবসেনের জন্ম পৃথক্ পৃথক্ দুইটী রাজ্য স্থাপন করিতে ইচ্ছা করি। (ঙ)

যেমন চন্দ্র ও সূর্য্য বিভাগক্রমে রাত্রি ও দিন অধিকার করিয়া থাকেন, তেমন তাঁহারাও পৃথক্ পৃথক্ ভাবে বরদানদীর উত্তর ও দক্ষিণ তীর শাসন করুন ॥১৩॥

राजा । [ अङ्गुल्यानुमन्यते । ] (छ)

[ निष्क्रान्तः कञ्चुकी ]

प्रथ । (जनान्तिकम् ।) **भट्टिदारिए ! दिट्ठिआ भट्टिदारओ अद्धरज्जे पड़िट्ठं गमिस्सदि ।** [ भर्तृदारिके ! दिष्ट्या भर्तृदारकः अर्द्धराज्ये प्रतिष्ठां गमिष्यति । ] (ज)

माल । **एटं दाव बहुमण्णिदव्वं जं जीविदसंसआदो विमुक्तो ।** [ एतत्तावत् बहु मन्तव्यं यत् जीवितसंशयाद्विमुक्तः । ] (झ)

(प्रविश्य कञ्चुकी ।)—**विजयतां देवः । देव ! अमात्यो विज्ञापयति—कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येतदेव दर्शनम् । कुतः ? (ञ)**

---

(छ) अङ्गुल्या अङ्गुलीसङ्केतेन । अनुमन्यते अनुमोदते एवं मन्त्रिपरिषदं विज्ञापय इति बोधयतीत्यर्थः ।

(ज) जनान्तिकलक्षणमुक्तपूर्व्वमन्यत्र । दिष्ट्या भाग्येन भर्तृदारकः राजकुमारः माधवसेनः मालविकायाः भ्राता अर्द्धराज्ये प्रतिष्ठां राजरूपेण पदं गमिष्यति लप्स्यते ।

(झ) एतत् वक्ष्यमाणं तावत् प्रथमतः बहुमन्तव्यम् अभ्यर्थनीयं यद्‌जीवितसंशयात् प्राणसंशयात् विमुक्तः, तथाहि सः राजा भविष्यतीत्येव यथा न मे हर्षः तस्य जीवनलाभेन ततोऽधिकतरो हर्ष इति भावः ।

---

কঞ্চু । দেব ! অমাত্য-পরিষদে কি এইরূপই জানাইব ? (চ)

( রাজা অঙ্গুলী সঙ্কেত দ্বারা অনুমোদন করিলেন ) (ছ)

( কঞ্চুকীর প্রস্থান )

প্রথ । ( জনান্তিকে ) রাজকুমারি ! সৌভাগ্যক্রমে কুমার অর্দ্ধরাজ্যে প্রতিষ্ঠিত হইলেন । (জ)

মাল । ইহাই যথেষ্ট মনে করা উচিত যে, তিনি জীবনসংশয়াবস্থা হইতে মুক্ত হইয়াছেন । (ঝ)

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव संग्रहीतुः।
तौ स्थास्यतस्ते नृपते निदेशे
परस्परावग्रहनिर्विकारौ ॥१४॥

[ अन्वयः। नृपते! द्विधा विभक्तां धुरम् उद्वहन्तौ रथाश्वौ परस्परावग्रह-निर्व्विकारौ ( सन्तौ ) संग्रहीतुरिव (द्विधा) विभक्तां श्रियम् [ उद्वहन्तौ ] तौ ते निदेशे स्थास्यतः। १४ ]

---

(ञ) देवस्य महाराजस्य बुद्धिः मतिः कल्याणी शुभकरी, अन्यथा कथं शात्रव-माचरते यज्ञसेनायापि राज्यदानमिति भावः। मन्त्रिपरिषदः सचिवसमूहस्य। एतदेव भवता अनुमतरूपमेव दर्शनं ज्ञानम्। तथाहि मन्त्रिणोऽपि भवदनुमतमेव निर्द्धारितवन्त इति भावः। मन्त्रिपरिषद इति बहुवचननिर्द्देशात् बहूनामत्र ऐकमत्यं प्रतिपादितं, तेन च विषयस्यास्य निर्द्दोषत्वमुपपद्यते।

१४। हे नृपते नरनाथ! द्विधा भागद्वयेन विभक्तां, विभागं गतां धुरं भारं रथस्येति शेषः। उद्वहन्तौ अवलम्बमानौ रथस्य अश्वौ घोटकौ परस्परावग्रहनिर्व्विकारौ अन्योन्याक्रमणमुक्तौ सन्तौ संग्रहीतुं नियन्तुरिव द्विधा विभक्तां वरदायास्तीरद्वये भागद्वयेन निष्पादितां श्रियं राज्यलक्ष्मीम् उद्वहन्तौ लभमानौ तौ यज्ञसेनमाधवसेनौ परस्परावग्रहे परस्परस्य आक्रमणे अन्योन्यवैरसाधने इत्यर्थः। निर्व्विकारौ निरुत्कण्ठितौ सन्तौ ते तव निदेशे स्थास्यतः। सर्व्वथा तवादेशेन तौ निर्व्विग्रहमेव शान्तं वर्त्तिष्येते इति भावः। अत्र उपमा स्पष्टा। उपजातिर्वृत्तम्।

---

( কঞ্চুকীর প্রবেশ )

কঞ্চু। মহারাজের জয় হউক। দেব! অমাত্য জানাইতেছেন যে, মহারাজের অভিলাষ সাধু। মন্ত্রিপরিষদেরও ইহাই সিদ্ধান্ত। (ঞ)

হে রাজন্! যেমন রথাশ্বযুগল পরস্পর আক্রমণের অভিপ্রায় ত্যাগ করিয়া সারথির বশে থাকিয়া দুইভাগে বিভক্ত রথভার বহন করিয়া

राजा। तेन हि मन्त्रिपरिषदं ब्रूहि, सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति। (ट)

कञ्चु। यदाज्ञापयति देवः। (इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य) अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात् सोत्तरीयप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः। (ठ)

---

(ट) तेन मन्त्रिपरिषदोऽपि अत्रैव सम्मतिसत्त्वेन इत्यर्थः। मन्त्रिपरिषदं मन्त्रिसमूहम्। सेनान्ये सेनानायकाय। वीरसेनाय तदाख्याय, तदुद्देशेन इत्यर्थः। लेख्यतां मन्त्रिपरिषदा केनचित् लेखकेनेति शेषः। लेख्यमेवाह एवं क्रियताम् इति एवं कथितप्रकारेण वरदाकूले द्वयोः विभागेन राज्यं परिकल्प्यतामिति भावः।

(ठ) सप्राभृतकम् उत्तरीयरूपोपढौकनयुक्तं लेखम् उक्तलिपिं, प्रभोः राज्ञः भवतः आज्ञा इतःपूर्व्वं कृतः आदेशः अनुष्ठिता आचरिता, सम्पादिता इत्यर्थः। सोत्तरीयप्राभृतकः उत्तरीयरूपोपहारयुक्तः। एनं सोत्तरीयप्राभृतकं लेखं प्रत्यक्षीकरोतु पश्यतु।

---

থাকে, তেমন তাঁহারাও পরস্পরের আক্রমণে উদাসীন হইয়া আপনার অধীনে দ্বিধা বিভক্ত রাজ্যভার বহন করিবেন॥১৪॥

রাজা। তাহা হইলে, মন্ত্রিগণকে বল যে,—এইরূপ করিতে হইবে বলিয়া সেনানী বীরসেনকে পত্র লিখুন। (ট)

কঞ্চু। মহারাজের যেরূপ আজ্ঞা। (এই বলিয়া প্রস্থান করিয়া উপঢৌকনসহ পত্র লইয়া পুনঃপ্রবেশ করিয়া) প্রভুর আদেশ-প্রতিপালিত হইয়াছে। সেনাপতি পুষ্পমিত্রের নিকট হইতে এই উত্তরীয়উপঢৌকন সহ পত্র আসিয়াছে; মহারাজ ইহা প্রত্যক্ষ করুন। (ঠ)

( রাজা উত্থায় সপ্রাভৃতকং লেখং সোপচারং গৃহীত্বা পরিজনায়ার্পয়তি। ) (ড)

( পরিজনো লেখং নাট্যেনোদ্ঘাটয়তি। ) (ঢ)

দেবী। (আত্মগতম্।) **অম্মহে! তদোমুহং এব্ব ণো হিঅঅং। সুণিস্সং দাব গুরুঅণস্স কুসলাণন্তরং বসুমিত্তস্স বুত্তন্তং। অদিভারে ক্খু পুত্তও সেণাবদিণা ণিউত্তো।** [অম্মহে! ততোমুখমেব নো হৃদয়ম্। শ্রোষ্যামি তাবৎ গুরুজনস্য কুশলানন্তরং বসুমিত্রস্য বৃত্তান্তম্। অতিভারে খলু পুত্রকঃ সেনাপতিনা নিযুক্তঃ।] (ণ)

রাজা। (উপবিশ্য লেখং সোপচারং গৃহীত্বা বাচয়তি।) **স্বস্তি। যজ্ঞশরণাৎ সেনাপতিঃ পুষ্পমিত্রো বৈদিশস্থং পুত্রমায়ুষ্মন্ত-**

---

(ড) উপচারেণ কর্ত্তব্যেন প্রণামাদিনা সহ বর্ত্তমানং, গুরুজনপত্রাদিকং নমস্কারপূর্ব্বকং গ্রাহ্যমিতি ব্যবহারঃ।

(ঢ) নাট্যেন অভিনয়েন উদ্ঘাটয়তি উন্মোচয়তি।

(ণ) অম্মহে ইতি শৌরসেন্যাদিভাষাসু হর্ষাশ্চর্য্যাদিষু ব্যবক্রিয়তে। ততোমুখং বসুমিত্রোন্মুখমেব নঃ অস্মাকং হৃদয়ম্ অন্তঃকরণং, তথাহি অস্মাকং হৃদয়ং বসুমিত্রবৃত্তান্তশ্রবণায় এব সমুৎকণ্ঠিতম্ ইত্যর্থঃ। গুরুজনস্য পুষ্পমিত্রস্য কুশলানন্তরং শুভসংবাদশ্রবণানন্তরং বসুমিত্রস্য পুত্রস্য তদাখ্যস্য বৃত্তান্তং ব্যাপারং শুভসংবাদমিত্যর্থঃ। অতিভারে অতিগুরুতরে সংগ্রামব্যবহারে, পুত্রকঃ ক্ষুদ্রঃ দয়ার্হঃ বা বসুমিত্রো নাম তনয়ঃ সেনাপতিনা বৃহদ্রথসেনাপতিনা পুষ্পমিত্রেণ নিযুক্তো ব্যাপারিতঃ।

---

(রাজা উঠিয়া সবিনয়ে উপহারসহ পত্র গ্রহণ করিয়া পরিজনের নিকট দিলেন। ) (ড)

( পরিজন নাট্যে পত্র উন্মোচন করিল। ) (ঢ)

দেবী। (স্বগত) আহা! আমার হৃদয় তাঁহার প্রতি উন্মুখ হইয়াই আছে। এক্ষণে গুরুজনের কুশলশ্রবণানন্তর বসুমিত্রের সংবাদ শুনিব। সেনাপতি বৎসকে অতি গুরুতর কার্য্যে নিয়োগ করিয়াছেন। (ণ)

मग्निमित्रं स्नेहात् परिष्वज्येदमनुदर्शयति। विदितमस्तु— योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपात्तनियमो निरर्गलस्तुरङ्गमो विसृष्टः, स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः। तत उभयोः सेनयोर्महानासीत् संमर्दः। (त)

---

(त) सोपचारं सप्रणामं, वाचयति पठति स्वयमिति शेषः। स्वस्तीत्यादि पत्रलिखितं वस्तु। यज्ञशरणात् यज्ञगृहात्, वैदिशस्थं विदिशानगरस्थितम्, आयुष्मन्तं दीर्घायुषं, स्नेहात् स्नेहवशात्, परिष्वज्य समाश्लिष्य इदं वक्ष्यमाणं वस्तु अनुदर्शयति विज्ञापयति, विदितमस्तु तव विज्ञातमस्तु इत्यर्थः। राजयज्ञे राज्ञा कर्त्तव्ये अश्वमेधयागे दीक्षितेन गृहीतव्रतेन, राजपुत्रशतपरिवृतं शतराजकुमारवेष्टितं, गोप्तारं रक्षितारं वत्सरं यावत् उपात्तः गृहीतः नियमः व्रतं येन तथाभूतः, निरर्गलः निर्व्विघ्नः तुरङ्गमः अश्वः विसृष्टः दिशि प्रस्थापितः, तथाहि शतराजपुत्रपरिवृतस्य वसुमित्रस्य सैनापत्येन अश्वमेधाश्वः विसृष्ट इत्यर्थः। सः अश्वः सिन्धोः सिन्धुनदस्य दक्षिणे रोधसि दक्षिणे तीरे, अश्वानीकेन आश्विकबलेन यवनेन म्लेच्छराजभेदेन प्रार्थितः सहसा आक्रान्तः। उभयोः सेनयोः वसुमित्रसेनायाः यवनसेनायाश्च। सम्मर्द्दः परस्परं विग्रहः जात इति शेष। अत्रेदं पुरावृत्तमनुसन्धेयं यथा—पुष्यमित्रो नाम विम्बककुलोत्पन्नो राजा मौर्य्यवंश-तिलकं स्वप्रभुं बृहद्रथं हत्वा तदीयराजधान्यां पाटलिपुत्राभिधानायां राजत्वमाचरन् निजपुत्रम् अग्निमित्रं विदिशानगरे राजपदे व्यवस्थापयामास इति। अश्वमेधप्रकरणे—"शतेन राजपुत्रैः सह"इत्यादिनियमानुरोधात् वसुमित्रस्य शतराजकुमारपरिवारेण प्रस्थापनमिति। कलियुगे अश्वमेधस्य कर्त्तव्यतानिषेधश्रवणेऽपि देशविशेषेषु तन्निषेध-शास्त्राप्रमाणात् तदाचरणं न दोषाय। दृश्यते च मृच्छकटिके तत्काव्यकारस्य शूद्रकस्य लेखादेव तस्य अश्वमेधाचरणं यथा "परममसुदयेनाश्वमेधेन"इत्यादि।

---

(রাজা উপবেশনপূর্ব্বক শিষ্টাচারের সহিত পত্র লইয়া পাঠ করিতে আরম্ভ করিলেন।) স্বস্তি। সেনাপতি পুষ্পমিত্র যজ্ঞস্থান হইতে বিদিশানগরীস্থিত

( देवी विषादं नाटयति । ) (थ)

राजा । कथमीदृशं संवृत्तम् ! ( पुनर्वाचयति । ) (द)

ततः परान् पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्त्तितः ॥१५॥

[ अन्वयः । ततः धन्विना वसुमित्रेण परान् पराजित्य प्रसह्य ह्रियमाणः मे वाजिराजः निवर्त्तितः । १५ ]

---

(थ) विषादं दुःखं नाटयति अभिनयति, पुत्रस्य शत्रुभिः सह संग्रामे अमङ्गलाशङ्कया इति भावः ।

(द) कथं केन हेतुना ईदृशं सिन्धुतीरे यवनराजैः सह पुत्रस्य वसुमित्रस्य युद्धं संवृत्तम्, अश्वमेधचारिणां राज्ञाम् अश्वमेधाचरणयोग्यतावद्भिरेव प्रतिरोधः सम्भवति नतु तदाचरणयोग्यताशून्यैः म्लेच्छराजैः इति भावः । अथवा दृढ़म् आयत्तीकृतेऽपि सिन्धुतीरे यवनानामीदृशमौद्धत्यमेव आश्चर्य्यजनकमिति भावः । पुनः वाचयति अवशिष्टमंशमिति शेषः ।

१५ । ततः उभयोः पक्षयोः महतः संमर्द्दात् परं, धन्विना प्रशस्तधनुर्धारिणा धनुषि प्राप्तप्रकर्षेण इत्यर्थः । वसुमित्रेण तदाख्येन कुमारेण परान् यवनसैनिकात्मकान्

---

আয়ুষ্মান্ পুত্র অগ্নিমিত্রকে সস্নেহে আলিঙ্গনপূর্ব্বক জানাইতেছেন ;—অবগত হও যে, আমি রাজানুষ্ঠেয় (অশ্বমেধ) যজ্ঞে দীক্ষিত হইয়া একশত রাজপুত্রপরিবৃত বসুমিত্রকে রক্ষকরূপে নিয়োগপূর্ব্বক যে অশ্বটীকে একবৎসরের জন্য বন্ধন মোচন করিয়া ছাড়িয়া দিয়াছি, সেই অশ্বটী সিন্ধুনদের দক্ষিণতীরে বিচরণকালে অশ্বারোহিসৈন্যসহায় একজন ম্লেচ্ছ-কর্ত্তৃক ধৃত হয়। অনন্তর উভয় সৈন্যে ঘোরতর সংগ্রাম হইয়াছিল। (ত)

( দেবী বিষাদের অভিনয় করিলেন) (থ)

রাজা। কেন এরূপ হইয়াছে ? (পুনরায় পাঠ) (দ)

देवी। इमिणा आस्ससिदं मे हिअअं। [अनेन आश्वस्तं मे हृदयम्।] (ध)

राजा। (लेखशेषं वाचयति) सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति। (न)

---

शत्रून् पराजित्य पराभूय प्रसह्य सहसा ह्रियमाणः बलेन आक्रन्द्यमानः मे मम वाजिराजः अश्वमेधोपकरणतया प्रशस्तोऽश्वः निवर्तितः प्रत्यावर्त्तितः प्रत्याहृत इत्यर्थः। अत्र प्रथमपादे परान् परेति व्यञ्जनानां स्वरूपतः क्रमतश्च सकृदावृत्त्या छेकानुप्रासः वाजिराज इत्यत्र जकारस्य एकस्य सकृत् साम्यात् वृत्त्यनुप्रासश्चेति संसृष्टिः।

(ध) अनेन पुत्रस्य वसुमित्रस्य शत्रुविजयाकर्णनेन। आश्वसितं प्राक् प्राप्तविषाद-मिदानीं समाश्वस्ततां प्राप्तम्।

(न) लेखस्य शेषम् अवशिष्टांशम्। सोऽहमित्यादिरेव अवशिष्टांशः। अंशुमता तदाख्येन पौत्रेण पुत्रपुत्रेण, सगरः तदाख्यः सूर्य्यवंशीयः राजा इव पौत्रेण पुत्रस्य अग्निमित्रस्य पुत्रेण वसुमित्रेण प्रत्याहृतः शत्रुसमाक्रमणात् उद्धृतः अश्वः यज्ञसाधनीभूतस्तुरङ्गः यस्य तथाभूतः, यक्ष्ये अश्वमेधेन इति शेषः। तत् तस्मात् मया यज्ञस्य करिष्यमाणत्वात् इत्यर्थः। अकालहीनम् अविलम्बं विगतः अपसृतः रोषः सिन्धुतीरस्थानां यवनानाम् अकाले प्रसह्य अश्वाक्रमणवशात् जात इत्यर्थः, यस्मात् तथाभूतं चेतः यस्य तथाभूतेन परिहृतक्रोधेन भवता वधूजनेन धारिण्यादिभिः राज्ञीगणैः सह,

---

অনন্তর ধনুর্দ্ধর বসুমিত্র শত্রুপরাজয় করিয়া বলপূর্ব্বক নীয়মান অশ্বটীকে প্রত্যানয়ন করিয়াছে ॥ ১৫ ॥

দেবী। ইহাতে আমার হৃদয় আশ্বস্ত হইল। (ধ)

রাজা। (পত্রের অবশিষ্টাংশ পাঠ করিলেন) সগর যেমন পৌত্র অংশুমান্ কর্ত্তৃক প্রত্যাহৃত অশ্বদ্বারা যজ্ঞ করিয়াছিলেন, তেমন আমিও

राजा। **अनुगृहीतोऽस्मि। (प)**

परि। **दिष्ट्या पुत्रविजयेन दम्पती वर्द्धेते। (फ)**

**भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि।**

**वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥ १६॥**

[ अन्वयः। भर्त्रा श्लाघ्यानां वीरपत्नीनां धुरि स्थापिता असि। अयं वीरसूः इति शब्दः तनयात् त्वाम् उपस्थितः। १६ ]

---

यज्ञस्य मया करिष्यमाणस्य अश्वमेधस्य सेवनाय अवलोकनाय आगन्तव्यम् इत्यन्तः अवशिष्टपत्रांशः। अत्रेदं पुरावृत्तमनुसन्धेयं यथा—सगरो नाम राजा अश्वमेधयागकाम्यया अश्वमेधोपयोगिनमश्वं दिशि प्रास्थापयत्। अथ वासवो मेध्यं तमश्वमाहृत्य पाताले ध्यानमग्नस्य कपिलस्य समीपे कुत्रचिद्वृक्षे बद्धवान्, ततः सगरस्य षष्टिसहस्रतनयाः सर्वत्र मर्त्यभूमौ अन्विष्यापि तमलब्ध्वा परतः पाताले प्रविश्य कपिलान्तिके बद्धं ददृशुः। ततोऽमी कपिलमेव मेध्याश्वहर्त्तारमवेत्य यदैव तमाजघ्नुस्तदैव कपिलमहसा भस्मीभूता अभवन्। सगरस्य च भानुमत्यां भार्य्यायां जातस्य असमञ्जस्य पुत्रः अंशुमान् पुनस्तमश्वमाजहार, तेन च सगरो यज्ञं साधयामास इति।

(प) अनुगृहीतः कृतप्रसादः, सागृहं पितुर्निमन्त्रणलाभात् पुत्रस्य विपन्मुक्तस्य दर्शनसम्भवाच्च।

(फ) दिष्ट्या भाग्येन, पुत्रस्य वसुमित्रस्य विजयेन यवनशत्रुपराभवजनितेन प्रकर्षेण, दम्पती राजा राज्ञी च वर्द्धेते, दम्पती उद्दिश्य परिव्राजिकाया एतत् वचनम्।

१६। भर्त्रा स्वामिना अग्निमित्रेण श्लाघ्यानां प्रशस्तानां वीरपत्नीनां वीरस्वामिकानां नारीणां धुरि अग्रे स्थापिता प्रतिष्ठिता असि, तथाहि तव स्वामी समस्तानां वीराणां

---

এখন পৌত্রপ্রত্যাহৃত অশ্বে যজ্ঞ করিব। অতএব অবিলম্বে ক্রোধ-পরিহারপূর্ব্বক বধূগণের সহিত তুমি যজ্ঞদর্শনে আগমন করিবে। (ন)

রাজা। অনুগৃহীত হইলাম। (প)

পরি। সৌভাগ্যক্রমে পুত্রবিজয়ে দম্পতী সুখী হইলেন। (ফ)

देवी। भअवदि! परितुट्टह्मि, जं पिदरं अणुजादो मे वच्छओ।

[ भगवति ! परितुष्टास्मि, यत् पितरमनुजातो मे वत्सकः। ] (व)

राजा। मौद्गल्य! ननु कलभेन यूथपतिरनुकृतः। (भ)

कञ्चु। देव! अयं कुमारः। (म)—

---

प्रधाने पदे व्यवस्थित इति स्वामिसौभाग्येन त्वमतिश्लाघ्या इति भावः। वीरसूः वीरतनय-प्रसूः इति अयं शब्दः त्वां तनयात् वीरप्रधानात् वसुमित्राख्यात् पुत्रात् उपस्थितः वाच्यता-सम्बन्धेन प्राप्तः। तथाहि पुत्रस्य सौभाग्येनापि इदानीं त्वं सुतरां श्लाघ्यपदे व्यवस्थिता असीति भावः। अत्र भङ्ग्या देव्याः स्वामिनः अग्निमित्रस्य पुत्रस्य वसुमित्रस्य च महावीरत्वसूचनात् पर्य्यायोक्तालङ्कारः। वीरः पतिर्यस्येति बहुव्रीहौ 'पत्युर्नो यज्ञ'इति नकार ईप्रत्ययश्च। वीरं सूते या सा वीरसूरिति वीरशब्दोपपदात् सूधातोः क्विपि रूपम्।

(व) परितुष्टा प्राप्तसन्तोषा अस्मि अहमिति शेषः। यत् यस्मात् मे मम वत्सकः स्नेहभाजनीभूतो मे बालः वसुमित्रः पितरं स्वीयं जनकम् अग्निमित्रम् अनुयातः अनुगतः, तथाहि पितृतुल्यो वत्सो वीरो जात इत्येव हर्षकारणमिति भावः।

(भ) कलभेन करिशिशुना, यूथपतिः करिराजः अनुकृतः सदृशीकृतः, तथाहि यथा करिराजस्य तुलनया कलभस्य कार्य्यकारित्वमाश्चर्य्यकरं तथैव महावीरतुलनया अस्य शिशोर्वसुमित्रस्य यवनपराजय आश्चर्य्यकर इति भावः। उक्तामर्थमादाय अप्रस्तुत-प्रशंसालङ्कारः।

(म) अयं कुमारः वसुमित्रः अस्य भागस्य पश्चाद्‌र्ध्वेनान्वयः।

---

আপনি পতির জন্য শ্লাঘ্য বীরপত্নীগণের অগ্রগণ্যা হইয়াছেন, আর পুত্র হইতে 'বীরপ্রসূ' আখ্যা লাভ করিলেন ॥ ১৬ ॥

দেবী। ভগবতি! বৎস যে তাহার পিতার মত হইয়াছে—ইহাতে আহ্লাদিত হইলাম। (ব)

রাজা। মৌদ্গল্য! করিশাবক মাতঙ্গরাজের অনুকরণ করিয়াছে। (ভ)

কঞ্চু। দেব! এই কুমার। (ম)—

नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति ।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-
रग्नेरपां दग्धुरिवोरुजन्मा ॥ १७ ॥

[ अन्वयः । ( कुमारः ) एतावता वीरविजृम्भितेन नः चित्तस्य विस्मयं न आदधाति । यस्य अप्रधृष्यः त्वम् अपां दग्धुः अग्नेः ऊरुजन्मा इव उच्चैः प्रभवः । १७]

---

१७ । एतावता उक्तरूपेण असाधारणेन वीरविजृम्भितेन वीरोचितक्रियाकलापेन नः अस्माकं चित्तस्य मनसः विस्मयम् आश्चर्यं न आदधाति जनयति, तत्रैव कारण-मुपन्यस्यति—यस्येत्यादि । यस्य वीरस्य कुमारस्य वसुमित्रस्य अप्रधृष्यः अनिवार्य्यः केनचित् विमर्द्दयितुमशक्य इत्यर्थः । त्वम् अपां जलानां दग्धुः शोषयितुः जलदाहकस्य अग्नेः अनलस्य वड़वानलस्य इत्यर्थः । ऊरुजन्मा और्व्वो मुनिरिव उच्चैः उन्नतः प्रभवः उत्पत्तिस्थानं, तथाहि यथा और्व्वात् मुनेः जातस्य वड़वानलस्य समुद्रसलिलशोषणं न विस्मयकरं तथा त्वत्तः जातस्य वसुमित्रस्यापि एतत्पराक्रमो न विस्मयकर इति भावः । अत्र पूर्व्वार्द्धप्रतिपाद्यार्थं प्रति परार्द्धप्रतिपाद्यार्थस्य हेतुतया उपन्यासात् काव्य-लिङ्गमलङ्कारः । स च अन्तिमपादप्रस्तुतेन उपमालङ्कारेण सङ्कीर्णः । उपजातिर्वृत्तम् । अत्रेदं पुरावृत्तमनुसन्धेयम् यथा—भगवान् मुनिरौर्व्वो नाम स्वीयमूरुम् अनले प्रवेश्य पुत्रनिमित्तं दर्भेण मथितवान्, ततस्ततो वह्निरूपः पुत्रो जातः पितरमूरुमाह,—तात ! जगदहं धक्ष्यामीति । अथ भुवनपालको ब्रह्मा और्व्वमुपेत्य वह्निरूपस्य पुत्रस्य वड़वामुखे स्थितिं समुद्रजलपानञ्च ययाचे, और्व्वोऽपि तं तथाकारिणं सन्दिश्य परितत्याज इति ।

---

সমুদ্রশোষী বাড়বানলের উৎপাদক ঔর্ব্বঋষির ন্যায় যাঁহার জনক আপনি, সেই কুমারের ঈদৃশ শৌর্য্যপ্রকাশ আমাদের চিত্তে বিস্ময় উৎপাদন করে না ॥ ১৭ ॥

राजा। मौद्गल्य! यज्ञसेनश्यालप्पमुहं (?) मोच्यन्तां सर्वे बन्धनस्थाः। (य)

कञ्चु। यदाज्ञापयति देवः। (इति निष्क्रान्तः।) (र)

देवी। जअसेणि! गच्छ, इरावदिप्पमुहाणं अन्तेउराणं पुत्तस्स वुत्तन्तं णिवेदेहि। [जयसेने! गच्छ, इरावतीप्रमुखानामन्तःपुराणां पुत्रस्य वृत्तान्तं निवेदय।] (ल)

[प्रतीहारी प्रस्थिता।] (व)

देवी। एहि दाव। [एहि तावत्।] (श)

---

(य) यज्ञसेनस्य श्यालं तस्य भार्य्यायाः भ्रातरम् उरीकृत्य आदौ यथेष्टभावेन गमनमादिश्य सर्वे बन्धनस्थाः अपरे कारागारबद्धाः पुरुषाः मोच्यन्तां मुक्तिं लभ्यन्तां, तदधिकारिभिरिति शेषः। पुत्रस्य विजयवार्त्ताश्रवणमहोत्सवादियं कारागारमुक्तिरिति बोध्यम्।

(ल) इरावतीप्रमुखाणाम् इरावतीप्रभृतीनाम् अन्तःपुराणाम् अन्तःपुरमहिलानां कथनार्थधातुयोगे षष्ठी। पुत्रस्य वसुमित्रस्य वृत्तान्तं वर्त्तमानविजयव्यापारं निवेदय विज्ञापय।

(व) प्रतीहारी जयसेना, प्रस्थिता प्रस्थातुमुपक्रान्ता, आदिकर्म्मणि क्तप्रत्ययः।

(श) एहि आगच्छ मत्समीपे कस्यचित् संवादस्य श्रवणाय इति शेषः।

---

राजा। মৌদ্গল্য! যজ্ঞসেনের শ্যালকপ্রমুখ সমস্ত কারাবদ্ধ ব্যক্তিকে মোচন কর। (য)

কঞ্চু। মহারাজের যেরূপ আজ্ঞা। (এই বলিয়া প্রস্থান করিল।) (র)

দেবী। জয়সেনে! যাও ইরাবতী প্রভৃতি অন্তঃপুরিকাদিগকে পুত্রের বিজয়সংবাদ জ্ঞাপন কর। (ল)

[প্রতীহারীর প্রস্থান] (ব)

प्रती। ( प्रतिनिवृत्य। ) इअम्हि। [ इयमस्मि। ] (ष)

देवी। (जनान्तिकम्)। जं मए असोअदोहलणिओए मालविआए पड़िस्सादं, तं से अहिजणं अ णिवेदिअ मह वअणेण इरावदिं अणुणेहि। एतु अहं सच्चादो ण विब्भंसिदव्वेत्ति। [ यन्मया अशोकदोहदनियोगे मालविकायाः प्रतिज्ञातं, तत् अस्या अभिजनं च निवेद्य मम वचनेन इरावतीमनुनय। त्वया अहं सत्यान्न विभ्रंशयितव्येति। ] (स)

---

(ष) प्रतिनिवृत्य गमनात् परावृत्य, इयम् अस्मि अहमिति शेषः। कथयतु भवती इति भावः।

(स) अशोकस्य अगृहीतपुष्पस्य तपनीयाशोकस्य दोहदाय पादप्रहाररूपदोहद-व्यापाराय नियोगे निर्देशकाले, मालविकायाः सम्बन्धे यत् वस्तु तस्याः अभिप्रेतदानरूपं प्रतिज्ञातम् उत्तरकालकर्त्तव्यतया उपन्यस्तं, तत् प्रतिज्ञातं वस्तु अस्याः मालविकायाः अभिजनं महावंशसम्भवञ्च निवेद्य विज्ञाप्य, मम वचनेन मदीयवचनानुसारेण, अनुनय सान्त्वनावाक्येन बोधय, त्वया इरावत्या सत्यात् प्रतिज्ञायाः न विभ्रंशयितव्या स्खलयितव्या, तथाहि त्वं यदि मत वैरमाचरन्ती मालविकायाः अभिप्रेतदानं नानुमन्येथाः तदा अहं सत्यभ्रष्टा भवेयमिति ममोपरि कृपां कुर्वाणा असम्मतिं परिहरः इति भावः। एतावदनुनयप्रक्रमेण फलतो राज्ञे मालविकाया दानम् अनुमन्यतामिति तात्पर्य्यं प्रतीयते।

---

দেবী। এদিকে আইস। (শ)

প্রতী। (প্রত্যাবর্ত্তন করিয়া) এই আমি আসিয়াছি। (ষ)

দেবী। ( জনান্তিকে ) অশোকের দোহদসংকারের আদেশকালে আমার অঙ্গীকারের কথা এবং ইহার উচ্চবংশের কথা জানাইয়া আমার বাক্যে ইরাবতীকে সবিনয়ে বলিবে যে, তুমি আমাকে সত্যভ্রষ্ট করিও না। (স)

प्रति। जं देवी आणवेदि। (इति निष्क्रम्य पुनःप्रविश्य।) भट्टिणि! पुत्तबिजअणिमित्तेण परितोसेण अन्तेउराणं आहरणाणं मञ्जूसह्मि संवुत्ता। [यत् देवी आज्ञापयति। भर्त्रि! पुत्रविजयनिमित्तेन परितोषेण अन्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता।] (छ)

देवी। एदं किं अच्चरिअं? साधारणो णं अब्भुदओ। [एतत् किमाश्चर्य्यम्? साधारणो नन्वभ्युदयः।] (च)

प्रती। (जनान्तिकम्।) भट्टिणि! इरावदी विस्सवेदि—सरिसं क्खु पहुवीए पहवन्तीए तव वअणं। संकप्पिदे ण जुज्जदि अस्सहा कादुंत्ति। [भर्त्रि! इरावती विज्ञापयति—सदृशं खलु पृथिव्याः प्रभवन्त्यास्तव वचनम्। सङ्कल्पिते न युज्यते अन्यथा कर्तुमिति।] (क)

---

(छ) पुत्रविजयनिमित्तेन वसुमित्रस्य विजयसम्मानजन्येन परितोषेण सन्तोषेण अन्तःपुराणाम् अन्तःपुरिकाणां स्त्रीणाम् आभरणानाम् अलङ्काराणाम् अन्तःपुरिकागण-प्रतिपादितानां भूषणानामित्यर्थः। मञ्जुषा पेटिका अस्मि, तथाहि अन्तःपुरिका मह्यं परितोषेण बहूनलङ्कारान् प्रदत्तवत्य इति भावः।

(च) एतत् जातरूपं वस्तु किं कीदृशम् आश्चर्य्यं विस्मयकरम् अभ्युदयः एषा पुत्रस्य उन्नतिः, साधारणः सर्वासामेव अस्माकमन्तःपुरिकाणां समानः, अतएव एतावान् आनन्दः।

(क) तव वचनं प्रतीहारीमुखेन प्रेषितं मालविकाया अभिप्रेतदानविषयकं वाक्यमित्यर्थः। अथवा प्राक्प्रतिज्ञाया वचनमित्यर्थः। पृथिव्याः प्रभवन्त्याः सर्वस्यां

---

প্রতী। দেবী যেরূপ আদেশ করেন। (এই বলিয়া প্রস্থান ও পুনরায় প্রবেশ করিয়া) দেবি! পুত্রবিজয়ের আনন্দে অন্তঃপুরিকাগণ প্রভূত ভূষণ পুরস্কার করিয়া আমাকে অলঙ্কারের পেটিকা (সিন্দুক) স্বরূপ করিয়াছেন। (হ)

দেবী। ইহা আর আশ্চর্য্যের কথা কি? এ সুখ সকলেরই সমান। (ক্ষ)

देवी। भअवदि! तुए अणुमदा इच्छामि अज्जसुमदिणा पढ़मसंकप्पिदं मालविअं अज्जउत्तस्स पड़िवादेदुं। [भगवति! त्वया अनुमता इच्छामि आर्य्यसुमतिना प्रथमसङ्कल्पितां मालविकामार्य्यपुत्रस्य प्रतिपादयितुम्।] (ख)

परि। इदानीमपि त्वमेवास्याः प्रभवसि। (ग)

---

पृथिव्यां प्रभुपादमधिकृत्य इत्यर्थः। सदृशं योग्यम्। अथवा "त्वया अहं सत्यात् न विश्वंशयितव्या" इति वचनं सदृशं, त्वय्येव सत्यभङ्गभयं युज्यते महत्त्वाश्रयत्वादिति भावः। संकल्पिते कर्त्तव्यतया अवधारिते वस्तुनि विषये अन्यथा अन्यभावः कर्त्तुं न युज्यते सर्वथा संकल्पितं रक्षितव्यम् अतो ममात्र वाथमसम्मतिः स्यादिति भावः।

(ख) त्वया अनुमता आज्ञता राज्ञे मालविकादानविषये आदिष्टा सतीत्यर्थः। प्रथमसंकल्पिताम् आदौ एव आर्य्यपुत्रस्य दातव्यतया निश्चिताम्, आर्य्यपुत्रस्य प्रतिपादयितुं, मालविकायां धारिण्याः यथेष्टविनियोगार्हत्वरूपस्वत्वाभावविज्ञानात् आर्य्यपुत्रस्येति षष्ठीप्रयोगः। परे तु चतुर्थ्यर्थे षष्ठीति पिङ्गलवचनात् षष्ठीमाहुः।

(ग) इदानीमपि परिचितवंशमर्य्यादायामप्यस्यामिति, न केवलम् अज्ञातपरिचयावस्थायां निजपरिचारिकाकालेन ज्ञानकाल एव इति भावः। त्वमेव न अहमपीति। अस्याः मालविकायाः सम्बन्धे प्रभवसि प्रभुतां गच्छसि। तथाहि त्वमेव अन्यस्य कस्यापि मतमनपेक्ष्यैव यथेष्टमस्या नियोगे समर्थासि तत यथेष्टमेव प्रतिपाद्यतामियं राज्ञ इति भावः।

---

প্রতী। (জনান্তিকে) দেবি! ইরাবতী জানাইতেছেন যে, আপনার বাক্য সমস্ত পৃথিবীর প্রভুশক্তিমতী রাণীরই যোগ্য। সঙ্কল্পিত বিষয়ের অন্যথা করা উচিত নহে। (ক)

দেবী। ভগবতি! আর্য্য সুমতি প্রথমে যাহার বিষয় সঙ্কল্প করিয়াছিলেন—আপনি অনুমোদন করিলে, সেই মালবিকাকে আর্য্যপুত্রের হস্তে দান করিতে ইচ্ছা করি। (খ)

देवी। (मालविकां हस्ते गृहीत्वा।) इदं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पड़िच्छदु। [इदमार्य्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु।] (घ)

[राजा व्रीड़ां नाटयति।]

देवी। (सस्मितम्।) किं अवधीरेदि अज्जउत्तो। [किमवधीरयति आर्य्यपुत्रः।] (ङ)

विदू। भोदि! एसो लोअव्ववहारो। सव्वो णववरो लज्जादुरो होदि। [भवति! एष लोकव्यवहारः। सर्वो नववरो लज्जातुरो भवति।] (च)

[राजा विदूषकमवेक्षते।] (छ)

---

(घ) हस्ते हस्तावच्छेदेन। अवच्छेदे सप्तमी। प्रियनिवेदनस्य पुत्रविजयविज्ञापनस्य अनुरूपं योग्यं पारितोषिकं पुरस्कारं प्रतीच्छतु गृह्णातु। इदं मालविकारूपं वस्तु।

(ङ) सस्मितं राज्ञः व्रीड़ामवलोक्य इति शेषः। अवधीरयति प्रत्याचष्टे मया प्रतिपादितां मालविकामिति शेषः। परिहासवचनमेतत्।

(च) एष वक्ष्यमाणः लोकव्यवहारः लौकिको नियमः, नवः अचिरं परिणयबद्धः वरः कन्यायाः स्वामी लज्जातुरः व्रीड़ायुक्तः भवति, अतएव अस्य नववरस्य व्रीड़ावशात् मालविकाया ग्रहणवैमुख्यमिति भावः।

(छ) विदूषकम् अवेक्षते पश्यति विदूषकं राज्ञीवाक्यमुत्तरयितुं दृष्ट्या प्रयोजयति।

---

परि। এখনও আপনিই ইহার কর্ত্তা। (গ)

দেবী। (মালবিকার হস্তধারণপূর্ব্বক) আর্য্যপুত্র! এই প্রিয়সংবাদের অনুরূপ পারিতোষিক গ্রহণ করুন। (ঘ)

[রাজা লজ্জার অভিনয় করিলেন।]

দেবী। (ঈষৎ হাস্যের সহিত) আর্য্যপুত্র কি অবহেলা করিতেছেন? (ঙ)

विदू। अह देवीए एव्व किदप्पणिव्विसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिगहिदुं इदि। [अथ देव्या एव कृतात्म-निर्विशेषां दत्तदेवीशब्दां मालविकामत्रभवान् प्रतिग्रहीतुमिच्छति।] (ज)

देवी। एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवीसद्दो। किं पुणरुत्तेण? [एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः। किं पुनरुक्तेन?] (झ)

---

(ज) विशेषः भेदः तस्य अभावो निर्विशेषम् अव्ययीभावसमासः। कृतं आत्मना सह निर्विशेषं यस्या तथाभूतां, दत्तः आरोपितः देवीशब्दः वाच्यतया देवीति आनुपूर्व्वीविशिष्टवर्णाः यत्र तथाभूताम्, अत्रभवान् माननीयो राजा प्रतिग्रहीतुं त्वत्तः प्रतिग्रहं कर्त्तुम् इच्छति, नतु अदत्तदेवीशब्दाम् अकृतात्मनिर्विशेषाञ्च इति भावः। अथवा त्वं यतः इमाम् आत्मनो निर्विशेषेण पश्यसि देवीयोग्यताञ्च लम्भयसि अतएव राजा गृह्णाति इति धारिण्यामादरातिशयप्रकाशकं वचनम्।

(झ) एतस्या राजदारिकाया राजकुमार्य्या मालविकायाः अभिजनेन कौलीन्येनैव देवीशब्दः राज्ञीशब्दश्च दत्तः, तथाहि अस्या अभिजनानुगुणतया देवीशब्द एवात्र युज्यते इति भावः। राजदारिकापदेन मालविकाया उल्लेखः तदीयाभिजनसूचक इति न साधारण्यबोधात् क्लेहानिः। किं पुनरुक्तेन पुनः तस्य आवृत्त्या किं फलम् अपितु न किमपि, तथाहि मम उक्तिमपेक्ष्य अलं देवीशब्दभाजनं स्वयमेवेयं जाता तद्गृह्यताम् आर्य्यपुत्रेण इति भावः।

---

বিদূ। ওগো এইরূপই লোকের রীতি। সকল নূতন বরই লজ্জাতুর হয়। (চ)

রাজা। (বিদূষকের দিকে দৃষ্টি করিলেন।) (ছ)

বিদূ। দেবীশব্দ প্রদান করিয়া রাজ্ঞীই মালবিকাকে নিজের সমান করার পর ইনি উঁহাকে গ্রহণ করিতে ইচ্ছা করেন। (জ)

परि। मा मैवम्। (ञ)

अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः।
जातरूपेण कल्याणि स हि संयोगमर्हति ॥१८॥

[ अन्वयः। कल्याणि ! आकरसमुत्पन्नः अपि सः रत्नजातिपुरस्कृतः जातरूपेण हि संयोगम् अर्हति। १८ ]

देवी। (स्मृत्वा।) भविस्सिदु भअवदी। अब्भुदअकहाए पढमं अवगुण्ठणं वसणं णालक्खिदं। जअसेणि ! गच्छ दाव पत्तोसं

(ञ) एवम् उक्तरूपं मा मा निषेधातिशये द्विरुक्तिः। कथय इति शेषः।

१८। निषेधे हेतुमाह—अप्याकरेत्यादिना। हे कल्याणि ! आकरात् खनिस्थानात् समुत्पन्नः जातः अपि सः सुप्रशस्तः, प्रसिद्धार्थे तच्छब्दः अतो न यच्छब्दापेक्षा। रत्नजातिषु मणिजातिषु पुरस्कृतः प्रधानतां नीतः, मणिप्रधानमित्यर्थः। जातरूपेण स्वर्णेन सम्भूतेन रूपेण च संयोगं समागमम् अर्हति। तथाहि खनिजातस्य मणेः सुवर्णसमागम इव उच्चवंशसम्भूताया अस्या मालविकाया अपि राजसमागमः सुतरां प्रशस्तिं धत्ते इति भावः। अत्रायमभिप्रायः यथा—हे देवि ! तवैव शापत्वाग्रून्यतया अद्य मालविका राजपरिग्रहत्वमाप्तुं युज्यते, अन्यथा यदि त्वमत्र असम्मतिं वहेयास्तदा कौलीन्यं नास्याः किं क्रियेत इति। अत्र अप्रस्तुतमणिकाञ्चनयोगप्राशस्त्यवर्णनेन प्रस्तुतराजमालविका-समागमप्राशस्त्यप्रतिपादनात् अप्रस्तुतप्रशंसालङ्कारः।

(ट) मर्षयतु क्षमां कुरुताम्, अभ्युदयस्य पुत्रसम्बन्धिनो विजयस्य कथया वार्तया पुत्रविजयमहोत्सवानन्देन इत्यर्थः। प्रथमम् अवगुण्ठनम् अवगुण्ठनसाधनं वसनं वस्त्रं

দেবী। এই রাজকন্যার উচ্চবংশই ইহাকে দেবী-পদ দান করিয়াছে, পুনরায় সে কথার কি প্রয়োজন ? (ঝ)

পরি। না, না। (ঞ)

খনিতে উৎপন্ন হইলেও রত্নসমূহের মধ্যে শ্রেষ্ঠ মণিতে ( শোভা বৃদ্ধির জন্য ) স্বর্ণসংযোগের প্রয়োজন হয়। ॥১৮॥

उवणेहि। [मर्षयतु भगवती। अभ्युदयकथया प्रथमम् अवगुण्ठनं वसनं नालक्षितम्। जयसेने! गच्छ तावत् पत्रोर्णमुपनय।] (ट)

प्रती। जं देवी आणवेदि। (इति निष्क्रम्य पत्रोर्णं गृहीत्वा पुनःप्रविश्य।) देवि! एदं। [यद्देवी आज्ञापयति। देवि! एतत्।] (ठ)

देवी। (मालविकामवगुण्ठनवतीं कृत्वा।) अज्जउत्तो दाणिं इमं पड़िच्छदु। [आर्य्यपुत्र! इदानीमिमां प्रतीच्छतु।] (ड)

राजा। त्वच्छासनं प्रत्यनुरक्ता वयम्। (अपवार्य्य।) हन्त! प्रतिगृहीता। (ढ)

---

न आलक्षितं स्मृतं, तदानीन्तु विस्मृतमित्यर्थः। तद्विस्मरणजनितापराधं मे मर्षयतु भवती इत्यर्थः। पत्रोर्णं कौषेयवसनम् उपनय उपस्थापय अवगुण्ठनसाधनाय इति शेषः।

(ठ) एतत् त्वया कथितं पत्रोर्णम् आनीतमिति शेषः।

(ड) अवगुण्ठनवतीं पत्रोर्णेन अवगुण्ठितां, परिणयोन्मुख्याः कुमार्य्याः अवगुण्ठनाचारात् तथा करणम्। इदानीं विवाहोपयोगिषु कुलनार्य्या अवगुण्ठनादिव्यापारेषु निष्पन्नेषु सत्सु इत्यर्थः। इमां मालविकां प्रतीच्छतु परिग्रहत्वेन परिगृह्णातु।

(ढ) तव शासनम् आदेशं प्रति वयं सर्वे एव अनुरक्ताः अनुरागवन्तः, बहुवचनं राज्ञः सर्वेषाञ्च परिजनानां वश्यताप्रतिपादनेन राज्ञ्या गौरवातिशयमुद्भावयितुम्।

---

দেবী। (স্মরণ করিয়া) ভগবতী ক্ষমা করুন। সুখের কথায় প্রথমে অবগুণ্ঠন বস্ত্রের বিষয় লক্ষ্য করি নাই। জয়সেন! যাও, শীঘ্র ধৌত কৌষেয় বসন আনয়ন কর। (ট)

প্রতী। দেবী যেরূপ আদেশ করেন, (প্রস্থান ও ধৌত কৌষেয় বসন লইয়া পুনঃ প্রবেশ করিয়া) দেবি, এই যে। (ঠ)

विदू। अह्महे ! देवोए अणुजलदा धारिणीए। [ अहो ! देव्या अनुकूलता धारिण्याः। ] (ण)

[ देवी परिजनमवलोकयति। ] (त)

परिजनः। (मालविकामुपेत्य।) जेदु जेदु भट्टिणी। [ जयतु जयतु भट्टिनी। ] (थ)

---

तथाहि तवादेशादेषा गृह्यते इति एतेन मालविकां प्रति आत्मनो भूयान् अनुरागो धारिण्याः समीपे प्रच्छाद्यते। हन्त हर्षातिशये, प्रतिगृहीता परिग्रहरूपेण एषा मालविका इति शेषः। लज्जावशात् अपवार्य्य उक्तम्।

(ण) अहो आश्चर्य्यं, देव्या धारिण्याः अनुकूलता अनुकूलक्रियाप्रवृत्तिः, तथाहि दुर्लभमिदमन्यासु रमणीषु स्वयमेव सपत्नीकरणादिति भावः।

(त) परिजनं परिवारान् अवलोकयति तं प्रति चक्षुः पातयति, अवलोकनहेतुश्च मालविकामिदानीं यथोचितराज्ञीजनयोग्येन व्यवहारेण अभ्यर्थयस्व इत्यभिप्रायः।

(थ) भट्टिनीति "देवी कृताभिषेकायामितरासु च भट्टिनी"ति नियमेन मालविकायाः अभिषेकस्य अजातत्वात् भट्टिनीशब्देन निर्द्देशः।

---

দেবী। ( মালবিকাকে অবগুণ্ঠনবতী করিয়া ) আর্য্যপুত্র ! এখন ইহাকে গ্রহণ করুন। (ড)

রাজা। আমি তোমার আদেশের অনুবর্ত্তী। (অপবারণ করিয়া) এই গ্রহণ করিলাম্। (ঢ)

বিদূ। অহো ! দেবী ধারিণীর কি উদরতা ! (ণ)

দেবী। ( পরিজনবর্গের দিকে দৃষ্টিপাত করিলেন )। (ত)

পরিজনবর্গ। ( মালবিকার নিকটে যাইয়া ) রাণীর জয় হউক, জয় হউক। (থ)

[ देवी परिव्राजिकां निरीचते । ] (द)

परि । देवि ! नैतच्चित्रं त्वयि । (ध)

प्रतिपचेणापि पतिं सेवन्ते भर्त्तृवत्सलाः साध्व्यः ।
अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम् ॥१९॥

[ अन्वयः । भर्त्तृवत्सलाः साध्व्यः प्रतिपक्षेण अपि पतिं सेवन्ते । समुद्रगाः अन्यसरितामपि जलम् उदधिं प्रापयन्ति । १९ । ]

---

(द) आत्मनैव आत्मनः सपत्न्याः विधानात् औदार्य्यविज्ञापनार्थमिव परिव्राजिकां पण्डितकौशिकीं निरीचते अवलोकयति ।

(ध) एतत् आत्मना आत्मनः सपत्नीविधानं त्वयि अत्युदारायां देव्यां त्वयीति व्यज्यते । न चित्रम् आश्चर्य्यकरं, तव इदं न विशेषेण अस्वाभाविकमिव प्रतिभातीति भावः ।

१९ । कथमित्याकाङ्क्षानिवर्त्तनाय सामान्यतः साध्वीचरितं प्रकाश्य वाचं प्रस्तौति— प्रतीत्यादिना । भर्त्तृवत्सलाः स्वामिस्नेहपरायणाः साध्व्यः पतिव्रताः रमण्यः प्रतिपक्षेण आत्मनः प्रतिकूलेन अपि वस्तुना पतिं स्वामिनं सेवन्ते आराधयन्ति, तथाहि पतिव्रताः स्वामिसन्तोषमेव सर्वार्थं मन्यमानाः आत्मनो हितमहितं वा विवेचयितुं न पारयन्ति, अतएव त्वया पतिव्रतया स्वामिनो हृदयगतं वस्तु आत्मनः प्रतिकूलमपि सम्पाद्य पतिव्रतोचितं चरितमुद्भासितमिति भावः । तमेवार्थं दृष्टान्तेन द्रढयति—अन्येत्यादिना । समुद्रं गच्छन्ति याः ताः समुद्रमुखमभिप्रस्थिताः सरितः अन्यसरिताम् अपरासामपि नदीनां जलम् उदधिं समुद्रं प्रापयन्ति नयन्ति, अत्र पतिव्रतायाः प्रतिपक्षेण पतिसेवनमिव समुद्रगायाः सरितः अन्यसरितो जलस्यापि समुद्रे प्रस्थापनमिति विम्बानुविम्बभावप्रत्ययात् दृष्टान्तालङ्कारः । केचित्तु समुद्रगाणां सरितां नायिकाव्यवहारस्य उदधेश्च

---

( দেবী পরিব্রাজিকাকে অবলোকন করিলেন ) । (দ)

পরি । দেবি ! তোমাতে ইহা বিচিত্র নহে । (ধ)

( प्रविश्य निपुणिका । ) जेदु भट्टा । इरावदी विण्णवेदि—जं उवआरादिक्कमेण तदा भट्टिणो अवरद्धा, तं सअं एव्व भत्तुणो अणुऊलं णाम आअरिदं । संपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण संभावइदव्वे त्ति । [ जयतु भर्त्ता । इरावती विज्ञापयति—यदुपचारातिक्रमेण तदा भर्त्तुरपराद्धा, तत् स्वयमेव भर्त्तुरनुकूलं नाम मया आचरितम् । साम्प्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण सम्भावयितव्येति । ] (न)

---

पतिव्यवहारस्य अन्यसरिताञ्च सपत्नीव्यवहारस्य प्रत्ययात् समासोक्तिलिङ्गहेतुका, तन्मूलश्च अर्थान्तरन्यास एव विशेषेण सामान्यसमर्थनरूपः । अत्र पतिशब्दस्य रक्षण-कर्त्तृपरत्वात् भर्त्तृशब्दस्य च पोषणपरत्वात् वात्सल्यं सेवाञ्च प्रति हेतुत्वदर्शनाय तत्पदापन्यासात् वैचित्र्याधायकत्वेन दोषाभरणम् । उदधेर्जलाश्रयत्वयोग्यतया तत्र जलप्रस्थापनमुचितमिति औचित्यप्रकाशनाय उदधिपदम्, याः सरितः समुद्रं प्रति गच्छन्ति तासां "सरन्ति" इति व्युत्पत्तिप्रतिपाद्यार्थभूतनदीनां साहचर्य्यं युक्तमिति प्रतिपत्तये च तत्तत्पदाभिधानं सार्थकमेव तदनिवेशे तादृशार्थवैचित्र्यहानिसम्भवात् न प्रकृते दोषलेशस्पर्शोऽपि । अनुरूपश्लोको यथा माघकवेः "महात्मानोऽनुगृह्णन्ति भज-मानान् रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगा"इति । आर्य्या जातिः ।

(न) यत् यस्मात् उपचारस्य अभ्यर्थनस्य भवत्सम्मानरक्षणस्य इत्यर्थः । अतिक्रमेण उल्लङ्घनेन, तदा भवता प्रस्तुतस्य रोषनाशहेतोरनुनयस्य काले भट्टिनी इरावती अपराद्धा कृतापराधा, तत् तस्मात् स्वयमेव आत्मप्ररोचनया एव नतु परस्य कस्यापि उपदेशेन इति भावः । भर्त्तुः स्वामिनः तव अनुकूलं मनस्तुष्टिविधायकं वस्तु मालविकायास्त्वयि

---

পতির প্রতি অনুরক্তা সাধ্বীগণ প্রতিদ্বন্দ্বি-(সপত্নী)দিগের সহিতও পতির সেবা করেন। সমুদ্রগামিনী নদীসকল অপর নদীর জলও সমুদ্রের সহিত সম্মিলিত করিয়া দেয় ॥১৯॥

দেবী। ণিউণিএ ! অবস্সং সে সেবিদং অজ্জউত্তো জাণিস্সদি ।
[ নিপুণিকে ! অবশ্যমস্যাঃ সেবিতমার্য্যপুত্রো জ্ঞাস্যতি । ] (প)

নিপু। অণুগিহীদম্হি। [ অনুগৃহীতাস্মি । ] ইতি নিষ্ক্রান্তা। (ফ)

---

প্রতিপাদনরূপম্ আচরিতং সম্পাদিতং দেব্যা অভিমতপ্রদানেন ইতি ভাবঃ। সাম্প্রতং মালবিকায়াঃ প্রতিপাদনে সম্পন্নে সতি পূর্ণমনোরথেন সফলকার্মেন ভর্ত্রা স্বামিনা, প্রসাদমাত্রে ণ অনুগ্রহমাত্রেণ নতু পূর্ব্ববৎ সাতিশয়প্রণয়েনাপি তৎপ্রণয়ে সম্প্রতি নব-পরিণীতায়া এব অধিকারাদিতি ভাবো ব্যজ্যতে, সম্ভাবয়িতব্যা সংবর্দ্ধনীয়া, তথাহি তদানীন্তনীম্ উপচারলঙ্ঘনজন্যামসন্তুষ্টিং পরিহায় অস্মাসু মানসং প্রসাদং ব্যবস্থাপয়েয়া ইতি ভাবঃ।

(প) অস্যাঃ ইরাবত্যাঃ সেবিতম্ অনুনয়াতিশয়ম্ অবশ্যং নিশ্চিতমেব আর্য্যপুত্রঃ জ্ঞাস্যতি গ্রহীষ্যতি, তথাহি আর্য্যপুত্রঃ অস্যা অনেনানুনয়েন পূর্ব্বকৃতমুপচারাতিক্রমং বিস্মৃত্য যথাপূর্ব্বমস্যাং প্রসাদং স্থাপয়িষ্যত্যেব। এতচ্চ রাজ্ঞঃ প্রস্তুতে বিষয়ে প্রবর্ত্তনায় ইরাবত্যাঃ প্রবোধনায় চ নিপুণিকামুদ্দিশ্য দেব্যা বচনম্।

(ফ) অনুগৃহীতা কৃতপ্রসাদা অস্মি অহমিতি শেষঃ। স্বীয়ায়াঃ ভর্ত্র্যাঃ অনুগ্রহেণ এব আত্মনি অনুগ্রহঃ স্যাৎ পরিজনানাং ভর্ত্তৃজনসুখদুঃখভাগিত্বনিয়মাৎ।

---

( নিপুণিকার প্রবেশ )

নিপু। মহারাজের জয় হউক। ইরাবতী নিবেদন করিতেছেন যে, আমি সেই সময়ে শিষ্টাচার লঙ্ঘন করিয়া প্রভুর নিকট অপরাধ করিয়াছি। সেই জন্য সম্প্রতি দেবীর মনোমত কার্য্য সম্পাদনে মহারাজের মনস্তুষ্টি করিলাম ; এখন পূর্ণমনোরথ মহারাজ মাত্র প্রসন্নচিত্তে যেন আমাকে সংবর্দ্ধিত করেন। (ন)

দেবী। নিপুণিকে ! অবশ্যই আর্য্যপুত্র ইহার আনুগত্য স্মরণ রাখিবেন। (প)

परि। देव! अमुना युक्तसम्बन्धेन चरितार्थं माधवसेनं सभाजयितुं गच्छामः। (ब)

देवी। भअवदोए ण जुत्तं अह्मे परिच्चत्तुं। [भगवत्या न युक्तमस्मान् परित्यक्तुम्।] (भ)

राजा। भगवति! मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनाचराणि पातयिष्यामः। (म)

---

(ब) अमुना इदानीमेव सम्पन्नेन युक्तेन सुयोग्येन परस्परयोः समुचितेन सम्बन्धेन मालविकाग्निमित्रयोः परिणयरूपेण चरितार्थं कृतकृत्यं तथापि अस्मिन्नेव विषये सातिशयाभिलाषात् इति भावः। अथवा युक्तसम्बन्धेन यज्ञसेनमाधवसेनयोः अर्द्धराज्यनिष्पादनतः सञ्जातेन केनचित् सम्पर्कान्तरेण,अथवा अमुना युक्तसम्बन्धेन मालविकायाः राज्ञा परिणयेन उत्पन्नो यः परस्परं श्यालभगिनीपतिसम्बन्धः तेन। सभाजयितुं प्रीणयितुं गच्छामः वयमिति शेषः। 'वास्मद'येति बहुवचनमिति। तथाहि अत्र युष्माकं कोऽभिप्रायः इति प्रश्नो व्यज्यते।

(भ) परित्यक्तुं परित्यज्य गन्तुं न युक्तं न उचितं, तथाहि भवत्याः गमने नास्ति मम अभिमतमिति भावः।

(म) मदीयेषु मया तत्र प्रेषयितव्येषु। लेखेषु पत्रेषु त्वाम् उद्दिश्य तवैव तत्-प्रयोगकारित्वं निवर्ण्य तत्रभवतः माननीयस्य माधवसेनस्य सभाजनाचराणि प्रीतिज्ञापक-वाक्यानि पातयिष्यामः लेखिष्यामः। तत् कथमिव गन्तुमिच्छति भवतीति भावः।

---

निपु। अनुगृहीত হইলাম। (এই বলিয়া নিক্রান্তা হইল)। (ক)

পরি। মহারাজ! এই সমুচিত সম্বন্ধ দ্বারা পূর্ণকাম মাধবসেনকে সম্বর্দ্ধনা করিতে যাইব। (ব)

দেবী। আমাদিগকে পরিত্যাগ করা ভগবতীর উচিত নহে। (ভ)

परि । **युवयोः स्नेहात् परवानयं जनः । (य)**

देवी **आणवेदु अज्जउत्तो—भूओवि दे किं पिअं उवहरिस्सं ?**

[ आज्ञापयतु आर्य्यपुत्रः—भूयोऽपि ते किं प्रियमुपहरिष्यामि ? ] (र)

राजा । **मम एतावदेव प्रियम् । (ल)**

—o—

भरतवाक्यम् । (व)—

---

(य) अयं मत्स्वरूपो जनः, युवयोः राज्ञस्तव देव्याश्च धारिण्याः, स्नेहात् प्रणयात् एतावत्कालीन उपचितात् प्रणयविशेषादित्यर्थः । परवान् पराधीनः तन्नाल्पमपि प्रणयमुच्छिद्य गन्तुमर्हैव वसेयमिति भावः ।

(र) भूयः अपि पुनरपि मालविकां तव आर्य्यापदे प्रतिष्ठाप्य कृतमेकं प्रियम्, अतः-परं किं प्रियं प्रीतिजनकं वस्तु उपहरिष्यामि उपहाररूपेण तव उपनेष्यामि इत्यर्थः ।

(ल) मम एतावत् एतन्मात्रमेव तावत् सर्व्वं प्रियं प्रीतिजनकं वस्तु, तथाहि अनेनैव मम सर्वप्रियवस्तुलाभजन्यः सन्तोषः प्रादुर्भूत इति भावः ।

(व) भरतवाक्यमिति आदौ यथा नटेन नान्दी कर्त्तव्या तथा अन्तेऽपि सभ्यादीनां मङ्गलाशंसनं कर्त्तव्यम्, अतएव भरतवाक्यमित्युक्ता नटकृतत्वं प्रकृतस्य प्रत्यायितम् ।

---

রাজা। ভগবতি! আমার পত্রেই আপনার হইয়া তাঁহার নিকট সংবর্দ্ধনাবাক্য লিখিয়া দিব। (ম)

পরি। আপনাদের উভয়ের স্নেহে আমি বশীভূত হইয়া পড়িয়াছি। (য)

দেবী। আর্য্যপুত্র! আদেশ করুন, আপনার আর কি প্রিয় অনুষ্ঠান করিব? (র)

রাজা। আমার ইহাই যথেষ্ট প্রিয় অনুষ্ঠান। (ল)

—o—

ভরতবাক্য। (ব)—

त्वं मे प्रसादसुमुखीभव देवि नित्य-
मेतावदेव मृगये प्रतिपक्षहेतोः।
आशास्यमभ्यधिगमात् प्रभृति प्रजानां
संपद्यते न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥

[ अन्वयः। देवि! त्वं नित्यं मे प्रसादसुमुखीभव, प्रतिपक्षहेतोः एतावत् एव मृगये। अभ्यधिगमात् प्रभृति अग्निमित्रे गोप्तरि (सति) खलु प्रजानाम् आशास्यं न सम्पद्यते (इति) न। ] ॥२०॥

---

२०। राजवचनप्रक्रमेण राज्ञ एव धारिणीं प्रति वचनमिदम्, पक्षे च भरतस्य देवीं गौरीमुद्दिश्य मङ्गलभिक्षा इति। प्रथमकल्पो यथा—हे देवि राज्ञि धारिणि! त्वं नित्यं सर्वदा एव मे मम सम्बन्धे प्रसादेन सन्तोषेण सुमुखी प्रसन्नानना भव, न कदापि मयि अभिमानादिवशेन वैमुख्यमवलम्बेथा इति भावः। प्रतिपक्षस्य प्रसाद-विरुद्धस्य अप्रसादस्य हेतोः निवृत्तये एतावदेव एतन्मात्रमेव नान्यत किमपि इति भावः। मृगये प्रार्थये। ननु त्वं राजा तव एतावन्मात्रस्य प्रार्थनायां राजगुणा व्याहन्यन्ते राज्ञा, प्रजामङ्गलस्यैव आशास्यत्वादित्याकाङ्क्षां निवर्त्तयितुमाह—आशास्यमित्यादि। अभ्यधिगमात् प्रभृति राज्यप्राप्तिमारभ्य अग्निमित्रे मयि गोप्तरि रक्षितरि सति प्रजानाम् आशास्यम् अभिलषणीयं किमपि न सम्पद्यते न सम्पन्नं भवति इति न, अपितु सर्वमेव तासामाशास्यं सम्पद्यते, अतो तत्सम्बन्धे किमपि न आशास्यमिति भावः। निजप्रियायाः धारिण्याः समीपे आत्मगर्वप्रकाशकवाक्यप्रस्तावो न दोषाय राज्ञः। देवीपक्षे च—हे देवि, दुर्गे! त्वं नित्यं मे मम सम्बन्धे प्रसादसुमुखी अनुग्रहवशात् प्रसन्नमुखी भव। प्रतिपक्षाणां बाह्यानाम् आभ्यन्तराणाञ्च रिपूणां हेतोः तन्निराकरणाय इत्यर्थः। एतावदेव एतन्मात्रमेव मृगये, त्वत्प्रसादस्यैव रिपुनिवर्हणसाधनत्वात् नान्यत काम्यमस्तीति भावः। अभ्यधिगमात् राज्यप्राप्तेः प्रभृति अग्निः यागसाधनीभूतो वह्निः मित्रं सततं सहायः यस्य तथाभूते अभिनवकालीने कस्मिंश्चित् राजनि गोप्तरि पृथ्वीपालके सति प्रजानां तस्य राज्ञो राज्यस्थानां जनानाम् आशास्यम् अभिलषितं न सम्पद्यते इति न अपितु



ইতি নিষ্ক্রান্তাঃ সর্ব্বে । (শ)

## ইতি পঞ্চমোঽঙ্কঃ । (ষ)

---

সম্পদ্যতে এব । অতএব তত্সম্বন্ধে ন তবান্তিকে প্রার্থনা প্রয়োজনীয়া অপি তু তব প্রসাদমাত্রমেব অভ্যর্থনীয়মিতি ভাবঃ । এতাবদেব ইত্যনেন বস্ত্বন্তরব্যবচ্ছেদাত্ পরিসংখ্যালঙ্কারঃ । উভয়ার্থস্যৈব প্রকৃতত্বাত্ শক্ত্যর্থাধিগমেন শ্লেষঃ । প্রকৃতিপ্রজানামিত্যত্র প্রদ্বয়স্য আবৃত্ত্যা ছেকানুপ্রাসঃ । বসন্ততিলকা বৃত্তম্ । অথ নির্ব্বহণসন্ধিঃ । গুপু রক্ষণে ইত্যস্য তৃচি প্রত্যয়ে বিকল্পেন স্বার্থিকপ্রত্যয়বিধানাত্ ন আয়প্রত্যয়ঃ, অতএব গোপ্তরি ইতি উপপদ্যতে ।

(শ) সর্ব্বে রাজপ্রভৃতয়ঃ, নিষ্ক্রান্তাঃ রঙ্গাত্ বহির্গতাঃ । অস্য অঙ্কান্তত্বাত্ সর্ব্বপাত্রাণাং নিষ্ক্রমণস্য "অঙ্কনিষ্ক্রান্তনিখিলপাত্রোঽঙ্ক ইতি কীর্ত্তিত" ইতি নিয়মাবেদিতত্বাত্ ।

(ষ) ইতি অবসানসূচকমিদমব্যয়ম্, ইতি এতদন্ত ইত্যর্থকো বা । পঞ্চমাঙ্কঃ পঞ্চসংখ্যাপূরকঃ অঙ্কঃ নাটকীয়পরিচ্ছেদবিশেষঃ । অঙ্কলক্ষণমুক্তং প্রাক্, "পঞ্চাদিকা দশপরাস্তত্রাঙ্কাঃ পরিকীর্ত্তিতা" ইতি নিয়মেন পঞ্চাঙ্কাত্মকস্যাস্য নাটকত্বমব্যাহতম্ । ইতি শম্ ।

ইতি শ্রীগুরুনাথ বিদ্যানিধিকৃতে মালবিকাগ্নিমিত্রব্যাখ্যানে

বিজয়াখ্যানে পঞ্চমোঽঙ্কঃ ॥৫॥

---

দেবি ! তুমি সর্ব্বদা আমার প্রতি প্রসন্ন থাক, তোমার যাহাতে অসন্তোষ না আসে, এইজন্য ইহাই মাত্র প্রার্থনা করি যে, রাজ্যলাভ অবধি অগ্নিমিত্রের শাসনকালে প্রজাদিগের প্রার্থনাও যেন অপূর্ণ থাকে না । ॥২০॥

সকলের প্রস্থান । (শ)

পঞ্চম অঙ্ক সমাপ্ত । (ষ)

মহাকবি কালিদাস-প্রণীত মালবিকাগ্নিমিত্রনামক নাটক সমাপ্ত ॥০॥